अ(नञ्) + ✓च्युङ् – गतौ + क्तः प्रत्ययः > अच्युत + ✓क्षि – निवासगत्योः + क्विप् प्रत्ययः ।

## अ-च्युतच्युत्

योऽच्युतेषु च्यवते ताँश्च्यावयति ।

– ऋ०, २/१२/९

योऽच्युतमचलन्तं च्यावयति ।

– ऋ०, ६/१८/५

अच्युत + ✓च्युङ् – गतौ + क्विप् प्रत्ययः ।

## अ-जः

अजति प्रकाशं प्रक्षिप्य द्योतयति ।

– ऋ०, १/२३/१३

यः परमात्मा कदाचिन्न जायते सः ।

– ऋ०, १/६७/३

न जायते यः सः । – ऋ०, १/१६२/२

न जायते कदाचित् सः । – ऋ०, २/३१/६

यः कदाचिन्न जायते जगदीश्वरः ।

– ऋ०, ६/३५/१३

यः कदाचिन्न जायते स ईश्वरः ।

– ऋ०, ६/५०/१४

यः कदाचिन्न जायते । – यजु०, ५/३३

यो न जायते सः । – यजु०, ३४/५३

योऽजति सृष्टिं प्रति सर्वान् प्रकृत्यादीन् पदार्थान् प्रक्षिपति जनयति कदाचिन्न जायते सोऽजः । – स० प्र० प्रथम समुल्लासः

१- अ (नञ्) + ✓जनी – प्रादुर्भावे + डः प्रत्ययः (अन्येष्वपि दृश्यते – अष्टा०, ३/२/१०१) ।

२- ✓अज – गतिक्षेपणयोः + अच् प्रत्ययः (नन्दिग्रहिपचादिभ्योल्युणिन्यचः – अष्टा०, ३/१/१३४) ।

## अजकावं

योऽजान् जीवान् कावयति पीडयति तम्।

– ऋ०, ७/५०/१

अज + ✓कु – शब्दे हिंसार्थे च + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१) ।

## अजातिः

समन्ताज्जातिर्जननं यस्मिन् कुले तत् ।

– ऋ०, ५/२/५

आङ् > अ – समन्तात् + ✓जनी – प्रादुर्भावे + क्तिन् प्रत्ययः स्त्रियाम् ।

## अजिः

अनक्ति व्यनक्ति कार्यमिति अजिः प्रेषणकर्त्ता वा । – उ०को०, ४/१४०

✓अज – गतिक्षेपणयोः + इः प्रत्ययः (खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च – उ०को०, ४/१४०) ।

## अजिनं

अजति गच्छति क्षिपति वा तत् अजिनं चर्म वा । – उ०को०, २/४८

✓अज – गतिक्षेपणयोः + इनच् प्रत्ययः (अजेरज च – उ०को०, २/४८) ।

## अजिरं

अजन्ति गच्छन्ति यत्र तत् अजिरं अङ्गनं गृहाग्रभागः । – उ०को०, १/५३

✓अज – गतिक्षेपणयोः + किरच् प्रत्ययः (अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः – उ०को०, १/५३) ।

## अज्रान्

येऽजन्ति नित्यङ्गच्छन्ति तान् ।

– ऋ०, ४/१९/७

(द्वि०ब०व०) – ✓अज – गतिक्षेपणयोः + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## अज्मं

अजन्ति प्रक्षिपन्ति शत्रून् यस्मिंस्तत्र ।

– ऋ०, १/११२/१७

अजन्ति गच्छन्ति यस्मिन्मार्गे तत् ।

– ऋ०, ३/२/१२

अजन्ति गच्छन्ति येषु सङ्ग्रामेषु ।

– ऋ०, ५/८७/७

अजन्ति गच्छन्ति यस्मिन्तं मार्गम् ।

– यजु०, २९/२१

✓अज – गतिक्षेपणयोः + मन् प्रत्ययः (अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०) ।

## अञ्चतिः

अञ्चति गच्छति पूजयति वा स अञ्चतिः वायुर्वा । – उ०को०, ४/६१

✓अञ्चु – गतिपूजनयोः + अतिः प्रत्ययः । (अञ्चेः को वा – उ०को०, ४/६१) ।

## अञ्जलिः

अनक्ति व्यक्तं करोतीति अञ्जलिः संयुतौ करौ वा । – उ०को०, ४/२

✓अञ्चु – गतिपूजनयोः + अलिच् प्रत्ययः (ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यःकतिच्य-तुजलिजिष्णुजिष्ठजिसन्स्यनिथिन्नुल्यसासानुकः – उ०को०, ४/२) ।

## अञ्जिष्ठः

अनक्ति प्रकटयति पदार्थानिति अञ्जिष्ठः सूर्यो वा । – उ०को०, ४/२

✓अञ्चु – गतिपूजनयोः + इष्ठच् प्रत्ययः (ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यःकतिच्य-तुजलिजिष्णुजिष्ठजिसन्स्यनिथिन्नु ल्यसासानुकः – उ०को०, ४/२) ।

## अटविः

वाति वायुवद् गच्छतीति विः पक्षी वा। अटन्ति वयोऽस्यामिति अटविः नगरी ।

– उ०को०, ४/१३४

✓अट – गतौ + अच् प्रत्ययः > अट + विः पक्षीनाम (वातेर्डिच्च – उ०को०, ४/१३४) ।

## अणुः

अणति शब्दयतीति अणुः अतिसूक्ष्मं वा। अणन्ति शब्दायन्ते यैस्तेऽणवोऽन्नविशेषा वा । – उ०को०, १/८

✓अण – शब्दार्थः + उः प्रत्ययः (अणश्च – उ०को०, १/८) ।

## अण्डः

अमन्ति संप्रयोगं प्राप्नुवन्ति येन स अण्डः प्राण्यङ्गावयवो वा । – उ०को०, १/११४

✓अम – गत्यादिषु + डः प्रत्ययः (जमन्ताद् डः – उ०को०, १/११४) ।

## अतसः

अतति निरन्तरं गच्छतीति अतसः वायुर्वा।

– उ०को०, ३/११७

✓अत – सातत्यगमने + असच् प्रत्ययः (अत्यविच-मितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् – उ०को०, ३/११७) ।

## अ-तमेरुः

न ताम्यति यः स यज्ञकर्त्ता मनुष्यः ।

– यजु०, १/२३

अ (नञ्) + ✓तमु – कांक्षायां + एरु प्रत्ययः ।

## अतिथिः (अ-तिथिः)

न विद्यते नियता तिथिर्यस्य तम् ।

– ऋ०, १/५८/६

अतति निरन्तरं गच्छति भ्रमतीति अतिथिः अकस्मादागतः सज्जनो वा । न विद्यते नियता तिथिरस्येति । – उ०को०, ४/२

१- ✓अत – सातत्यगमने + इथिन् प्रत्ययः (ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः-

कलिच्युतुजलिजिष्णुजिष्ठजिसन्स्यनिथिन्नु ल्यसासानुकः – उ०को०, ४/२)।

२- अ ( नञ् ) + तिथिः > अ-तिथिः ।

## अतिथिग्वं

योऽतिथीन् गच्छति गमयति येन वा तम्।

– ऋ०, १/५३/१०, ४/२६/३

योऽतिथीन् गच्छति तम् ।

– ऋ०, ६/१८/१३

✓अत – सातत्यगमने + इथिन् प्रत्ययः ( ऋतन्यञ्जि-वन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यःकलिच्युतुजलिजिष्णु-जिष्ठजिसन्स्यनिथिन्नु ल्यसासानुकः – उ०को०, ४/२ ) अतिथि + ✓गम्लृ – गतौ + ड्व प्रत्ययः । अथवा अ( नञ् ) + तिथिः अ – तिथिः ।

## अतिपारयः

योऽत्यन्तं पारयति सः । – ऋ०, ६/४७/६

अति + ✓पार – कर्मसमाप्तौ + शः प्रत्ययः ( अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसा-तिसाहिभ्यः शः – अष्टा०, ३/१/१३८ ) ।

## अतिष्कद्वरीं

अतिशयेन या स्कन्दति जानाति ताम्।

– यजु०, ३०/१५

( द्वि०ए०व० ) अति + ✓स्कन्दिर् – गतिशोषणयोः + क्वरप् प्रत्ययः।

## अत्कं

अतति व्याप्नोति तं वायुम् ।

– ऋ०, ४/१६/१३

अतति निरन्तरं गच्छतीति अत्कः पथिकः शरीरावयवो वा । – उ०को०, ३/४३

✓अत – सातत्यगमने + कन् प्रत्ययः ( इण्भीकापाश-ल्यतिमर्चिभ्यः कन् – उ०को०, ३/४३ ) ।

## अत्नः

अतति निरन्तरं गच्छतीति अत्नः सूर्यो वा। – उ०को०, ३/६

✓अत – सातत्यगमने + नः प्रत्ययः ( धापृवस्य-ज्यतिभ्यो नः – उ०को०, ३/६ ) ।

## अत्यः

येऽतन्ति मार्गान् व्याप्नुवन्ति तान् ।

– ऋ०, १/१२६/४

अतति व्याप्नोतीति । – ऋ०, १/१४९/३

अतति व्याप्नोत्यध्वानमश्वम् ।

– ऋ०, ५/२५/६

अतति व्याप्नोति मार्गं सः ।

– ऋ०, ५/३०/१४

अतति व्याप्नोति तत्रभवम् ।

– ऋ०, ५/४४/३

अतन्ति सर्वत्र व्याप्नुवन्ति त आकाशादयः।

– ऋ०, ५/५६/२

अतति व्याप्नोत्यध्वानम् । – ऋ०, ६/२/८

येऽतन्त्यध्वानं व्याप्नुवन्ति ते ।

– ऋ०, ७/५६/१६

अतितुं व्याप्तुं योग्यम् । – यजु०, १२/४७

योऽतति सततं गच्छति सः ।

– यजु०, २२/१९

योऽतति व्याप्नोत्यध्वानम् सोऽश्वः ।

– यजु०, ३३/७५

✓अत – सातत्यगमने + यत् प्रत्ययः ( अघ्न्यादयश्च, – उ०को०, ४/११२ ) ।

## अत्रिः

अविद्यमानान्याध्यात्मिकादीनि त्रीणि दुःखानि यस्मिन् तस्मै सुखाय ।

– ऋ०, १/११९/६

अविद्यमानानि त्रीण्याध्यात्मिकाधि-भौतिकाधिदैविकानि दुःखानि यस्मिन् व्यवहारे तस्मै । – ऋ०, १/११९/७

न सन्ति त्रीणि भूतभविष्यद्वर्तमान-कालजानि दुःखानि यस्य तस्मै सर्वदा सुखसम्पन्नाय। – ऋ०, १/१८०/४

अविद्यमानत्रिविध दुःखः। – ऋ०, ७/७८/४

अत्ति भक्षयतीति अत्रिः पापं वा। अत्रिः मुनिभेदो वा । – उ०को०, ४/६८

१. अ (नञ्) + त्रिः > अत्रिः।

२. ✓अद् – भक्षणे + त्रिप् प्रत्ययः (अदेस्त्रिनिश्च – उ०को०, ४/६८)।

## अ-त्रिवत्

न विद्यन्ते त्रय आध्यात्मिकाधिभौतिकाधिदैविकास्तापा यस्य तद्वत्।

– ऋ०, १/४५/३

अ (नञ्) + ✓त्रि + वतिः प्रत्ययः तुल्यार्थे।

## अ-थर्यः

संशयरहितः। थर्वति संशेते यः स थर्य्यो न थर्य्योऽथर्यस्तत्सम्बुद्धौ। – यजु०, ३/३७

अ (नञ्) + ✓थर्व – गतिकर्मा, वर्णव्यत्ययेन वस्य यकारः।

## अ-दब्धासः

दम्भाहंकाररहिताः अनुपहिंसिताः।

– यजु०, ३/१८

(प्र०ब०व०) – अ (नञ्) + ✓दम्भु – दम्भने + क्त प्रत्ययः अवर्णान्तादङ्गादुत्तरस्य जसेरसुगागमः (आज्जसेरसुक् – अष्टा०, ७/१/५०)।

## अ-दाभ्यः

दभितुं हिंसितुं योग्यानि दाभ्यानि तान्यविद्यमानानि यस्य तत्संबुद्धौ।

– ऋ०, १/३१/१०

अ (नञ्) + ✓दभ्र – दम्भने + ण्यत् प्रत्ययः।

## अ-देवत्रात्

देवान् त्रायते यस्मात्तद्विरुद्धात्।

– ऋ०, ५/६१/६

(पं०ए०व०) अ (नञ्) + ✓दिवु – क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु + अच् प्रत्ययः > देव +✓त्रैङ् – पालने + कः प्रत्ययः।

## अ-दृष्टाः

ये न दृश्यन्ते ते विषधारिणो जीवाः।

– ऋ०, १/१९१/१

ये न दृश्यन्ते ते। – ऋ०, १/१९१/५

(प्र०ब०व०) – अ (नञ्) + ✓दृशिर्-प्रेक्षणे + क्त प्रत्ययः।

## अ-दृष्टहा

योऽदृष्टमन्धकारं हन्ति सः।

– ऋ०, १/१९१/८

यो गुप्तान् विषान् हन्ति सः।

– ऋ०, १/१९१/९

अदृष्ट + ✓हन् – हिंसागत्योः + डः प्रत्ययः (अन्येष्वपि दृश्यते – अष्टा०, ३/२/१०१)।

## अद्गः

अत्ति वाऽद्यते भक्ष्यतेऽसौ अद्गः पुरोडाशो वा। – उ०को०, १/१२३

✓अद् – भक्षणे + गन् प्रत्ययः (गन् गम्यद्योः – उ०को०, १/१२३)।

## अद्भुतं

अद् भवतीति अद्भुतम् आश्चर्यम्।

– उ०को०, ५/१

✓अद् – भक्षणे + ✓भू – सत्तायां + डुतच् प्रत्ययः (अदिभुवो डुतच् – उ०को०, ५/१)।

## अद्मनिः

अत्तीति अद्मनि अग्निर्वा।

– उ०को०, २/१०५

✓अद् – भक्षणे + अनिः प्रत्ययः मुडागमश्च (अदेर्मुद च – उ०को०, २/१०५)।

## अद्मसदः

योऽद्मानि सादयति परिपचति सः।

– ऋ०, १/१२४/४

योऽद्मसु भोक्तव्येषु सीदति।

– ऋ०, ६/४/४

येऽद्मस्तव्येषु सीदन्ति। – ऋ०, ६/३०/३

(प्र०ब०व०) ✓अद – भक्षणे + मनिन् प्रत्ययः>अद्म + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः।

## अद्रिः

यौ न द्रवतो विनश्यतः कदाचित्तौ।

ऋ० १/१०९/३

योऽत्ति अदन्ति यत्रेति वा स अद्रिः पर्वतो मेघो वृक्षः सूर्यो वा। – उ०को०, ४/६५

१. अ ( नञ् ) + ✓द्रु-गतौ + इन् प्रत्ययः ( सर्वधातुभ्य इन् - उ०को० ४/११८ )

२. ✓अद् – भक्षणे + क्रिन् प्रत्ययः ( अदिशदिभूशुभिभ्यः क्रिन् – उ०को०, ४/६५ ) ।

## अद्रिजाः

योऽद्रेर्मेघाज्जातः । – ऋ०, ४/४०/५

यो मेघपर्वतवृक्षादीन् जनयति सः ।

– यजु०, १०/२४

योऽद्रीन्मेघान् जनयति । – यजु०, ९२/१४

✓अद् – भक्षणे + क्रिन् प्रत्ययः ( आदिशदिभूशुभिभ्यः क्रिन् – उ०को०, ४/६५ ) > अद्रि + ✓जनी – प्रादुर्भावे + विट् प्रत्ययः ( जनसनखनक्रमगमो विट् – अष्टा०, ३/२/६७ ) ततः आत्वञ्च ( विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१ ) ।

## अद्रिजूतः

योऽद्रौ मेघे जवति सद्यो गच्छति ।

– ऋ०, ३/५८/८

अद्रि + ✓जू – ( सौत्रधातु ) तीब्रतायां गतौ + क्तः प्रत्ययः ।

## अधराचीः

योऽधोऽञ्चति तम् । – ऋ०, २/१७/५

या अधरान् नीचानञ्चन्ति ताः ।

– यजु०, १६/५

अधर + ✓अञ्चु – गतिपूजनयोः + ख प्रत्ययः।

## अधिष्ठानं

अधितिष्ठन्ति यस्मिन्निति तत् ।

– यजु०, ७/१३

अधि + ✓ष्ठा – गतिनिवृत्तौ + ल्युट् ( अन ) प्रत्ययः।

## अधिषवण्या

अधिगतं सुन्वन्ति याभ्यां ते अधिषवणी तयोर्भवे । – ऋ०, १/२८/२

अधि + ✓षुञ् – अभिषवे + ल्युट् ( अन ) प्रत्ययः।

## अ-ध्रिगवे

शत्रुभिरध्रयोऽसहमाना वीरास्तान् गच्छति प्राप्नोति तस्मै । – ऋ०, १/६१/१

योऽध्रीन्मन्त्रान् गच्छति जानाति तत्सम्बुद्धौ।

– ऋ०, ३/२१/४

योऽधृन्धारकान् गच्छन्ति तत्सम्बुद्धौ ।

– ऋ०, ५/१०/१

( च०ए०व० ) – अ ( नञ् ) + ✓धृङ् – अवध्वंसने + क्रिन् प्रत्ययः ( अदिशदिभूशुभिभ्यः क्रिन् – उ०को०, ४/६५ ) > अध्रि + ✓गाङ् – गतौ + कुः प्रत्ययः ( औणादिकः ) वर्ण व्यत्ययत्वात् कुः प्रत्ययस्य गुः, एतयोः पदयोः समासः ।

## अ-ध्रुक्

यो न द्रुह्यति । – ऋ०, ६/५/१

यः कदाचिन्न द्रोग्धि । – ऋ०, ६/५१/५

यः कञ्चन न द्रोग्धि । – ऋ०, ६/६२/४

अ ( नञ् ) + ✓द्रुह – अभिकांक्षायां + क्विप् प्रत्ययः ।

## अ-ध्वर्युः

यो अध्वरं यज्ञं युनक्ति तत्सम्बुद्धौ ।

– यजु०, २०/३१

अध्वरं यज्ञं यातीति अध्वर्युः याजकः ।

– उ०को०, १/३७

१. अ ( नञ् ) + ✓ध्वर – हिंसाकर्मा + ✓युजिर – योगे + क्युः प्रत्ययः, टिलोपश्च ।

२. अध्वर + ✓या प्रापणे + कु प्रत्ययः ( मृगय्वादयश्च – उ०को०, १/३७ ) ।

## अ-ध्वरकृतं

अध्वरं करोति येन सामग्रीसमूहेन तम् ।

– यजु०, १/२४

अध्वर + ✓डुकृञ् – करणे + क्विप् प्रत्ययः तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९)।

## अध्वा

अत्ति भक्षयतीति अध्वा मार्गो वा ।

– उ०को०, ४/११६

✓अद् – भक्षणे + क्वनिप् प्रत्ययः धातोर्दकारस्य धत्वञ्च (अदेर्ध च – उ०को०, ४/११६) ।

## अनः

अनिति जीवति येनेति अनः ओदनं पक्वान्नं वा । – उ०को०, ४/१८९

✓अन – प्राणने + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) ।

## अन्-अन्तं

न विद्यतेऽन्तोऽवधिर्मर्यादा यस्य तदनन्तम्।

– स० प्र० (*प्रथमसमुल्लासः*)

अन् (नञ्) + अन्तम् ।

## अन्-अपावृत्

यो नापवृणोति। – ऋ०, ६/३२/५

अन् (नञ्) + अप + ✓वृञ् – वरणे + क्विप् प्रत्ययः, तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/९६), ततः पूर्वपदस्य च दीर्घः (नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ – अष्टा०, ६/३/११६) ।

## अन्-अभिशस्तिः

यन्नाभिशस्यतेऽभिहिंस्यते तत् ।

– यजु०, ५/५

अन् (नञ्) + अभि + ✓शसु – हिंसायां + क्तिन् प्रत्ययः स्त्रियाम् ।

## अन्-अभिशस्तेन्यं

यदनभिशस्तेऽविद्यमानहिंसने नयति तत्।

– यजु०, ५/५

१. अनभिशस्ति + एण्यः प्रत्ययः।
२. अनभिशस्ति + ✓णीञ् – प्रापणे + क्विप् प्रत्ययः।

## अन्-आधृष्टाः

धर्षितुं निवारयितुमनर्हाः । – ऋ०, १/११/४

यत्र समन्ताद् धृष्यन्त इत्यनाधृष्ट्यम् ।

– यजु०, १/३१

यन्न धृष्यते तेजस्तत् । – यजु०, ५/५

न केनाऽपि धर्षितुं योग्यम् ।

– यजु०, ५/५

यत्समन्तान्न धृष्यते तत्तेजः ।

– यजु०, ५/९

शत्रुभिरधर्षिताः । – यजु०, १०/४

✓अन् (नञ्) + आङ् + ✓ञिधृषा – प्रागल्भ्ये + क्तः प्रत्ययः ।

## अन्-आनुदः

येऽनुददति तेऽनुदा, न विद्यन्तेऽनुदा यस्य सः। – ऋ०, २/२३/११

अन् (नञ्) + अनु + ✓दा – दाने + कः प्रत्ययः।

## अन्-आभुवः

ये समन्ताद्धर्माचरणे भवन्ति त आभुवो नाभुवोऽनाभुवस्तान् । – ऋ०, १/५१/९

(प्र०ब०व०) – अन् (नञ्) + आङ् + ✓भू – सत्तायां + क्विप् प्रत्ययः ।

## अनिलः

अनिति जीवति जीवयति वा स अनिलः वायुर्वा । – उ०को०, १/५४

✓अन – प्राणने + इलच् प्रत्ययः (सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्यः इलच् – उ०को०, १/५४) ।

## अ-निपद्यमानं

योमन आदीनीन्द्रियाणि न निपद्यते प्राप्नोति तम्। – ऋ०, १/१६४/३१

अ (नञ्) + नि + ✓पद – गतौ + शानच् प्रत्ययः।

## अ-निमानः

अविद्यमानं निमानं परिमाणं यस्य सः। – ऋ०, १/२७/११

अ (नञ्) + नि + ✓माङ् – माने + ल्युट् प्रत्ययः।

## अनीकं

अनिति जीवयतीति अनीकं विरुद्धं सैन्यं वा। – उ०को०, ४/१७

✓अन – प्राणने + ईकन् प्रत्ययः (अनिहृषिभ्यां किच्च – उ०को०, ४/१७)।

## अनुपत्

अनु पश्चात् प्राप्यते या सा। –यजु० १५/८

अनु + ✓ पद् - गतौ + क्विप् प्रत्ययः (सम्पदादिभ्यः क्विप्- अष्टा० वा० ३/३/९४)।

## अनुरुत्

योऽनुरौत्युपदिशति। – ऋ०, ३/५५/५

अनु + ✓रु – शब्दे + क्विप् प्रत्ययः।

## अनुरुधं

योऽनुरुणद्धि तम्। – यजु०, ३०/९

(द्वि०ए०व०) अनु + ✓रुधिर् – आवरणे + क्विप् प्रत्ययः।

## अनुष्टुप्

अनुष्टोभते स्तभ्नात्यज्ञानं यः। – यजु०, ८/४७

यया पठित्वा पुनः सर्वा विद्या अन्येभ्यः स्तुवन्ति सा। – यजु०, १०/१३

अनुस्तौति यया सा। – यजु०, १४/१०

श्रुत्वा पश्चात् स्तुभ्नाति जानाति शास्त्राणि यया मननक्रियया सा। – यजु०, १५/५

ययानुष्टोभते सा। – यजु०, २३/३३

अनु + ✓ष्टु – स्तुतौ / ✓ष्टुभ् – स्तम्भने + क्विप् प्रत्ययः।

## अनूचीना

यैरन्वञ्चन्ति जानन्ति तानि। – यजु०, ३३/५४

(प्र०ब०व०) अनु + ✓अञ्चु – गतिपूजनयोः + ख प्रत्ययः ततः खस्येनादेशः (विभाषाञ्चेरदिक्स्त्रियां – अष्टा०, ५/४/८)।

## अनृतुपाः

य ऋतून् पाति स ऋतुपा न ऋतुपा अनृतुपाः। – ऋ०, ३/५३/८

अन् (नञ्) + ✓ऋ – गतिप्रापणयोः + तु प्रत्ययः (अर्त्तेश्च तु – उ०को०, १/७२) > अनृतु + ✓पा – रक्षणे + अच् प्रत्ययः।

## अनेहाः

न हन्यते विच्छिन्नो न भवतीति अनेहाः कालो वा। – उ०को०, ४/२२४

अ (नञ्) + ✓हन् – हिंसागत्योः + असुन् प्रत्ययः एहादेशश्च (नञि हन एह च – उ०को०, ४/२२४)।

## अन्तः

अमति गच्छतीति अन्तः नाशः समीपं तत्स्वरूपं मनोहरं वा। – उ०को०, ३/८६

अमति गच्छति यत्रेति अन्तः मध्यं वा। – उ०को०, ५/६०

१. ✓अम – गत्यादिषु + तन् प्रत्ययः (हसिमृगिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६)।

२. ✓अम – गत्यादिषु + अरन् प्रत्ययः तुडागमश्च (अमेस्तुट् च – उ०को०, ५/६०)।

## अन्तकाय

**योऽन्तं करोति तस्मै । – यजु०, ३०/७**

(च०ए०व०) – ✓अम – गत्यादिषु + तन् प्रत्ययः (हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को० ३/८६) > अन्त + वुन् प्रत्ययः (कृञादिभ्यः संज्ञायां वुन् – उ०को०, ५/३५), ततः वोरकादेशः (युवोरनाकौ – ७/१/१) ।

## अन्तरं

**यदन्ते समीपे रमते तत् । – ऋ०, ६/७५/१९**

अन्त + ✓रमु – क्रीडायां + डः प्रत्ययः ।

## अन्तरिक्षसत्

**योऽन्तरिक्ष आकाशे वा सीदति ।**

**– ऋ०, ४/४०/५**

**योऽन्तरिक्षेऽवकाशे सीदति ।**

**– यजु०, १०/२४**

**यो धर्मावकाशे सीदति । – यजु०, १२/१४**

अन्तः + ✓ईक्ष – दर्शने + घञ् प्रत्ययः कर्मणि (अकर्तरि च कारके संज्ञायाम् – अष्टा०, ३/३/१९) ततः धातोः इत्वं पृषोदरादित्वात् (पृषोदरादीनि यथोपदिष्टम् – अष्टा०, ६/३/१०९)> अन्तरिक्ष + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः (सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१) ।

## अन्तयः

**अनन्ति जीवन्ति विद्यादिसुखसाधनैर्येतेऽन्तयः। – ऋ०, १/८९/९**

(प्र०ब०व०) ✓अन – प्राणने + तिन् प्रत्ययः औणादिकः।

## अन्त्रं

**अमति जानाति प्राप्नोति येन तत् अन्त्रं उदरनाडी वा । – उ०को०, ४/१६४**

✓अम - गत्यादिषु + ष्ट्रन् प्रत्ययः (अमिचिमिशसिभ्यः क्त्रः - उ०को०, ४/१६४) ।

## अन्दूः

**अन्दति बध्नाति येन यया वा सा अन्दूः हस्तिबन्धनी श्रृङ्खला वा ।**

**– उ०को०, १/९३**

✓अदि – बन्धने + कूः प्रत्ययः नुमागमश्च (अन्दूदृम्फूजम्बूकम्बूकफेलूकर्कन्धूदिधिषु – उ०को०, १/९३) ।

## अन्धः

**अद्यते यत्तदन्धोऽन्नम्। – यजु०, ८/५४**

**अद्यते भक्ष्यते तद् अन्धः अन्नमोदनो वा।**

**– उ०को०, ४/२०६**

✓अद् – भक्षणे + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) धातोः नुमादेशः तथा च धकारान्तादेशः (अदेर्नुम् धौ च – उ०को०, ४/२०६)।

## अन्धुः

**अमति रुजति गच्छति वेति अन्धुः कूपो वा। – उ०को०, १/२७**

✓अम – गत्यादिषु + कु प्रत्ययः, अम धातोर्धुगादेशः (अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च – उ०को०, १/२७) ।

## अन्नं

**अत्तुं योग्यात् । – यजु०, २/२५**

**अनिति जीवयतीति अन्नं ओदनादिकं वा।**

**– उ०को०, ३/१०**

✓अद् – भक्षणे / ✓अन – प्राणने वा + न प्रत्ययः (कृवृजृसिद्रूपन्यनिस्वपिभ्यो नित् – उ०को०, ३/१०)।

## अन्यः

**अनिति जीवयतीति अन्यः इतरो वा ।**

**– उ०को०, ४/१०९**

✓अन् – प्राणने + यः प्रत्ययः बाहुलकात् (माच्छाशसिभ्यो यः – उ०को०, ४/१०९) ।

## अन्नादं

योऽन्नं यवादिकं सर्वमत्ति तम् ।

– यजु०, ३/५

अन्न + ✓अद – भक्षणे + अण् प्रत्ययः ।

## अन्नाद्याय

अत्तुं योग्यमद्यमन्नं च तदद्यंचान्नाद्यं तस्मै।

– यजु०, ३/५

अन्तुं योग्यमद्यमन्नं च तस्मै । यद्वाऽन्नमोदनादिकं भोज्यं यस्मिंस्तस्मै ।

– यजु०, ३/६३

(च०ए०व०) – अन्न + ✓अद – भक्षणे + ण्यत् प्रत्ययः ।

## अंसः

अमति गच्छति प्राप्नोति येन स अंसः स्कन्धो विभागो वा । – उ०को०, ५/२१

✓अम – गत्यादिषु + सन् प्रत्ययः (अमेः सन् – उ०को०, ५/२१) ।

## अंहः

अमन्ति प्राप्नुवन्ति दुःखं येन तत् अंहः पापं वा । – उ०को०, ४/२१३

✓अम – रोगे + असुन् प्रत्ययः हुगागमश्च (अमेर्हुक् च – उ०को०, ४/२१३) ।

## अंहतिः

हन्त्यनेनेति अहंतिः दानं वा ।

– उ०को०, ४/६२

✓हन् – हिंसागत्योः + अतिः प्रत्ययः, धातोः अंहादेशश्च (हन्तेरंह च – उ०को०, ४/६२) ।

## अंह्रिः

अंहयति भाषतेऽसौ अंह्रिः पादो वा ।

– उ०को०, ४/६६

✓अंह – भाषार्थः + क्रिन् प्रत्ययः (वङ्क्र्यादयश्च – उ०को०, ४/६६) ।

## अपः

या आप्नुवन्ति सर्वान् पदार्थान् ताः ।

– ऋ० १/२३/१८

आप्नुवन्ति याभिस्तासामुदकानाम् ।

– यजु०, ८/२४

आप्यते सुखं येन तत् अपः अपत्यं सुकर्म वा । – उ०को०, ४/२०८

✓आप्लृ – व्याप्तौ + असुन् प्रत्ययः धातोः ह्रस्वत्वं (आपः कर्माख्यायां ह्रस्वो नुट् च वा – उ०को०, ४/२०८) ।

## अपधा

योऽपदधाति सः । – ऋ०, २/१२/३

अप + ✓धा – धारणपोषणयोः + कः प्रत्ययः (आतश्चोपसर्गे – अष्टा०, ३/१/१३६) ।

## अपत्यसाचं

यदपत्ये सचति व्याप्नोति तत् ।

– ऋ०, ६/७२/५

अप + ✓षच – समवाये + अण् प्रत्ययः ।

## अपभर्त्ता

अपबिभर्त्ति दूरीकरोतीति। – ऋ०, २/३३/७

अप + ✓भृञ् – भरणे + तृच् प्रत्ययः ।

## अपश्रितः

योऽपश्रयति सः । – ऋ०, ५/६१/१९

अप + ✓श्रिञ् – सेवायां + क्तः प्रत्ययः ।

## अपवक्ता

विरुद्धवक्ता वाचयिता वास्ति तस्य ।

– ऋ०, १/२४/८

अप + ✓वच – परिभाषणे + तृच् प्रत्ययः ।

## अ-पश्याः

ये न पश्यन्ति ते । – ऋ०, १/१४८/५

अ (नञ्) + ✓दृशिर् – प्रेक्षणे + श प्रत्ययः

(प्राघ्राध्माधेट्दृशः शः – अष्टा०, ३/१/१३७), श इत्यस्य पश्यादेशः ।

## अपष्ठुः

अपतिष्ठति अपष्ठुः वामभागः प्रतिकूलः पदार्थो वा । – उ०को०, १/२५

अप + ✓ष्ठा – गतिनिवृत्तौ + कुः प्रत्ययः (अपदुः सुषूस्थः – उ०को०, १/२५) ।

## अपहतं

अपहन्यते यत् तत् । – यजु०, १/१६

अप + ✓हन् – हिंसागत्योः + क्त प्रत्ययः ।

## अपानः

अपानयतीति दुःखं येन तस्मै ।

– यजु०, १३/२४

अपानयति दुःखं येन सः ।

– यजु०, २२/३३

अप + ✓अन – प्रापणे + घञ् प्रत्ययः ।

## अपानदाः

या अपानं दुखदूरीकरणसाधनं प्रयच्छन्ति ताः। – यजु०, १७/१५

(प्र०ब०व०), अपान + ✓दा – दाने + अङ् प्रत्ययः (आतश्चोपसर्गे – अष्टा०, ३/३/१०६) ।

## अपानपाः

योऽपानं पाति । – यजु०, २०/३४

अपान + ✓पा – रक्षणे + कः प्रत्ययः ।

## अ-पियन्तं

योऽप्येति तम् । – यजु०, २५/४३

(द्वि०ए०व०), अ (नञ्) + ✓पि – गतौ + शतृ प्रत्ययः ।

## अपीच्यं

येऽप्यञ्चन्ति प्राप्नुवन्ति तेषु साधुम् । येनायमञ्चति तत्र भवेन ।

– ऋ०, १/८४/१५

– ऋ०, ७/६०/१०

अपि (अप) + ✓अञ्चु – गतिपूजनयोः + यत् प्रत्ययः।

## अ-पुरुषघ्नः

पुरुषान्न हन्ति सः । – ऋ०, १/१३३/७

अ (नञ्) + पुरुष + ✓हन् – हिंसागत्योः + टक् प्रत्ययः।

## अप्तुः

आप्नोति व्याप्नोति सर्वान् पदार्थानिति अप्तुः शरीरं वा। उ०को० १/७५

✓आप्लृ – व्याप्तौ + तुः प्रत्ययः, धातोः ह्रस्वत्वं (आप्नोतेर्ह्रस्वश्च – उ०को०, १/७५) ।

## अप्तुरः

मनुष्याणामपः प्राणान् तुतुरति विद्यादि-बलानि प्राप्नुवन्ति प्रापयन्ति च ते ।

– ऋ०, १/३/८

अप्स्वन्तरिक्षे त्वरन्ति ते ।

– ऋ०, १/११८/४

योऽपः प्राणान् जलानि वा तोरयति प्रेरयति तम् । – ऋ०, ३/२७/११

अप + ✓तुर – त्वरणे + क्विप् प्रत्ययः ।

## अप्नः

आप्यते सुखं येन तत् अप्नः ।

– उ०को०, ४/२०८

✓आप्लृ – व्याप्तौ + असुन् प्रत्ययः, धातोः ह्रस्वत्वं नुडागमश्च (आपः कर्माख्यायां ह्रस्वो नुट् च वा – उ०को०, ४/२०८) ।

## अप्वा

आप्नोति यया सा अप्वा कण्ठस्थानं वा। – उ०को०, १/१५४

√आप्लृ – व्याप्तौ + वन् प्रत्ययः ( शेवायह्वजिह्वाग्रीवाऽप्वामीवाः – उ०को०, १/१५४ ) धातोर्ह्रस्वत्वञ्च ।

## अप्वे

या अपवाति शत्रुप्राणान् हिनस्ति तत्सम्बुद्धौ। – यजु०, १७/४४

अप + √वा – गतिगन्धनयोः + क्विप् प्रत्ययः, अपोऽकारलोपश्च ।

## अप्सरसः

या अऽप्स्वन्तरिक्षे सरन्ति गच्छन्ति ताः ।
– ऋ०, ७/३३/९

ये अप्सु प्राणेषु सरन्त्यौ गच्छन्त्यौ ते।
– यजु०, १५/१५

अप्सु प्राणेषु सरन्त्यौ गती ।
– यजु०, १५/१८

या अप्सु सरन्ति ताः । – यजु०, १८/३८

या अप्स्वन्तरिक्षे सरन्ति ताः।
– यजु०, १८/३९

या अन्तरिक्षे जलादौ च सरन्ति गच्छन्ति ताः। – यजु०, १८/४१

या अप्सु प्राणेषु सरन्ति प्राप्नुवन्ति ताः ।
– यजु०, १८/४२

या अप्सु व्याप्येषु प्राणादिपदार्थेषु सरन्ति गच्छन्ति ताः । – यजु०, १८/४३

अप्सरति विरुद्धं गच्छतीति अप्सराः अथवाऽप्सु जलेषु प्राणेषु वा सरन्तीति अप्सरसः किरणा वा । अथवा न प्सान्ति भक्षयन्ति रक्षां कुर्वन्तीति अप्सरसः ।
– उ०को०, ४/२३७

१. (प्र०ब०व०) अप + √सृ – गतौ + असि प्रत्ययः ( सर्त्तेरप्पूर्वादसिः – उ०को०, ४/२३७ ) । २. (प्र०ब०व०) अ (नञ्) + √प्सा – भक्षणे + असिः प्रत्ययः, प्रत्ययस्य रुडागमश्च ।

## अप्सां

योऽपो जलानि सनुते तम् ।
– ऋ०, १/९१/२१

योऽपो जलानि प्राणान् सनोति ददाति तम् । – यजु०, ३४/२०

(द्वि०ए०व०), अप् + √षण – सम्भक्तौ अथवा √षणु – दाने + विट् प्रत्ययः ( जनसनखनक्रमगमो विट् – अष्टा०, ३/२/६७ ) ।

## अप्सुक्षितः

येऽप्सु क्षियन्ति निवसन्ति ते ।
– ऋ०, १/१३९/११

प्राणेषु क्षियन्ति निवसन्ति ते ।
– यजु०, ७/१९

अप्सु (स०ब०व०) + √क्षि – निवासगत्योः + क्विप् प्रत्ययः तुगागमश्च ( ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९ ), ततः पूर्वपदस्य विभक्तेरलुक् ( तत्पुरुषे कृति बहुलम् – अष्टा०, ६/३/१३ ) ।

## अप्सुसदं

योऽप्सु प्राणेषु जलेषु वा सीदति तम् ।
– ऋ०, ३/३/५

यो जलेषु नौकादिषु सीदति तस्मै ।
– यजु०, १७/१२

अप्सु + √षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## अ–प्रहणं

योऽन्यायेन कञ्चिन्न प्रहन्ति ।
– ऋ० ६/४४/४

अ (नञ्) प्र + √हन् – हिंसागत्योः + क्विप् प्रत्ययः ।

## अ–प्रायुः

न विद्यते प्रगत प्रणष्ट आयुर्बोधो येषान्ते।
– ऋ०, १/८९/१

यन्न प्रैति नश्यति तत् । – ऋ०, ५/८०/३

अ (नञ्) + प्र + ✓ इण् – गतौ + उण् प्रत्ययः (छन्दसीणः – उ०को०, १/२)।

## अ-प्रायुषे

यः प्रैति स प्रायुट् न प्रायुडप्रायुट् तस्मै ।

– ऋ०, १/१२७/५

(च०ए०व०), अ (नञ्) + प्र + ✓इण् – गतौ + उसिः प्रत्ययः। (एतेर्णिच्च – उ०को०, २/११९)।

## अ-बन्धनः

योबध्नाति तद्भिन्नः । – ऋ०, ३/५५/६

अ (नञ्) + ✓बन्ध – बन्धने + ल्युट् प्रत्ययः ।

## अ-बिभ्युषः

बिभेति यस्मात् स बिभीवा न बिभीवान् अबिभीवान् तस्य । – ऋ०, १/११/५

(ष०ए०व०), अ (नञ्) + ✓ञिभी – भये + क्वसुः प्रत्ययः (क्वसुश्च – अष्टा०, ३/२/१०७) द्वित्वं, अभ्यासस्य ह्रस्वत्वञ्च (ह्रस्वः – अष्टा०, ७/४/५९), जश्त्वं (अभ्यासे चर्च्च – अष्टा०, ८/४/५४) वस्य सम्प्रसारणं (वसोः सम्प्रसारणम् – अष्टा०, ६/४/१३१) षत्वं (शासिवसिघसीनाञ्च – अष्टा०, ८/३/६०) ततः इयङादेशस्य यणादेशः (एरनेकाचोऽसंयोगपूर्वस्य – अष्टा०, ६/४/८२)।

## अब्जाः

योऽप्सु जयति तस्मै । – ऋ०, २/२१/१

योऽद्भ्यो जातः । – ऋ०, ४/४०/५

अप्सु जातम् । – ऋ०, ७/३४/१६

योऽपो जनयति । – यजु०, १०/२४

योऽपः प्राणान् जनयति । – यजु०, १२/१४

आप इत्येव। आप्यते यत् तद् अब्जः रूपम्। अद्भ्यो जात इति निर्वचने अब्जः कमलं वा । – उ०को०, ४/२०९

आप > अप + ✓जनी – प्रादुर्भावे + विट् प्रत्ययः (जनसनखनक्रमगमो विट् – अष्टा०, ३/२/६७) ततः अनुनासिकस्य आत्वञ्च (विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१)।

## अब्दः

अवति रक्षणादिकं करोतीति अब्दः संवत्सरोऽवसरो मेघो वा ।

– उ०को०, ४/९८

१. ✓अव – रक्षणादिषु + दन् प्रत्ययः निपातनात् (अब्दादयश्च – उ०को०, ४/९८)।

२. अप् + ✓डुदाञ् दाने + कः प्रत्ययः ।

## अ-भयसनि

अभयं सनति सम्भजति येन ।

– यजु०, ११/४८

अ (नञ्) + ✓ञिभी – भये + अच् प्रत्ययः (एरच्-अष्टा०, ३/३/५६) > अभय+✓षण – सम्भक्तौ + इ प्रत्ययः (खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थि-चरिभ्यश्च – उ०को०, ४/१४०)।

## अभिक्रोशकं

योऽभितः क्रोशति आह्वयति तम् ।

– यजु०, ३०/२०

अभि + ✓क्रुश – आह्वाने रोदने च + ण्वुल् प्रत्ययः।

## अ-भिक्षदां

ये भिक्षां न ददति तेषाम् ।

– ऋ०, ६/५०/१

(ष०ब०व०) – अ (नञ्) + ✓भिक्ष – भिक्षायां-लाभेऽलाभे च + ✓दा – दाने + कः प्रत्ययः ।

## अभिख्या :

ये अभितः ख्यान्ति ते । – ऋ०, १/१४८/५

(प्र०ब०व०) अभि + ✓ख्या – प्रकथने + कः प्रत्ययः ।

## अभिघ्नते

य आभिमुख्येन हन्ति तस्मै ।

– यजु०, १६/४६

(च०ए०व०) अभि + √हन् – हिंसागत्योः + शतृ प्रत्ययः ।

## अभिजिता

अभिमुख्यगतान् शत्रून् जयति येन तेन ।
– यजु०, १५/७

(तृ०ए०व०) अभि + √जि – जये + क्विप् प्रत्ययः तुगागमश्च ।

## अभिद्रुहे

योऽभिद्रुह्यति तस्मै । – ऋ०, २/२७/१६

(च०ए०व०), अभि + √द्रुह – जिघांसायां + क्विप् प्रत्ययः ।

## अभिद्यवः

अभितः सर्वतो द्यवो दीप्ता विद्या विद्युदादयः पदार्थाः साधिता यैस्ते ।
– ऋ०, १/४७/४

अभिगता द्यवो दीप्तयो येषां ते ।
– ऋ०, १/१२७/७

अभितो द्यवः सूर्यकिरणा इव देदीप्यमानाः । – ऋ०, १/१३४/२

(प्र०ब०व०) – अभि + √द्युत् – दीप्तौ + डु प्रत्ययः ।

## अभिधा

योऽभिदधाति सः । – यजु०, २२/३

अभि + √डुधाञ् – धारणपोषणयोः + कः प्रत्ययः ।

## अभिध्रुक्

अभितो द्रोहं कुर्वन् । – ऋ०, १/१२२/९

अभि + √द्रुह – अभिजिघांसायां + क्विप् प्रत्ययः (सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१) ।

## अभिमातिषाहः

योऽभिमातीन् सहन्ते । – ऋ०, २/४/९

येऽभिमात्याऽभिमानेन युक्ताञ्छत्रून् सहन्ते।
– ऋ०, ६/७/३

येऽभिमानयुक्तान् शत्रून् सोढुं शक्नुवन्ति।
– ऋ०, ६/६९/४

येऽभिमातीनभिमानयुक्तान् शत्रून् सहन्ते निवारयन्ति । – यजु०, १२/११३

(प्र०ब०व०) – अभि + √माङ् – माने + क्तिन् प्रत्ययः > अभिमाति + √षह् – मर्षणे + ण्वि प्रत्ययः (छन्दसि सहः – अष्टा०, ३/२/६३) ।

## अभिमातिहा

योऽभिमानयुक्तं शत्रुं हन्ति तम् ।
– ऋ०, ३/५१/३

येऽभिमिमत इत्यभिमातयस्तान् हन्ति सः।
– यजु०, ५/२४

अभिमाति + √हन – हिंसागत्योः + क्विप् प्रत्ययः, धातोरुपधादीर्घः (सौ च – अष्टा०, ६/४/१३) ।

## अभिमृशे

आभिमुख्येन मृशन्ति सहन्ते येन तस्मै ।
– यजु०, ११/२४

(च०ए०व०), अभि + √मृष – तितिक्षायां + क्विप् प्रत्ययः ।

## अभिम्लातः

अभितो म्लायतीति अभिम्लातः हर्षक्षीणो वा । – उ०को०, ३/८६

अभि + √म्लै – हर्षक्षये + तन् प्रत्ययः (हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६) ।

## अभियुग्वा

योऽभियुज्यते वन्यते विभज्यते तेन ।
– ऋ०, ६/४५/१५

योऽभितो युङ्क्ते सः । – यजु०, ३९/७

अभि + √युजिर् – योगे + क्वनिप् प्रत्ययः ।

## अभियुजः

या अभिमुख्येन युज्यन्ते ताः प्रजाः ।

– ऋ०, ३/११/६

योऽभियुङ्क्ते तस्य । – ऋ०, ४/३८/८

या आभिमुख्येन युञ्जते ताः शत्रुसेनाः ।

– ऋ०, ५/४/५

या अभियुङ्क्ते ताः । – ऋ०, ६/२५/२

अभि + ✓युजिर् – योगे + क्विप् प्रत्ययः (सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१ ) ।

## अभिशस्तिचातनः

योऽभिशस्ति हिंसां चातयति सः ।

– ऋ०, ३/३/६

अभि + ✓शसु – हिंसायां + क्तिन् प्रत्ययः > अभिशस्ति + ✓चते – याचने + ल्यु प्रत्ययः (नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः – अष्टा०, ३/१/१३४), योः अनादेशः (युवोरनाकौ – अष्टा०, ७/१/१) ।

## अभिशस्तिपावा

योऽभिशस्तेराभिमुख्याद्धिंसनात् पाति रक्षति। – यजु०, ५/४

योऽभिशस्तेहिंसनात् पाति रक्षति ।

– यजु०, ५/५

अभिशस्ति + ✓पा – रक्षणे + वनिप् प्रत्ययः (आतो मनिन्क्वनिब्वनिपश्च – अष्टा०, ३/२/७४)।

## अभिश्रावाय

य अमितः शृणोति श्रावयति वा तत्।

– ऋ०, १/१८५/१०

(च०ए०व०) – अभि + ✓श्रु – श्रवणे + अण् प्रत्ययः ।

## अभिष्टिभिः

अभितः सर्वतो यजन्ति संगच्छन्ति याभिस्ताभिः । – ऋ०, १/१२९/९

(तृ०ब०व०) – अभि + ✓इष् – गतौ इच्छायां वा + क्तिन् प्रत्ययः (मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः – अष्टा०., ३/३/९६) ।

## अभिष्टिकृत्

योऽभिष्टं करोति सः । – ऋ०, ४/११/४

योऽभिष्टि सर्वत इष्टं सुखं करोति सः ।

– यजु०, २०/४८

अभिष्टि + ✓कृञ् – करणे + क्विप् प्रत्ययः तुगागमश्चेति ।

## अभिस्वरे

योऽभितः स्वरति शब्दयति तस्मिन् ।

-ऋ०, ३/४५/२

(स०ए०व०) अभि + ✓स्वृ – शब्दोपतापयोः – अच् प्रत्ययः ।

## अभीवर्त्तः

अभितः सर्वतः साधनैः पूर्णो वर्तते सोऽभीवृतम् । – ऋ०, १/३५/४

य अभिमुख्ये वर्त्तते सः । – यजु०, १४/२३

अभि + ✓वृतु – वर्तने + क्त प्रत्ययः, पूर्व पदस्य दीर्घश्चेति ।

## अभीशवः

अभितोऽश्नुवते व्याप्नुवन्ति मार्गान्यैस्ते रश्मयो हया वा । – ऋ०, १/३८/१२

(प्र०ब०व०) – अभि + ✓अशूङ् – व्याप्तौ + उण प्रत्ययः (कृवापाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१) ।

## अभीषाट्

योऽभिसहते सः । – ऋ०, ७/४/८

अभि + ✓षह – मर्षणे + ण्वि प्रत्ययः, (छन्दसि सहः – अष्टा०, ३/२/६३) तथा साढः षत्वं (सहे साढः सः – अष्टा०, ८/३/५६), ततः पूर्वपदस्य दीर्घत्वम् (अन्येषामपि दृश्यते – अष्टा०, ६/३/१३७) ।

## अ-भोग्घनः

ये भोज्यन्ते ते भोजो हन्यन्ते ते हनः। भोजश्च ते हनो भोग्घनः न भोग्घनोऽ-भोग्घनस्ते । – यजु०, १/६४

अ (नञ्) + √भुज – पालनाभ्यवहारयोः + घञ् प्रत्ययः > अभोग् + √हन् – हिंसागत्योः + क्विप् प्रत्ययः, हकारस्य घत्वम्। (बहुलं छन्दसि – अष्टा०, ३/२/८८) ।

## अभ्रकं

अभ्रति गच्छति येन तत् अभ्रकं औषधं संज्ञा वा । – उ०को०, २/३२

√अभ्र गतौ + क्वुन् प्रत्ययः (क्वुन् शिल्पिसंज्ञयो-रपूर्वस्यापि – उ०को०, २/३२) वोः अकादेशश्च।

## अमतः

अमति गच्छतीति अमतः रेणुर्वा ।

– उ०को०, ३/११०

√अम – गत्यादिषु + अतच् प्रत्ययः (भृमृदृशियजिप-र्विपच्यमितमिनमिहर्य्यिभ्योऽतच् – उ०को०, ३/११०)।

## अमतिः

अमति गच्छतीति अमतिः कालो वा ।

– उ०को०, ४/५९

√अम – गत्यादिषु + अतिः प्रत्ययः (अमेरतिः – उ०को०, ४/५९) ।

## अमत्रं

अमति प्राप्नोति यत्र तत् अमत्रं पात्रं वा ।

– उ०को०, ३/१०५

√अम – गत्यादिषु + अत्रन् प्रत्ययः (अमिनक्षियजिब-धिपतिभ्योऽत्रन् – उ०को०, ३/१०५) ।

## अमनिः

अमतीति अमनिः गतिर्वा ।

– उ०को०, २/१०२

√अम – गत्यादिषु + अनिः प्रत्ययः (अर्तिसृधृधम्य-म्यश्यवितृभ्योऽनिः – उ०को०, २/१०२) ।

## अमवन्तः

अमानां रोगाणां गमनागमनबलानां वा संबन्धो विद्यते येषान्ते। अमन्ति रोगं प्राप्नुवन्ति यद्वाऽमन्ति गच्छन्त्यागच्छन्ति बलयन्ति यैस्तेऽमाः । – ऋ०, १/३८/७

(प्र०ब०व०) √अम – गत्यादिषु रोगे च + वति प्रत्ययः ।

## अमाजूः

योऽमा गृहे जूर्यति तद्वत् । – ऋ०, २/१७/७

अमा-(गृहनाम) + √जॄ – वयोहानौ + क्विप् प्रत्ययः, छन्दसि ऋकारान्तस्य धातोरङ्गस्य बहुलमुकारादेशः (बहुलं छन्दसि – अष्टा०, ७/१/१०३) ।

## अमित्रः

अमति गच्छतीति अमित्रः शत्रुः।

– उ०को०, ४/१७४

√अम – गत्यादिषु + इत्र प्रत्ययः (अमेर्द्विषति चित् – उ०को०, ४/१७४) ।

## अ-मित्रहा

यो येन वाऽमित्रान् शत्रून् हन्ति सः ।

– यजु०, ५/२४

अ (नञ्) + मित्र + √हन् – हिंसागत्योः + क्विप् प्रत्ययः धातोरुपधादीर्घश्च (सौ च – अष्टा०, ६/४/१३) ।

## अमीवचातनः

अमीवान् ज्ञानादीन् ज्वरादींश्च रोगान् चातयति हिनस्ति तम् । – ऋ०, १/१२/७ योऽमीवान् रोगान् शातयति सः ।

– यजु०, १२/८०

१. √अम – रोगे + ईव प्रत्ययः > अमीव + √चत – हिंसायां + ल्यु प्रत्ययः (नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः – अष्टा०, ३/१/१३४) ।

२. अमीव + ✓षद्लृ – विशरणगत्यवसादनेषु + ल्युट् प्रत्ययः, वर्णव्यत्ययत्वात् शकारस्य चकारः ।

## अमीवहा

अमीवानामविद्यादीनां ज्वरादीनां वा हन्ता।
– ऋ०, १/९१/१२

योऽमीवान् रोगान् हन्ति । – ऋ०, ७/५५/१

योऽमीवानविद्यादिरोगान् हन्ति सः ।
– यजु०, ३/२९

अमिव + ✓हन् – हिंसागत्योः + क्विप् प्रत्ययः धातोरुपधादीर्घश्च ।

## अम्बरीषः

अम्बते शब्दयतीति अम्बरीषः आकाशः स्वेदनी वा । – उ०को०, ४/२९

✓अबि – शब्दे + ईषन् प्रत्ययः, रुगागमश्च (अम्बरीषः – उ०को०, ४/२९) ।

## अम्बु

अमन्ति गच्छन्ति चेष्टन्ते प्राणिनो येन तद् अम्बु जलम् । – उ०को०, १/२७

✓अम – गत्यादिषु + कुः प्रत्ययः धातोः बुगागमश्च (अर्जिदृशिकम्यमिपं सिबाधामृजिपशितुक् धुक्दीर्घह-काराश्च – उ०को०, १/२७) ।

## अम्बलः

अम्बते शब्दं करोतीति अम्बलः ।
– उ०को०, ४/१०८

✓अबि – शब्दे + क्ल प्रत्ययः (मूशक्यबिभ्यः क्ल – उ०को०, ४/१०८) ।

## अम्बिकया

अम्बते शब्दयति यया तया।– यजु०, ३/५७ (तृ०ए०व०), ✓अबि – शब्दे + ण्वुल् प्रत्ययः ।

## अम्भः

आप इत्येव। आप्यते तत् अम्भ उदकम्।
– उ०को०, ४/२१०

✓आप्लृ – व्याप्तौ + असुन् प्रत्ययः नुमागमः भकारान्तादेशश्च (उदके नुम्भौ च – उ०को०, ४/२१०) ।

## अम्भृणौ

अपो बिभर्ति याभ्यां तौ । – यजु०, १९/२७ (द्वि०द्वि०व०) – अप + ✓भृञ् – भरणे + नः प्रत्ययः बाहुलकात् (धापृवस्यज्यतिभ्यो नः – उ०को०, ३/६) ।

## अम्लः

अमति गच्छतीति अम्लः रसविशेषो वा।
– उ०को०, ४/१०८

✓अम - गत्यादिषु + क्ल प्रत्ययः (मूशक्यबिभ्यः क्लः - उ०को०, ४/१०८) ।

## अयस्कान्तः

अयः कामयतेऽसौ अयस्कान्तः चुम्ब-कमणिः। – उ०को०, ४/२२२

अयः + ✓कमु – कान्तौ + क्तः प्रत्ययः ।

## अ-यज्ञसाचः

ये यज्ञेन न सचन्ति सम्बध्नन्ति ते ।
– ऋ०, ६/६७/९

अ (नञ्) + ✓यज – देवपूजासंगतिकरणदानेषु + नङ् प्रत्ययः > अयज्ञ + ✓षच – समवाये + अण् प्रत्ययः।

## अयाः

योऽयते गच्छति सः । – ऋ०, ५/६२/७

एति प्राप्नोतीति अयः लोहं वा ।
– उ०को० ४/१८९

एति प्राप्नोतीति अयाः अग्निर्वा ।
– उ०को०, ४/२२२

✓अय – गतौ + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) ।

## अयःशया

याऽयस्सु सुवर्णादिषु शेते सा ।
– यजु०, ५/८

अयस् + ✓शीङ् – शये + अच् प्रत्ययः ।

## अरणिः

ऋच्छति प्राप्नोति येन स अरणि, अग्न्युत्पत्तये मथनी द्वे दारुणी वा ।

– उ०को०, २/१०२

✓ऋ – गतौ + अनिः प्रत्ययः (अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः – उ०को०, ३/१०२) ।



## अरण्यं

ऋच्छन्ति गृहाद् गच्छन्ति यत्र तत् अरण्यं वनं वा । – उ०को०, ३/१०२

✓ऋ – गतौ + अन्यः प्रत्ययः (अर्त्तेर्निच्च – उ०को०, ३/१०२) ।

## अरतिः

ऋच्छति प्राप्नोति तम् । – यजु०, ७/२४

ऋच्छति गच्छतीति अरतिः क्रोधो वा ।

– उ०को०, ४/६०

अर्यते गम्यते सा अरतिः उद्वेगो वा ।

– उ०को०, ५/७

✓ऋ – गतिप्रापणयोः + अतिः प्रत्ययः (वहिवस्यर्त्तिभ्यश्चित् – उ०को०, ४/६० अथवा अर्त्तेश्च – उ०को०, ५/७) ।

## अ-रमतिः

न रमती रमणं विद्यते यस्य सः ।

– ऋ०, २/३८/४

अ (नञ्) + ✓रमु – क्रीडायां + अति प्रत्ययः ।

## अररः

ऋच्छति गच्छति यत् स अररः कपाटो वा। – उ०को०, ३/१३२

✓ऋ – गतौ + अरः प्रत्ययः (अर्त्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् – उ०को०, ३/१३२) ।

## अररुः

ऋच्छति प्राप्नोति येन तत् अररुः आयुधं वा । – उ०को०, ४/७९

✓ऋ – गतौ + अरुः प्रत्ययः (अर्त्तेररुः – उ०को०, ४/७९) ।

## अ-ररुषः

राति ददाति स ररिवान्, न ररिवानररिवान् तस्य । – यजु०, ३/३०

(ष०ए०व०) अ (नञ्) + ✓रा – दाने + क्वसुः प्रत्ययः सम्प्रसारणञ्च ।



## अरातयः

अविद्यमाना रातिर्दानं येषां शत्रूणां ते ।

– ऋ०, १/२९/४

अविद्यमाना रातिर्दानं येषु ते शत्रवः ।

– यजु०, १/७

(प्र०ब०व०) – अ (नञ्) + ✓रा – दाने + क्तिन् प्रत्ययः (मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः – अष्टा०, ३/३/९६) ।

## अ-रातीवा

योऽरातीन् शत्रून् वनति संभजति ।

– ऋ०, २/२३/७

अराति + ✓वन – संभक्तौ + वनिप् प्रत्ययः (अन्येभ्योऽपि दृश्यन्ते – अष्टा०, ३/२/७५) अनुनासिकस्यात्वञ्च (विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१), ततः पूर्वपदस्य च दीर्घः ।

## अ-राव्णः

राति ददाति स रावा न अरावा रावा तस्मात्कृपणाददानशीलात् ।

– ऋ० १/३६/३६

(च०ए०व०) – अ (नञ्) + ✓रा – दाने + वनिप् प्रत्ययः (आतो मनिन् क्वनिब्वनिपश्च – अष्टा०, ३/२/७४) ।

## अरिः

ऋच्छति गृह्णात्यन्यायेन सुखानि च यः।

— ऋ०, १/९/१०

ऋच्छति प्राप्नोति परपदार्थानिति अरिः शत्रुर्वा। — उ०को०, ४/१३९

✓ऋ – गतौ + इः प्रत्ययः (अचः इः – उ०को०, ४/१३९)।

## अरित्राः

ये अरिभ्यस्त्रायते ते । – यजु०, ३३/१

(प्र०ब०व०)–अरि + ✓त्रैङ् – पालने + कः प्रत्ययः।

## अरिधायसः

अरीन् शत्रून् दधति यैस्ते ।

— ऋ०, १/१२६/५

(प्र०ब०व०) – अरि + ✓डुधाञ् – धारणपोषणयोः + ण प्रत्ययः (श्याऽऽद्व्यधास्रुसंस्रवतीणवसावह-लिहश्लिषश्वसश्च – अष्टा०, ३/१/१४१) बहुवचने जसि प्रत्ययेऽसुगागमश्च ।

## अ-रिष्टं

रिष्यते हिंस्यते यः स रिष्टो न रिष्टोऽरिष्टस्तम् । – यजु०, २/१३

अ (नञ्) + ✓रिष – हिंसायां + क्तः प्रत्ययः ।

## अ-रिष्टनेमिः

योऽरिष्टानि अहिंसितानि कर्माणि नयति तत् । – ऋ०, ३/५३/१७

अरिष्टानि दुःखानि दूरे नयति स कार्तिकः।

— यजु०, १५/१८

अ (नञ्) + ✓रिष – हिंसायां + क्त प्रत्ययः > अरिष्ट + ✓णीञ् प्रापणे + मिः प्रत्ययः औणादिकः (नियो मिः – उ०को०, ४/४३)।

## अरुः

ऋच्छति प्राप्नोतीति अरुः आदित्यो व्रणो वा। – उ०को०, २/११७

✓ऋ – गतौ + उसि प्रत्ययः (अर्त्तिपृवपियजित-निधनितपिभ्यो नित् – उ०को०, २/११७)।

## अरुणः

यः ऋच्छति सर्वा विद्या स आरोचको वा। – ऋ०, १/१०५/१८

ऋच्छति प्राप्नोतीति अरुणः सूर्यः कुष्ठं रक्तं वा । – उ०को०, ३/६०

✓ऋ – गतिप्रापणयोः + उनन् प्रत्ययः (अर्त्तेश्च – उ०को०, ३/६०)।

## अरुणयुग्भिः

येऽरुणान्किरणान्योजयन्ति तैः।

— ऋ०, ६/६५/२

(तृ०ब०व०) – अरुण + ✓युजिर् – योगे + क्विप् प्रत्ययः ।

## अरूषः

ऋच्छति गच्छति अरूषः सूर्यो वा ।

— उ०को०, ४/७३

✓ऋ – गतिप्रापणयोः + ऊषन् प्रत्ययः (ऋहनि-भ्यामूषन् – उ०को०, ४/७३)।

## अर्कः

अर्चयतीति अर्कः अर्कपर्णं स्फटिकं सूर्यो वा । – ऋ०, १/७/१

अर्च्यते पूज्यते सर्वैर्जनैर्यस्तम् ।

— ऋ०, १/१०/१

अर्च्यते येन तम् । – ऋ०, १/६१/५

सर्वान् प्राणिनोऽर्चन्ति यं सः ।

— यजु०, २९/३९

अर्चयतीति अर्कः अर्कपर्णं स्फटिकं सूर्यो वा । – उ०को०, ३/४०

✓अर्च – पूजायां + कः प्रत्ययः (कृदाधारार्चिकलिभ्यः कः – उ०को०, ३/४०)।

## अर्चिः

अर्चति येन तत् अर्चिः दीप्तिर्वा ।

– उ०को०, २/१०८

✓अर्च – पूजायां + इसिः प्रत्ययः (अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः – उ०को०, २/१०८) ।

## अर्जुनः

अर्जयतीति अर्जुनः शुक्लो मयूरो वृक्षभेदो वा । – उ०को०, ३/५८

✓अर्ज – अर्जने + उनन् प्रत्ययः (अर्जेर्णिलुक् च – उ०को०, ३/५८) ।

## अर्णः

ऋच्छति गच्छति इति अर्णः जलम् ।

– उ०को०, ४/१९७

✓ऋ – गतौ + असुन् प्रत्ययः नुडागमश्च (उदके नुट् च – उ०को०, ४/१९७) ।

## अर्थः

अर्यते प्राप्यतेऽसौ अर्थः शब्दानां वाच्यो धनं कारणं वस्तु प्रयोजनं निवृत्तिर्विषयो वा। – उ०को०, २/४

✓ऋ – गतिप्रापणयोः + थन् प्रत्ययः (उषिकुषिगार्त्तिभ्यस्थन् – उ०को०, २/४) ।

## अर्पिसः

अर्पयतीति अर्पिसः अग्रमांसं वा ।

– उ०को०, ४/२

✓ऋ – गतिप्रापणयोः + इसन् प्रत्ययः पुगागमश्च (ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्णुजिष्ठजिसन्स्यनिथिन्नुल्यसासानुकः – उ०को०, ४/२) ।

## अर्भः

इयर्त्ति गच्छतीति अर्भः शिशुर्वा ।

– उ०को० ३/१५२

✓ऋ – गतौ + भन् प्रत्ययः (अर्तिगृभ्यां भन् – उ०को०, ३/१५२) ।

## अर्भकः

ऋध्यति वर्धतेऽसौ अर्भकः।– उ०को०, ५/५३

✓ऋधु – वृद्धौ + वुन् प्रत्ययः धस्य भकारश्च (अर्भकपृथुकपाका वयसि – उ०को०, ५/५३)।

## अर्मः

ऋच्छति प्राप्नोति सः अर्मः चक्षूरोगो वा। – उ०को०, १/१४०

✓ऋ – गतिप्रापणयोः + मन् प्रत्ययः (अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०) ।

## अर्य्यजारा

अर्य्यौ स्वामिवैश्यौ जारयति वयसा हन्ति सा । – यजु०, २३/३०

अर्य + ✓जॄ – वयोहानौ + अण् प्रत्ययः ततः टाप् प्रत्ययः स्त्रियाम् ।

## अर्यमन्

योऽर्यान् श्रेष्ठान् मनुष्यान् मिमीते मन्यते तत्सम्बुद्धौ । – ऋ०, २/२७/५

य ऋच्छति नियच्छत्याकर्षणेन पृथिव्यादीन् स सूर्यलोकस्य । – यजु०, ३/३१

योऽर्यान् वैश्यान् स्वामिनो वा मन्यते सः।

– यजु०, ३३/१५

योऽर्यान् मन्यते स न्यायाधीशः ।

– यजु०, ३६/९

अर्य स्वामिनं मिमीते मन्यते जानातीति अर्यमा आदित्यो वा । – उ०को०, १/१५९

योऽर्य्यान् स्वामिनो न्यायाधीशान् मिमीते मान्यान् करोति सोऽर्यमा । – स०प्र०प्र०समु०

✓ऋ – गतिप्रापणयोः + यत् प्रत्ययः > अर्य + ✓माङ् – माने + कनिन् प्रत्ययः निपातनात् (श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्व-

न्मातरिश्वन्मघवन्निति – उ०को०, १/१५९) ।

## अर्वा

य ऋच्छति तेनाश्वेनेष । – ऋ०, १/१५५/१

यः सद्यः ऋच्छति गच्छति सः ।

– ऋ०, ४/११/४

यः सर्वानृच्छति सः । – यजु०, २२/१९

ऋच्छतीति अर्वा अश्वो निन्द्यो वा ।

– उ०को०, ४/११३

ऋच्छति गच्छतीति अर्वा अश्वो वा ।

– उ०को०, ५/५४

✓ऋ – गतिप्रापणयोः + वनिप् प्रत्ययः (स्नामदिपद्यर्तिपृशकिभ्यो वनिप् – उ०को०, ४/११३) ।

## अर्वाङ्

अर्वागुपरिष्टादधस्थं स्थानमभीष्टं वाऽञ्चति येन तम् । – ऋ० १/३४/१२

योऽर्वतो वेगादिगुणानश्वानञ्चति प्राप्नोति तम् । – ऋ० १/४६/१०

अर्वागधोऽञ्चन्ति ये । – ऋ०, १/१६४/१९

योऽर्वागधो देशमञ्चति गच्छति तम् ।

– ऋ०, १/१७७/१

योऽधोऽञ्चति सः । – ऋ०, २/१८/५

येऽवागञ्चन्ति विद्यां प्राप्नुवन्ति ते ।

– ऋ०, २/२९/६

याऽर्वणोश्वानञ्चति सा । – ऋ०, २/३४/१५

योऽवस्तादञ्चत्यधो गच्छति सः ।

– ऋ०, ३/६/९

योऽर्वागधोञ्चति गच्छति तम् ।

– ऋ०, ३/४१/९

यावर्वागञ्चतो गच्छतस्तौ ।

– ऋ०, ५/७६/१

योऽर्वागञ्चति । – ऋ०, ६/१९/९

योऽधोऽञ्चति सः । – ऋ०, ६/२७/३

येऽर्वागञ्चन्ति तान् । – ऋ०, ६/४८/४

योऽधोञ्चति । – ऋ०, ६/६३/१

योऽर्वाङधोऽञ्चति । – ऋ०, ७/२/११

सुशिक्षा विद्याभ्यासात् पश्चाद्विज्ञानमञ्चति प्राप्नोत्यनया सा ।– यजु०, ८/४

योऽर्वाचीनाननुत्कृष्टानुत्कृष्टान् कुर्त्तुमञ्चति जानाति सः । – यजु०, १५/४६

योऽर्वाचीनान् अञ्चति प्राप्नोति सः ।

– यजु०, ३४/२६

अर्वन् + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः (ऋत्विग्दधृग्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च – अष्टा०, ३/२/५९) ।

## अर्शः

ऋच्छति प्राप्नोति दुःखं येन तत् अर्शः गुदरोगो वा । – उ०को०, ४/१९६

✓ऋ – गतिप्रापणयोः + असुन् प्रत्ययः, शुडागमश्च (व्याधौ शुद् च – उ०को०, ४/१९६) ।

## अर्शसानः

य ऋच्छति प्राप्नोति सर्वान् स अर्शसानः अग्निर्वा । – उ०को०, २/८८

✓ऋ – गतिप्रापणयोः + असानच् प्रत्ययः शुडागमश्च (अर्त्तेर्गुणः शुद् च – उ०को०, २/८८) ।

## अर्हन्तः

अर्हति पूज्यो भवतीति अर्हन्तः ।

– उ०को० ३/१२६

✓अर्ह – पूजायां + झच् प्रत्ययः (जृविशिभ्यां झच् – उ०को०, ३/१२६) ततः अन्तादेशः (झोऽन्तः – अष्टा०, ७/१/३) ।

## अलकं

अलति भूषितो भवतीति अलकं शीतादिकं वा । – उ०को०, ५/३५

✓अल – भूषणपर्याप्तवारणेषु + वुन् प्रत्ययः (कृञादिभ्यः संज्ञायां वुन् – उ०को०, ५/३५) ।

## अलतिः

अलति भूषयति समर्थो वा । भवति स अलतिः गीतमात्रिका वा ।

– उ०को०, ४/६०

✓अल – भूषणपर्याप्तवारणेषु + अतिः प्रत्ययः (वहिवस्यर्त्तिभ्यश्चित् – उ०को०, ४/६०) ।

## अ-लाबूः

न लम्बतेऽधो न स्रवति गच्छति सा अलाबूः तुम्बी वा । – उ०को०, १/८७

अ (नञ्) + ✓लबि – शब्दे + ऊः प्रत्ययः धातोः दीर्घत्वञ्च (लम्बेर्नलोपश्च – उ०को०, १/८७) ।

## अलातृणः

योऽलं तृणाति सः । – ऋ०, ३/३०/१०

✓अल – भूषणपर्याप्तिवारणेषु + आङ् + ✓तृदिर् – हिंसायां + युच् प्रत्ययः ।

## अलिन्दः

अलति भूषयतीति अलिन्दः गृहैकदेशो वा। – उ०को०, ४/८५

✓अल – भूषणपर्याप्तवारणेषु + किन्दच् प्रत्ययः बाहुलकात् (कुणिपुल्योः किन्दच् – उ०को०, ४/८५)।

## अलीकं

अलति वारयतीति अलीकं मिथ्या वा ।

– उ०को०, ४/२५

✓अल – भूषणपर्याप्तवारणेषु + ईकन् प्रत्ययः (अलीकादयश्च – उ०को०, ४/२५) ।

## अवः

अवन्ति येन तद्रक्षणादिकम् ।

– ऋ०, १/३९/७

✓अव – रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) ।

## अवकया

यया अवन्ति रक्षन्ति तया क्रियया ।

– यजु०, १७/४

(स्त्री०तृ०ए०व०) ✓अव – रक्षणगतिकान्तिप्रीत्यादिषु + ण्वुल प्रत्ययः ।

## अवगाथः

अवगातेऽवगच्छते जानीतेऽसौ अवगाथः प्राप्तः स्नानं वा । – उ०को०, २/९

अव + ✓गै – शब्दे, अर्चतिकर्मा च अथवा ✓गा – स्तुतौ + थन् प्रत्ययः (उशिकुषिगार्त्तिभ्यस्थन् – उ०को०, २/४) ।

## अवत्सारस्य

योऽवतो रक्षकान् सरति प्राप्नोति तस्य ।

– ऋ०, ५/४४/१०

(ष०ए०व०) ✓अव-रक्षणगतिकान्ति प्रीत्यादिषु + अतच् प्रत्ययः > अवत् + ✓सृ – गतौ + अण् प्रत्ययः।

## अवनिः

अवति रक्षणादिकं करोतीति अवनिः भूमिर्वा। – उ०को०, २/१०२

✓अव – रक्षणादिषु + अनिः प्रत्ययः (अर्त्तिसृधृधम्यभ्यश्यवितृभ्योऽनिः – उ०को०, २/१०२) ।

## अवमं

अवतीति अवमम् । – उ०को०, ५/५४

✓अव – रक्षणादिषु + अमः प्रत्ययः (अवद्यावमाधमार्वरेफाः कुत्सिते – उ०को०, ५/५४)।

## अवभृथः

**यो निषेकेण गर्भं बिभर्त्ति तत्।**

**– यजु०, ८/२७**

**अवबिभर्त्तीति अवभृथः पक्षिभेदो यज्ञान्तस्नानं वा। – उ०को०, २/३**

अव + ✓भृञ् – भरणे + क्थन् प्रत्ययः (अवे भृञः – उ०को०, २/३)।

## अवद्यं

**वदितुमयोग्यम्। – उ०को०, ५/५४**

अ (नञ्) + ✓वद – व्यक्तायां वाचि + यत् प्रत्ययः (अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु – अष्टा०, ३/१/१०१)।

## अ-वद्यगोहना

**अवद्यानि गर्ह्याणि निन्दितानि दुःखानि गूहत आच्छादयतो दूरीकुरुतस्तौ।**

**– ऋ०, १/३४/३**

अ (नञ्) + ✓वद – व्यक्तायां वाचि + यत् प्रत्ययः (अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु – अष्टा०, ३/१/१०१) > अवद्य + ✓गू – संवरणे + ल्युट् प्रत्ययः (नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः – अष्टा०, ३/१/१३४) ल्युणिन्यचः ऊत्वाभावः (ऊदूपधायाः गोहः – अष्टा०, ६/४/८९)।

## अवसः

**अवति रक्षादिकं करोतीति अवसः राजा वा। – उ०को०, ३/११७**

✓अव – रक्षणादिषु + असच् प्रत्ययः (अत्यविचमितमिनमिटभिलभिनभितपियतिपनिपणिमहिभ्योऽसच् – उ०को०, ३/११७)।

## अवस्थाः

**अवतिष्ठन्ति विरुद्धं प्राप्नुवन्ति यासु ता वर्त्तमाना दशाः। – ऋ०, ५/१९/१**

(स्त्री०प्र०ब०व०) – अव + ✓ष्ठा – गतिनिवृत्तौ + अङ् प्रत्ययः (आतश्चोपसर्गे – अष्टा०, ३/३/१०६)।

## अवस्यूः

**योऽवसीव्यति तारादितन्तून् सन्तानयति येन वा सः। – यजु०, २/३२**

अव + ✓षिवु – तन्तुसन्ताने + क्विप् प्रत्ययः (क्विप् च – अष्टा०, ३/२/७६), वकारस्य ऊठादेशः (छ्वोः शूडनुनासिके च – अष्टा०, ६/४/१९)।

## अविः

**योऽवति रक्षति सः। – यजु०, १९/९०**

✓अव – रक्षणगतिकान्तिप्रीत्यादिषु + इक् प्रत्ययः।

## अविनः

**अवति रक्षणादिकं करोतीति अविनः अध्वर्युर्वा। – उ०को०, २/४६**

✓अव – रक्षणादिषु + इनच् प्रत्ययः (श्यास्त्याहृञविभ्य इनच् – उ०को०, २/४६)।

## अविषः

**अवन्ति नद्यो गच्छन्ति यस्मिन् स अविषः समुद्रः। – उ०को०, १/४५**

✓अव-रक्षणादिषु + टिषच् प्रत्ययः (अविमह्योष्टिषच् – उ०को०, १/४५)।

## अ-विद्रियाभिः

**या विदीर्यन्ते ता विद्रास्ता अर्हन्ति ता विद्रियाः। अविद्यमाना विद्रिया यासु क्रियासु ताभिः। – ऋ०, १/३५/१५**

(स्त्री०तृ०ब०व०) अ (नञ्) + वि + ✓दॄ – विदारणे + घ प्रत्ययः।

## अ-विश्वमिन्वं

अविद्यमानानि विश्वानि मिन्वन्ति येन तम्।

– ऋ०, २/४०/३

अ (नञ्) + √विश् – प्रवेशने + क्वन् प्रत्ययः (अशुप्रुषिलटिकणिखटिविशिभ्यः क्वन् – उ०को०, १/१५१) > अ-विश्व + √मिवि – सेचने + शतृ प्रत्ययः ।

## अवीः

अवतीति अवीः रजस्वला स्त्री वा ।

– उ०को०, ३/१५८

√अव – रक्षणगतिकान्तिप्रीत्यादिषु + ईः प्रत्ययः (अवितृस्तृतन्त्रिभ्यः ईः – उ०को०, ३/१५८) ।

## अ-वीरहा

अवीरान् कातरान् मनुष्यान् हन्ति येन सः। – उ०को०, २/१३

अ (नञ्) + √वी – गतिव्याप्तिप्रजनकान्त्य-सनखादनेषु + रक् प्रत्ययः (स्फायितञ्चिवञ्चिश-किक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदि-मदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिव-सिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) अथवा √वीर – विक्रान्तौ + अच् प्रत्ययः > अवीर+ √हन् – हिंसागत्योः + क्विप् प्रत्ययः धातोरुपधादीर्घश्च ।

## अ-शस्तिहा

अप्रशंसानां दुष्टानां हन्ता ।

– यजु०, ३३/६६, ३३/९५

अ (नञ्) + √शंसु – स्तुतौ + क्तिन् प्रत्ययः > अशस्ति+ √हन् – हिंसागत्योः + क्विप् प्रत्ययः ।

## अशिमिदाय

यदस्यते युज्यते तदन्नं तन्मेदते यस्मिंस्तस्मै रसाय । – यजु०, ३८/३

(च०ए०व०) √अश – भोजने + इ प्रत्ययः > अशि+ √ञिमदा – स्नेहने + कः प्रत्ययः ।

## अशीतमः

अश्नुते व्याप्नोति चराचरं यज्ञं सोऽतिश-यितस्तत्संबुद्धौ स वा । – यजु०, २/२०

√अशूङ् – व्याप्तौ + इ प्रत्ययः ततः तमप् प्रत्ययः पूर्वपदस्य च दीर्घः ।

## अशनिः

येनाश्नाति योऽश्नुते व्याप्नोति वा स अशनिः वज्रं वा । – उ०को०, २/१०२

√अश – भोजने/ √अशूङ् – व्याप्तौ + अनिः प्रत्ययः (अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिः – उ०को०, २/१०२)।

## अशित्रं

अश्नुते व्याप्नोतीति अशित्रं चरुर्वा ।

– उ०को०, ४/१७३

√अशूङ् – व्याप्तौ + इत्र प्रत्ययः (अशित्रादिभ्य इत्रोत्रौ – उ०को०, ४/१७३) ।

## अशिरः

अश्नाति यः पदार्थान् सः अशिरः अग्निः। धृष्टतयाऽश्नाति वाऽशिरो दुर्जनः ।

– उ०को०, १/५२

√अश – भोजने + किरच् प्रत्ययः (अशेर्नित् – उ०को०, १/५२) ।

## अश्मा

अश्नुते व्याप्नोति स मेघः ।

– यजु०, ८६/६०

अश्नात्यश्नुते व्याप्नोति वा स अश्मा मेघः पाषाणो वा । – उ०को०, ४/१४७

√अश – भोजने/ √अशूङ् – व्याप्तौ संघाते च + मनिन् प्रत्ययः (अशिशकिभ्यां छन्दसि – उ०को०, ४/१४७) ।

## अश्वः

आशुगमनहेतुभिरग्न्यादिभिस्तुरङ्गहस्त्या-दिभिर्वा । – ऋ०, १/१७/९

आशुगामी । – ऋ०, १/१६१/३
आशु गमयितारम् । – ऋ०, १/१६३/२
आशुगामी वायुरग्निर्वा । – ऋ०, १/१६४/२
आशुगामिनोऽग्न्यादयः । – ऋ०, १/१६४/३
योऽश्नाति भुङ्क्ते तद्वत् । – ऋ०, २/३०/४
योऽश्नुते सः । – ऋ०, ६/४७/२४
आशुगमनशीला । – यजु०, २१/३३
योऽश्नुते व्याप्नोति मार्गान्सः ।
– यजु०, २२/१९
योऽश्नुते मार्गान् सोऽग्निः । – यजु० २३/१२
आशुगामी तुरङ्गः । – यजु०, २४/१
आशुगामिनोऽग्न्यादीन् तुरङ्गान् वा ।
– यजु० ३३/४
अश्नुते व्याप्नोतीति अश्वः तुरङ्गो वह्निर्वा।
– उ०को०, १/१५१
✓अशूङ – व्याप्तौ अथवा ✓अश-भोजने + क्वन् प्रत्ययः (अशूप्रुषिलटि- कणिखटिविशिभ्यः क्वन् – उ०को०, १/१५१) ।

## अ-श्वत्थे

श्वः स्थाता न स्थाता वा वर्त्तते तादृशे देहे। – यजु०, १२/७९
श्वः स्थास्यति न स्थास्यति वा तस्मिन्ननित्ये संसारे । – यजु०, ३५/४
(स०ए०व०) – अ (नञ्) + श्वः (उपाशंसनीयः कालः) + ✓ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ।

## अश्वदाः

या अश्वादीन् पशून् प्रददति ।
– ऋ०, १/११३/१८
अश्वानग्न्यादींस्तुरङ्गान् वा ददति ।
– ऋ०, ५/४२/८
(प्र०ब०व०) – अश्व + ✓डुदाञ् – दाने + कः प्रत्ययः ।

## अश्वदावन्

योऽश्वान् व्याप्तिकरान् विज्ञानादिगुणान् ददाति तत् । – ऋ०, ५/१८/३
अश्व + ✓डुदाञ् – दाने + वनिप् प्रत्ययः ।

## अश्वमिष्टे

योऽश्वमिच्छति तत्सम्बुद्धौ । – ऋ०, २/६/२
(अश्वस्य इष्टि इच्छा यस्य सः) अश्व + ✓इषु - इच्छायां + क्तिन् प्रत्ययः, मुमागमश्चेति।

## अश्वयुजः

येऽश्वान् सद्योगामिनः पदार्थान् योजयन्ति।
– ऋ०, ५/५४/२
(प्र०ब०व०) अश्व + ✓युजिर् – योगे + क्विप् प्रत्ययः ।

## अश्वयोगाः

येऽश्वान्योजयन्ति ते । – ऋ०, १/१८६/७
(प्र०ब०व०) – अश्व + ✓युजिर् – योगे + अण् प्रत्ययः ।

## अश्वसनिः

अश्वानामग्न्यादिपदार्थानां वा सनिर्दाता।
– यजु०, ८/१२
अश्व + ✓षण-सम्भक्तौ + इ प्रत्ययः (खनिकष्यज्यसि-वनिसनिध्वनिग्रन्थिचरिभ्यश्च–उ०को०, ४/१४०)।

## अश्वसातमः

योऽश्वान् सनति संभजति सोऽतिशयितः।
– ऋ०, १/१७५/५
अश्व + ✓षण – सम्भक्तौ + क्विप् प्रत्ययः ततः तमप् प्रत्ययः ।

## अश्वसादं

योऽश्वान् सादयति तम् । – यजु०, ३०/१३
(द्वि०ए०व०) – अश्व + ✓षद्लृ – विशरणगत्यवसानेषु + अण् प्रत्ययः ।

## अश्रिः

आश्रयति तत्रेति अश्रिः कोणो वा ।
– उ०को०, ४/१३८

आ + ✓श्रिञ् – सेवायां + इञ् प्रत्ययः आङुपसर्गस्य ह्रस्वत्वं (आङि श्रिहनिभ्यां ह्रस्वश्च – उ०को०, ४/१३८) ।

## अश्रुः

अस्यति प्रक्षिपति जलमिति अस्रुः। बहुलवचनात् शकारभेदे–अश्रुः नेत्रजलं वा। – उ०को०, ४/१०२

अश्नुते व्याप्नोतीति अश्रु नेत्रजलं वा । – उ०को०, ५/२१

१- ✓असु – क्षेपणे + रुः प्रत्ययः (जत्र्वादयश्च – उ०को०, ४/१०२) ।
२- ✓अशूङ् – व्याप्तौ + ड्रुन् प्रत्ययः रुडागमश्च (अश्व्रादयश्च – ५/२१)।

## अष्ट

अश्नुते व्याप्नोतीति अष्टन् संख्या वा । – उ०को०, १/१५७

✓अशूङ् – व्याप्तौ संघाते च + कनिन् प्रत्ययः तुडागमश्च (सप्यशूभ्यां तुट् च – उ०को०, १/१५७)।

## अष्टका

अश्नुते सा अष्टका वैदिककर्म विशेषो वा। – उ०को०, ३/१४८

✓अशूङ् – व्याप्तौ संघाते च + तकन् प्रत्ययः (इष्यशिभ्यां तकन् – उ०को०, ३/१४८) ।

## असनः

अस्यति प्रक्षिपतीति असनः पीतवर्णः शालवृक्षो वा । – उ०को०, २/७८

✓असु – क्षेपणे + युच् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/७८) ।

## असिः

अस्यति क्षिपत्यनेनेति असिः खड्गो वा। – उ०को०, ४/१४०

✓असु – क्षेपणे + इः प्रत्ययः (खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च – उ०को०, ४/१४०) ।

## असुः

अस्यति प्रक्षिपति वायुमिति असुः प्राणः। – उ०को०, १/१०

✓असु – क्षेपणे + उः प्रत्ययः (शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१०) ।

## असुतृपः

येऽसुषु प्राणेषु तृप्यन्ति ते । – यजु०, १७/३१

(प्र०ब०व०) ✓अस – गतिदीप्त्यादानेषु क्षेपणे वा + उः प्रत्ययः (शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१०) > असु + ✓तृप – प्रीणने + कः प्रत्ययः ।

## असुनीतिः

या असून् प्राणान् नयति प्राप्नोति ताम् । – यजु०, १९/६०

असवः प्राणा नीयन्ते येन सोऽसुनीतिः । – ऋ० भा० भू० (पुनर्जन्मविषयः)

असु + ✓णीञ् – प्रापणे + क्तिन् प्रत्ययः (स्त्रियां क्तिन् – अष्टा०, ३/३/९४) ।

## असुरः

असुषु रमते तत्संबुद्धौ स वा । – ऋ०, १/२४/१४

सर्वेभ्यः प्राणदः सूर्योदये सृता इवोत्तिष्ठन्तीत्यतः । असुषु प्राणेषु रमते वा। – ऋ०, १/३५/७

असून् प्राणान् राति ददात्यविद्यमानरूपगणो वा सोऽसुरो वायुः । – ऋ०, १/३५/१०

मेघो वा यः प्रज्ञां रातिं ददाति सः । – ऋ०, १/५४/३

असुषु प्राणेषु रतस्य । – ऋ०, १/११०/३

योऽस्यति दोषान् प्राणेषु रममाणो वा

तस्य। – ऋ०, ३/३८/४

यदसुषु प्राणेषु रमते तत् । – ऋ०, ३/५५/१

योऽसुषु रमते सः । – ऋ०, ७/३०/३

असुषु प्राणेषु रममाणो विद्युदग्निरिव । – ऋ०, ७/५६/२४

असुं प्राणं राति ददातीत्यसुरो मेघः । – उ०को०, १/१०

अस्यति प्रक्षिपति धर्मं शुभगुणांश्च स असुरः मेघो दुर्जनादिर्वा ।– उ०को०, १/४२

१- असु + √रा – दाने + कः प्रत्ययः ( आतोऽनुपसर्गे कः – अष्टा०, ३/२/३ ) ।

२- असु + √रमु – क्रीडायां/√अस – क्षेपणे + उरन् प्रत्ययः (असेरुरन् – उ०को०, १/४२) ।

## असुरघ्नः

दुष्टकर्मकारिणां हन्ता । – ऋ०, ६/२२/४

योऽसुरान् दुष्टकर्मकारिणो हन्ति तिरस्करोति तस्मै । – ऋ०, ७/१३/१

असुर + √हन् – हिंसागत्योः + कः प्रत्ययः, धातोरुपधालोपः ( गमहनजनखनघसां लोपः क्ङित्यनङि – अष्टा०, ६/४/९८ ) ततः कुत्वञ्च (हो हन्तेर्ञ्णिन्नेषु – अष्टा०, ७/३/५४) ।

## असुरत्वं

अस्यति प्रक्षिपति दूरीकरोति सर्वाणि दुःखानि तस्य भावम् । – ऋ०, ३/५५/४

असुर + त्व प्रत्ययः भावे कर्मणि वा ।

## अ-सुष्वीन्

ये ऽसूनभिसुन्वन्ति तान् । – ऋ०, ४/२४/५

अ (नञ्) + √षुञ् - अभिषवे + वि प्रत्ययः षुगागमश्च।

## असूं

याऽस्यति प्रक्षिपति ताम् । – यजु०, ३०/१४

√असु – क्षेपणे + ऊङ् प्रत्ययः स्त्रियाम् ।

## अस्तः

अस्यन्ति दूरीकुर्वन्ति दुःखानि यस्मिंस्तद्गृहम् । – ऋ०, १/११६/५

योऽस्यति सः । – ऋ०, ७/१८/११

√असु – क्षेपणे + तन् प्रत्ययः ( हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६ ) ।

## अ-स्थूरि

तिष्ठन्ति यस्मिन्नालये तत्स्थूरं तन्निन्दितं विद्यते यस्मिन् तत्स्थूरि न स्थूरि अस्थूरि यथा स्यात्तथा, अत्र निन्दार्थ इतिः । – यजु०, २/२७

अ (नञ्) + √ष्ठा – गतिनिवृत्तौ ऊरन् प्रत्ययः (स्थः किच्च – उ०को०, ५/४) > अस्थूर + इनि प्रत्ययः ( निन्दितार्थे ) ।

## अस्मत्राञ्चः

ये शत्रुभ्योऽस्माँस्त्रायन्ते तानञ्चन्ति प्राप्नुवन्ति । – ऋ०, ६/४४/१९

अस्मद् + त्रा प्रत्ययः (देये त्रा च – अष्टा०, ५/४/५५) अथवा अस्मद् + √त्रैङ् – पालने + कः प्रत्ययः > अस्मत्र + √अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः ( ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९ ) ।

## अस्मद्राताः

येऽस्मभ्यं रान्ति शुभान् गुणान् ददति ते। – यजु०, ७/४६

(प्र०ब०व०)अस्मद् + √रा – दाने + तृच् प्रत्ययः।

## अस्मद्रयक्

योऽस्मानञ्चति प्राप्नोति । – ऋ०, ४/२२/८

योऽस्मानञ्चति जानाति ज्ञापयति वा । – ऋ०, ५/४/२

योऽस्मानञ्चति सः । – ऋ०, ६/१९/३

येऽस्मानञ्चन्ति प्राप्नुवन्ति ते ।

– ऋ०, ७/१९/१०

योऽस्मानञ्चति सर्वज्ञतया जानाति ।

– यजु०, ७/३१

अस्मद् + ✓अञ्चु – गतिपूजनयोः + क्विप् प्रत्ययः, ततः अद्रयादेशः ( विष्वग्देवयोश्च टेरद्र्यञ्चतौवप्रत्यये – अष्टा०, ६/३/९१ ) ।

## अस्मध्रुक्

अस्मान् द्रुह्यति सः । – ऋ०, १/३६/१६

योऽस्मान् द्रोग्धि । – ऋ०, १/१७६/३

अस्मद् + ✓द्रुह – जिघांसायां + क्विप् प्रत्ययः, दकार लोपः, हकारस्य धकारः ( वा द्रुहमुहष्णुहष्णिहाम् – अष्टा०, ८/२/३३ ) ।

## अस्मयुः

योऽस्मान्याति सः । – ऋ०, ५/७४/८

अस्मद् + क्यच् प्रत्ययः ( सुप आत्मनः क्यच् – अष्टा०, ३/१/८ ), + उ प्रत्ययः ( क्याच्छन्दसि – अष्टा०, ३/२/१७० ), छान्दसः दकारलोपः ।

## अ-स्वप्नजौ

स्वप्नो न जायते ययोस्तौ । –यजु०, ३४/५५

( प्र०द्वि०व० ) अ ( नञ् ) + ✓ञिष्वप् – स्वप्ने + नन् प्रत्ययः > अस्वप्न + ✓जनी – प्रादुर्भावे + ड प्रत्ययः।

## अस्त्रं

अस्यति क्षिपतीति अस्त्रम् ।

– उ०को०, ४/१५९

✓असु – क्षेपणे + ष्ट्रन् प्रत्ययः ( सार्वधातुभ्यः ष्ट्रन् – उ०को०, ४/१५९ ) ।

## अस्थि

अस्यति प्रक्षिपति येन तत् अस्थि कीकसं शरीरान्तरवयवो वा । – उ०को०, ३/१५४

✓असु – क्षेपणे + क्थिन् प्रत्ययः ( असिसञ्जिभ्यां क्थिन् – उ०को०, ३/१५४ ) ।

## अस्रं

अस्यतीति अस्रं रुधिरं वा ।

– उ०को०, २/१३

✓असु – क्षेपणे + रक् प्रत्ययः बाहुलकात् ( स्फायितञ्चिवञ्चिकिक्षिपिक्षुदिसृपितृपिदृपिवन्धुन्दि-श्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिच-न्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ ) ।

## अस्रपः

अस्रं पिबतीति अस्रपो दंशः ।

– उ०को०, २/१३

अस्र + ✓पा – पाने + कः प्रत्ययः ।

## अ-हः

जहाति त्यजति पृथक्करोत्यन्धकारमिति अहः दिनम् । – उ०को०, १/१५८

अ ( नञ् ) + ✓हा – त्यागे + कनिन् प्रत्ययः ( नञि जहातेः – उ०को०, १/१५८ ) ।

## अहल्या

अहति व्याप्नोतीति अहल्या रात्रिर्वा। अहर्लीयतेऽस्यामिति ।

– उ०को०, ४/११२

✓अह – व्याप्तौ + यक् प्रत्ययः अलुगागमः ( अघ्न्यादयश्च – उ०को०, ४/११२ ) अथवा अह + ✓लीङ् – श्लेषणे + यक् प्रत्ययः स्त्रियाम् ।

## अहर्विद्

य अहर्विज्ञानप्रकाशं विन्दन्ति प्राप्नुवन्ति।

– ऋ०, १/२/२

योऽहनि विन्दति तम् । – ऋ०, १/१५६/४

अहः + ✓विदलृ – लाभे + क्विप् प्रत्ययः ।

## अहिः

**आहन्तीति अहिः मेघः सर्पो वा ।**

– उ०को०, ४/१३८

आ + ✓हन् – हिंसागत्योः + इञ् प्रत्ययः, आङुपसर्गस्य ह्रस्वत्वं (आङिश्रिहनिभ्यां ह्रस्वश्च – उ०को०, ४/१३८) ।

## अहिघ्ने

**योऽहिं मेघं हन्ति तस्मै ।** – ऋ०, २/३०/१

(च०ए०व०) अहि + ✓हन् – हिंसागत्योः + कः प्रत्ययः, धातोरुपधालोपः (गमहनजनखनघसांलोपः क्ङित्यनङि – अष्टा०, ६/४/९८), कुत्वञ्च (हो हन्तेः ञ्णिन्नेषु – अष्टा०, ७/३/५४) ।

## अहिमन्यवः

**येऽहिं मेघं मानयन्ति ज्ञापयन्ति ते ।**

– ऋ०, १/६४/८

**येऽहिं व्याप्तिं मानयन्ति ज्ञापयन्ति ते ।**

– ऋ०, १/६४/९

(प्र०ब०व०) अहि + ✓मन – ज्ञाने + युच् प्रत्ययः (यजिमनिशुन्धिदसिजनिभ्यो युच् – उ०को०, ३/२०)।

## अहिशुष्मः

**योऽहिं मेघं शोषयति स सूर्यः तद्वद्वर्तमान।**

– ऋ०, ५/३३/५

अहि + ✓शुष – शोषणे + मन् प्रत्ययः (अविसिवि-सिशुषिभ्यः कित् – उ०को०, १/१४४) ।

## अ-हुतादः

**येऽहुतमदन्ति ते ।** – यजु०, १७/१३

(प्र०ब०व०) अ (नञ्) + ✓हु – दानादानयोः + क्त प्रत्ययः > अहुत+ ✓अद् – भक्षणे + क्विप् प्रत्ययः ।

## अंहुभेद्याः

**अंहुमपराधं या भिनत्ति तस्याः ।**

– यजु०, २३/२४

(ष०ए०व०) ✓अहि – गतौ + उः प्रत्ययः > अंहु + ✓भिदिर् – विदारणे – ण्यत् प्रत्ययः ।

## अंहूरणा

**येऽहयन्ति तेऽहवो गन्तारस्तेषां रणः सङ्ग्रामो यस्यां सा ।** – ऋ०, ६/४७/२०

अंहु + ✓रण – शब्दे + अप् प्रत्ययः (वशिरण्यो-रुपसंख्यानम् – अष्टा०वा०, ३/३/५८) ।

## अंहोयुवः

**येंऽहोपराधं युवन्ति पृथक्कुर्वन्ति ते ।**

– ऋ०. ५/१५/३

(प्र०ब०व०) – ✓अम – रोगे + असुन् प्रत्ययः – हुगागमश्च (अमेर्हुक् च – उ०को०, ४/२१३) + ✓यु – मिश्रणामिश्रणयोः + क्विप् प्रत्ययः ।

## आक्रमः

**समन्तात्क्रमन्ते पदार्था यस्मिन्नन्तरिक्षे तस्य विज्ञापकः ।** – यजु०, १५/९

आङ् + ✓क्रमु – पादविक्षेपे + घ प्रत्ययः ।

## आकाशः

**यः सर्वतः सर्वं जगत् प्रकाशयति स आकाशः ।** – स०प्र० (*प्रथमसमुल्लासः*)

आङ् + ✓काशृ – दीप्तौ + घञ् प्रत्ययः ।

## आकेनिपासः

**य आके समीपे नितरां पान्ति ते किरणाः।**

– ऋ०, ४/४५/६

(प्र०ब०व०) आके (सामीप्यर्थे) + नि + ✓पा – रक्षणे + कः प्रत्ययः ।

## आक्षित्

**यः समन्तात् क्षियति सर्वत्र वसति सः ।**

– ऋ०, ३/५५/५

आङ् + ✓क्षि – निवासगत्योः + क्विप् प्रत्ययः तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/७१) ।

## आखनिकः

आ समन्तात् खनतीति आखनिकः मूषिको वराहो वा । – उ०को०, २/४५

आङ् + √खनु – अवदारणे + इकन् प्रत्ययः ( आङि पणिपनिपतिखनिभ्यः – उ०को०, २/४५ ) ।

## आखरेष्ठः

समन्तात् खनति यं तस्मिन् तिष्ठतीति सः । – यजु०, २/१

आङ् + √खनु – अवदारणे + डरः प्रत्ययः ( खनो डडरेकेकवकाः – अष्टा०वा०, ३/३/१२५ ) > आखरः + √ष्ठा – गतिनिवृत्तौ + क प्रत्ययः ( सुपि स्थः – अष्टा०, ३/२/४ ) ।

## आखुः

समन्तात् खनत्यवदृणाति येन भोजनसाधनेन सः । – यजु०, ३/५७

आ समन्तात् खनति भूमिमिति आखुः मूषको वराहो वा । – उ०को०, १/३३

आ + √खनु – अवदारणे + कु प्रत्ययः ( आङ्परयोः खनिशृभ्यां डिच्च – उ०को०, १/३३ ) ।

## आगः

ईयते प्राप्यते ज्ञायते वा तत् आगः अपराधो दण्डो वा । – उ०को०, ४/२१२

√इण – गतौ + असुन् प्रत्ययः, आगादेशः ( इण आगोऽपराधे च – उ०को०, ४/२१२ ) ।

## आग्नीध्रात्

अग्निं धरति यस्मात् तस्मात् ।

– ऋ०, २/३६/४

अग्निरिध्यते प्रदीप्यते यस्मिन्तस्येदं शरणमाश्रयणं तस्मात् ।

– यजु०, २/१०

१- (पं०ए०व०)- अग्नि + √धृञ्-धारणे+अण् प्रत्ययः (तस्येदं अष्टा०, ४/३/१२०)।

२- ( पं०ए०व० )-अग्नि+√ञिइन्धी-दीप्तौ+रण् प्रत्ययः ( अग्नीधः शरणे रण् भञ्च - अष्टा० वा० ४/३/१२० ।

## आग्रयणः

अङ्गति प्राप्नोति येन तस्यायम् ।

– यजु०, १३/५८

आङ् + अग्र + √अय – गतौ + युच् प्रत्ययः ।

## आचार्यः

य आचारं ग्राहयति सर्वा विद्या बोधयति स आचार्य ईश्वरः ।

– स० प्र० ( *प्रथमसमुल्लासः* )

आङ् + √चर – गतिभक्षणयोः + ण्यत् प्रत्ययः धातोरुपधावृद्धिश्च ।

## आजिः

अजन्ति प्रक्षिपन्ति शस्त्राण्यस्मिँस्तम् ।

– ऋ०, ४/२४/८

अजन्ति जानन्ति सुकर्माणि येन तं सङ्ग्रामम् । – यजु०, १७/९८

अजन्ति क्षिपन्ति शस्त्रादिकं यत्र स आजिः संग्रामो वा । – उ०को०, ४/१३१

√अज – गतिक्षेपणयोः + इण प्रत्ययः ( अज्यतिभ्यां च – उ०को०, ४/१३१ ) ।

## आज्यपाः

य आज्यं पान्ति रक्षन्ति ते ।

– यजु०, २१/४०

य आज्यं पातुमर्हं रसं पिबन्ति ते ।

– यजु०, २१/५८

य आज्यं पिबन्ति वाऽऽज्येन रक्षन्ति ते।

– यजु०, २८/११

य आज्यं ज्ञातुं प्राप्तुं वा योग्यं रक्षन्ति वा पिबन्ति त आज्यपाः ।

– स०प्र०( चतुर्थ समुल्लासः )

(प्र०ब०व०) √अञ्जु – व्यक्तिम्रक्षणकान्तिगतिषु + क्यप् प्रत्ययः > आज्य+ √पा – रक्षणे + कः प्रत्ययः।

## आडूः

**अणति शब्दयतीति आडूः जलगामिद्रव्यं वा । – उ०को०, १/८६**

✓अण – शब्दे + ऊः प्रत्ययः, णस्य डः ( अणो डश्च – उ०को०, १/८६ ) ।

## आतिः

**अतति निरन्तरं गच्छतीति आतिः तित्तिरिभेदो वा । – उ०को०, ४/१३१**

✓अत – सातत्यगमने + इञ् प्रत्ययः ( अज्यतिभ्यां च – उ०को०, ४/१३१ ) ।

## आतुरः

**अतति निरन्तरं गच्छतीति आतुरोऽशान्तः।**

**– उ०को०, १/४१**

✓अत – सातत्यगमने + उरच् प्रत्ययः ( मद्गुरादयश्च – उ०को०, १/४१ ) ।

## आत्मन्

**अतति सर्वत्र व्याप्नोति सर्वान्तर्यामी ।**

**– ऋ०, १/११५/१**

**अतति सर्वत्र व्याप्नोति इति सर्वान्तर्यामी परमात्मा, स्वस्वभावो वा । – यजु०, ४/१५**

**अतति शरीरमिन्द्रियाणि प्राणांश्च व्याप्नोति सः । – यजु०, १८/२१**

**अतति निरन्तरं कर्मफलानि प्राप्नोति वा स आत्मा । – उ०को०, ४/१५३**

**अतति नैरन्तर्य्येण सर्वत्र व्याप्नोतीत्यात्मा।**

**– ( ऋ० भा० भू० ) सन्ध्योपासनम्**

**योऽतति व्याप्नोति स आत्मा ।**

**– स० प्र० ( प्रथमसमुल्लासः )**

✓अत् – सातत्यगमने + मनिण् प्रत्ययः ( सातिभ्यां मनिन्मनिणौ – उ०को०, ४/१५३ ) ।

## आत्मदाः

**य आत्मानं ददाति सः । – यजु०, २५/१३**

आत्मन् + ✓डुदाञ् – दाने + विच् प्रत्ययः ( अन्येभ्योऽपि दृश्यन्ते - अष्ठा० ३/२/७५ ) ।

## आत्मसनि

**आत्मानं सनति सम्भजति येन तत् ।**

**– यजु० १९/४८**

आत्म + ✓षण – सम्भक्तौ + इ प्रत्ययः ( खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च – उ०को०, ४/१४० ) ।

## आत्महनः

**य आत्मानं घ्नन्ति तद्विरुद्धमाचरन्ति ते ।**

**– यजु०, ४०/३**

( प्र०ब०व० ) – आत्म + ✓हन् – हिंसागत्योः + क्विप् प्रत्ययः ।

## आदित्यवनिः

**या आदित्यान् मासान् वनति संभजति सा । – यजु०, ५/१२**

अ ( नञ् ) + ✓दो – अवखण्डने + क्तिन् प्रत्ययः > अदिति + ण्य प्रत्ययः तद्धित स्वार्थे ( दित्यदित्या-दित्यपत्युत्तरपदाण्ण्यः – अष्टा०, ४/१/८५ ) > आदित्य + ✓वन् – सम्भक्तौ + इ प्रत्ययः ( खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च – उ०को०, ४/१४० ) ।

## आधिं

**यः समन्ताद्दधाति तम् । – यजु०, २२/२०**

आङ् + ✓डुधाञ् – धारणपोषणयोः + कि प्रत्ययः ( उपसर्गे घोः किः – अष्टा०, ३/३/९२ ) ।

## आध्याः

**समन्ताद् ध्यायन्ति चिन्तयन्ति ये ते ।**

**– ऋ०, १/१०५/७**

( प्र०ब०व० ) आङ् + ✓ध्यै – चिन्तायां + क्यप् प्रत्ययः ।

## आध्रः

**यः सर्वैस्समन्ताद्ध्रियते । – ऋ०, ७/४१/२**

आङ् + √डुधाञ् – धारणपोषणयोः + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिघिशुभिभ्यो रक् – उ०को० २/१३)।

## आनतिः

**आनमन्ति यया सा । – यजु०, २०/१३**

**समन्तात् नमनम् । – यजु०, २०/१३**

आङ् + √णम – प्रह्वत्वे+ क्तिन् प्रत्ययः (स्त्रियां क्तिन् – अष्टा०, ३/३/९४)।

## आनन्दः

**आनन्दन्ति सर्वे मुक्ता यस्मिन् यद्वा यः सर्वाञ्जीवानानन्दयति स आनन्दः ।**

– स० प्र० (*प्रथमसमुल्लासः*)

आङ् + √टुनदि – समृद्धौ + घञ् प्रत्ययः ।

## आनं

**अनन्ति येन तज्जीवनम् । – ऋ०, १/५२/१५**

√अन – प्राणने + घञ् प्रत्ययः (कर्षात्वतो घञोऽन्त उदात्तः – अष्टा०, ६/१/१५९)।

## आनुषक्

**अभितो योऽनुषङ्गि तत् । – ऋ०, १/१३/५**

**य आनुकूल्यं सचति समवैति सः ।**

– ऋ०, ३/४१/२

**योऽनुसजति । – ऋ०, ६/५/३**

आङ् + अनु + √षञ्ज – सङ्गे + क्विप् प्रत्ययः (क्विप् च – अष्टा०, ३/२/७६)।

## आपः

**जलानि, वाऽऽप्नुवन्ति शब्दोच्चारणादिव्यवहारान् याभिस्ता आपः प्राणाः ।**

– ऋ०, १/८/७

**आप्नुवन्ति व्याप्नुवन्ति सर्वान् पदार्थांस्ते प्राणाः । – ऋ०, १/२३/२१**

**आप्नुवन्तीत्यापः । – यजु०, ६/१७**

**आप्नुवन्ति व्याप्नुवन्ति शरीरमित्यापः ।**

– यजु०, ३४/५५

**आप्नुवन्ति शरीरमिति आपः ।**

– उ०को०, २/५८

(नित्य बहुवचनान्तः) √आप्लृ – व्याप्तौ + क्विप् प्रत्ययः (आप्नोतेर्ह्रस्वश्च – उ०को०, २/५८)।

## आपणिकः

**समन्तात्पणायति व्यवहरति स आपणिकः वैश्यो वा । – उ०को०, २/४५**

आङ् + √पण – व्यवहारे + इकन् प्रत्ययः (आङि पणिपनिपतिखनिभ्यः – उ०को०, २/४५)।

## आपतिकः

**समन्तात् पततीति आपतिकः श्येनो वा ।**

– उ०को०, २/४५

आङ् + √पत्लृ – गतौ + इकन् प्रत्ययः (आदि पणिपनिपतिखनिभ्यः – उ०को०, २/४५)।

## आपिः

**य आप्नोति तस्य । – ऋ०, २/२७/१७**

**यः सर्वान् आप्नोति । – ऋ०, ४/२५/६**

**य आप्नुवन्ति ते । – ऋ०, ५/५३/२**

**यः प्राप्नोति । – ऋ०, ६/२१/८**

**य आप्नोति सः । – ऋ०, ६/४४/१०**

√आप्लृ – व्याप्तौ + इ प्रत्ययः ।

## आप्तः

**यः सर्वान् धर्मात्मन आप्नोति वा सर्वैर्धर्मात्मभिराप्यते छलादिरहितः स आप्तः ।**

– स० प्र० (*प्रथमसमुल्लासः*)

√आप्लृ – व्याप्तौ + क्तः प्रत्ययः ।

## आप्रीतपाः

समन्तात् प्रीतान् कमनीयान् पदार्थान् पाति रक्षति । – यजु०, ८/५७

आङ् + ✓प्रीञ् – तर्पणे कान्तौ च + क्त प्रत्ययः > आप्रीत + ✓पा – रक्षणे + कः प्रत्ययः ।

## आप्रीभिः

याः समन्ताद् प्रीणन्ति ताभिः ।

– यजु० ११/११

(तृ०ब०व०) – आङ् + ✓प्रीञ् – तर्पणे कान्तौ च + क्विप् प्रत्ययः ।

## आभरद्वसुः

या समन्ताद्वसूनि बिभर्त्ति सा ।

– ऋ०, ५/७९/३

आङ् + ✓भृञ् – भरणे + ✓वस – निवासे + उः प्रत्ययः (शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१०) ।

## आभुवः

समन्ताद् भवन्ति ये या वा तान् ता वा ।

– ऋ०, १/६४/१

समन्ताद्भवन्ति ये ते । – ऋ०, १/६४/६

यत्र समन्ताद् भवति सुखं तम् ।

– ऋ०, १/१३३/७

(प्र०ब०व०) आङ् + ✓भू – सत्तायां + क्विप् प्रत्ययः ।

## आभूभिः

समन्ताद्भवन्ति वीरा यासु प्रशासनक्रियासु ताभिः । – ऋ०, १/५१/९

ये विद्याविनये समन्ताद् भवन्ति तैः सह।

– ऋ०, ५/३५/३

(तृ०ब०व०) आङ् + ✓भू – सत्तायां + क्विप् प्रत्ययः।

## आभोगये

समन्ताद्भुञ्जते सुखानि यस्यां तस्यै पुरुषार्थयुक्तायै । – ऋ०, १/११३/५

(च०ए०व०) – आङ् + ✓भुज – पालनाभ्यवहारयोः + इ प्रत्ययः जकारस्य गकारश्च ।

## आमलकः

आमलते समन्ताद्धारयतीति आमलकः वृक्षभेदः । – उ०को०, २/३२

आङ् + ✓मल – धारणे + क्वुन् प्रत्ययः (क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२) ।

## आमादं

आमानपक्वानत्ति तम् । – यजु०, १/१७

✓अम – रोगे + घञ् प्रत्ययः > आम + ✓अद – भक्षणे + अण् प्रत्ययः ।

## आमिक्षा

समन्तान्मेषति हिनस्तीति आमिक्षा क्षीरविकारो वा । – उ०को०, ३/६६

आङ् + ✓मिषु – सेचने + सः प्रत्ययः बाहुलकात् (स्नुव्रश्चिकृत्यृषिभ्यः कित् – उ०को०, ३/६६) ।

## आमिषं

अमन्ति गच्छन्ति येन तत् आमिषं मांसं वा। अथवा अमन्ति रोगिणो भवन्ति येन भक्षितेन तदामिषं इत्येकार्थः ।

– उ०को०, १/४६

✓अम – रोगे, गत्यादिषु + टिषच् प्रत्ययः अम धातोः दीर्घत्वञ्च (अमेर्दीर्घश्च – उ०को०, १/४६)।

## आम्रं

अम्यते सम्भज्यते सेव्यते तत् आम्रं चूतो वा। – उ०को, २/१६

✓अम – गत्यादिषु + रक् प्रत्ययः अम धातोः दीर्घत्वञ्च (अमितक्योदीर्घश्च – उ०को०, २/१६)।

## आयजी

समन्ताद्यज्यन्ते संगम्यन्ते पदार्था याभ्यां तौ स्त्रीपुरुषौ । – ऋ०, १/२८/७

(प्र०द्वि०व०)–आङ् + ✓यज – देवपूजासङ्गतिकरणदानेषु + इ प्रत्ययः ।

## आयतने

आयन्ति आगच्छन्ति प्राणिनो यस्मिंस्तज्जगत्तस्मिन् जगति स्थाने यज्ञे वा ।

– यजु०, ५/२८

(स०ए०व०) – आङ् + ✓अम – गतौ + तन् प्रत्ययः > आयत् + ल्युट् (अन) प्रत्ययः ।

## आयुः

ये सूर्यमभितो यन्ति ते लोकाः ।

– ऋ०, १/१३२/२

ये सत्यं यन्ति ते मनुष्याः प्रजाः ।

– यजु०, ३३/२८

ये स्वकर्मफलानि यान्ति ते मनुष्याः ।

– यजु०, ३३/९७

एति प्राप्नोति सर्वानिति आयुः जीवनकालः । – उ०को०, १/२

ईयते प्राप्यते यत्तत् आयुः जीवनं वा ।

– उ०को०, २/११८

आङ् + ✓या – प्रापणे अथवा ✓इण – गतौ + उण् प्रत्ययः (छन्दसीणः – उ०को०, १/२) ।

## आयुधं

समन्तात् युध्यन्ति येन तत् । – ऋ०, ३/४४/४

आयुध्यन्ति येन तत् । – ऋ०, ५/६३/४

यः समन्तात् युध्यते तस्मै । – यजु०, १६/१४

ये शतघ्न्यादिभिः समन्ताद्युध्यन्ते ते प्रशस्ता विद्यन्ते यस्य तस्मै । – यजु०, १६/३६

समन्ताद्युध्यन्ते यैस्तानि । – यजु०, १७/४२

आङ् + ✓युध् – सम्प्रहारे + घञ् प्रत्ययः ।

## आयुर्युधः

ये आयुषा सह युध्यन्ते ते ।

– यजु०, १६/६०

(प्र०ब०व०) आयुः + ✓युध – सम्प्रहारे + कः प्रत्ययः ।

## आयुष्पाः

यः आयुः पाति सः । – यजु०, २२/१

आयुः + ✓पा – रक्षणे + कः प्रत्ययः ।

## आरुजः

यः समन्ताद्रुजति भनक्ति ।

– ऋ०, ३/४५/२

आङ् + ✓रुज – भङ्गे + कः प्रत्ययः (इगुपधज्ञाप्रीकिरः कः – अष्टा०, ३/१/१३५) ।

## आरूः

ऋच्छति प्राप्नोति स आरूः पिङ्गलो वा।

– उ०को०, १/८५

✓ऋ – गतिप्रापणयोः + ऊः प्रत्ययः दीर्घत्वञ्च (णित्कशिपद्यर्त्तेः – उ०को०, १/८५) ।

## आर्तनासु

या आर्त्तयन्ति सत्ययन्ति । – ऋ०, १/१२७/६

(स०ब०व०) – आङ् + ✓ऋत् – गतौ (सौत्रोधातुः) + युच् प्रत्ययः (ण्यासश्रन्थो युच् – अष्टा०, ३/३/१०७) ।

## आर्द्र

आर्दति गच्छति याचते वा तत् आर्द्रं सरसद्रव्यमार्द्रा नक्षत्रं वा । – उ० को०, २/१८

✓अर्द – गतौ + रक् प्रत्ययः धातोः दीर्घत्वं च (अर्देर्दीर्घश्च – उ०को०, २/१८) ।

## आर्द्रदानुः

य आर्द्राणां गुणानां दानुर्दाता सः ।

– यजु०, १८/४५

आर्द्र + ✓दा – दाने + नुः प्रत्ययः (दाभाभ्यां नुः – उ०को०, ३/३२)।

## आलुः

**अर्यते प्राप्यते इति आलु भक्ष्यं कन्दं वा।**
– उ०को०, १/५

✓ऋ – गतिप्रापणयोः + ञुण् प्रत्ययः, रेफस्य लत्वं धातोः दीर्घत्वञ्च बाहुलकात् (त्रो रश्च लः – उ०को०, १/५)।

## आवसथः

**समन्ताद्वसति यत्र स आवसथः गृहं वा।**
– उ०को०, ३/११६

आङ् + ✓वस – निवासे + अथः प्रत्ययः (उपसर्गे वसेः – उ०को०, ३/११६)।

## आवपनं

**समन्तात् वपति यस्मिंस्तत्।** – यजु०, २३/९

**समन्ताद्वपन्ति यस्मिंस्तत्।** – यजु०, २३/४६

आङ् + ✓टुवप – बीजसन्ताने + ल्युट् प्रत्ययः (करणाधिकरणयोश्च – अष्टा०, ३/३/११७)।

## आवयाः

**यः समन्ताद्यजति सङ्गच्छते सः।**
– ऋ०, १/१६२/५

**येन आवयन्ति सः।** – यजु०, २५/२८

आङ् + अव + ✓यज् – देवपूजासङ्गतिकरणदानेषु + ण्विन् प्रत्ययः (अवे यजः – अष्टा०, ३/२/७२)।

## आविः

**समन्तादवतीति आविः प्राकट्यम्।**
– उ०को०, २/१०८

आङ् + ✓अव – रक्षणगतिकान्तिप्रीत्यादिषु + इसिः प्रत्ययः बाहुलकात् (अर्चिशुचिहुसृपिछादिछर्दिभ्यः इसिः – उ०को०, २/१०८)।

## आवृतं

**समन्ताद् वर्त्तन्ते यस्मिन् तमीश्वराज्ञापालनं सूर्यप्रकाशनं वा।**
– यजु०, २/२६

**समन्ताद् वर्त्तन्तेऽहोरात्राणि यस्मिँस्तं समयम्।** – यजु०, २/२७

आङ् + ✓वृतु – वर्तने + क प्रत्ययः।

## आशवः

**ये अश्नुवन्ति ते।** – ऋ०, १/१३५/६

(प्र०ब०व०) – ✓अशूङ् – व्याप्तौ संघाते च + उण् प्रत्ययः (कृवापाजिमिस्वदिसाध्यशूभ्यः उण् – उ०को०, १/१)।

## आशसाः

**ये आशंसन्ति ते।** – ऋ०, ५/५६/२

(प्र०ब०व०) – आङ् + ✓शंसु – स्तुतौ + क्विप् प्रत्ययः।

## आशापालाः

**य आशा दिशः पालयन्ति।**
– यजु०, २२/१९

(प्र०ब०व०) आशा + ✓पाल – रक्षणे + टाप् प्रत्ययः स्त्रियाम्।

## आशीर्दाः

**आशीरिच्छां ददाति, सः।** – यजु०, ८/५

**य इच्छासिद्धिं ददाति।** – यजु०, १८/५६

आङ् + ✓शासु – इच्छायां + क्विप् प्रत्ययः, उपधायाः दीर्घत्वं > आशीः + ✓डुदाञ् – दाने + कः प्रत्ययः।

## आशुः

**अश्नुते व्याप्नोति तत् आशुः शीघ्रं, अश्नुते सद्योऽध्वानमिति आशुः।** – उ०को०, १/१

(प्र०ब०व०) – ✓अशूङ् – व्याप्तौ संघाते च + इण् प्रत्ययः (कृवापाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१)।

## आशुशुक्षणिः

**शीघ्रं-शीघ्रं दुष्टान् क्षिणोति हिनति यः।**
– यजु०, १२/२७

समन्तात् शुष्यन्ति पदार्था येन स आशुशुक्षणिः अग्निर्वा । – उ०को० २/१०३

१- आशु + ✓शुष – शोषणे + अनि प्रत्ययः (आङि शुषेः सनश्छन्दसि – उ०को०, २/१०३)

२- आशु + ✓शु (इत्यपि आशु) + ✓क्षणु – हिंसायां + अनि प्रत्ययः (आङि शुषेः सनश्छन्दसि – उ०को०, २/१०३) ।

## आशुहेमा

आशून् शीघ्रकारिणो जनान् हिनोति वर्द्धयति सः । – ऋ०, २/१/५

आशु + ✓हि – गतौ वृद्धौ च + मनिन् प्रत्ययः (अन्येभ्योऽपि दृष्यते – अष्टा०, ३/२/७५) ।

## आष्ट्रं

अश्नुतेव्याप्नोतीति आष्ट्रम् आकाशो वा।

– उ०को०, ४/१६०

✓अशूङ् – व्याप्तौ संघाते च + ष्ट्रन् प्रत्ययः धातोः वृद्धिश्च (भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च – उ०को०, ४/१६०) ।

## आसदं

आसीदन्ति सर्वे यस्मिँस्तम् ।

– ऋ०, ३/६२/१३

य आसीदति तम् । – ऋ०, ४/९/१

आङ् + ✓षद्लृ – विशरणगत्यवसादनेषु + घ प्रत्ययः।

## आसन्दी

समन्ताद् सन्यते सेव्यते या सा ।

– यजु०, १९/१६

आङ् + ✓षण् – सम्भक्तौ + द प्रत्ययः > आसन्द + ङीप् प्रत्ययः स्त्रियाम् ।

## आसुरी

येऽसुषु प्राणेषु रमन्ते तेषां स्वा ।

– यजु०, ११/६९

असुर + अण प्रत्ययः भवार्थे, (तस्येदं – अष्टा०, ४/३/१२०) ततः ङीप् स्त्रियाम् ।

## आसेचनानि

समन्तात् सिञ्चन्ति यैस्तानि ।

– यजु०, २५/३६

(प्र०ब०व०) आङ + ✓षिच् – क्षरणे + ल्युट् प्रत्ययः (करणाधिकरणयोश्च – अष्टा०, ३/३/११७) ।

## आस्येन

अस्यन्ति प्रक्षिपन्ति उदरेऽन्नादिकं येन तदास्यं मुखम् । – यजु०, २/११

आस्यन्दन्ति क्लेदीभवन्ति यस्मिंस्तेन मुखेन।

– यजु०, २५/१

(नपु०तृ०ए०व०) – ✓असु – क्षेपणे + ण्यत् प्रत्ययः ।

## आहुतिः

समन्ताद्धूयन्ते गृह्यन्ते शुभानि यया ताम् ।

– ऋ०, १/३१/५

या समन्ताद्धूयते ताम् । – ऋ०, ६/१/९

या आहूयन्ते प्रदीयन्ते ताः ।

– यजु०, १९/१९

आङ् + ✓हु – दानादानयोः + क्तिन् प्रत्ययः स्त्रियाम्।

## इक्षुः

इष्यते स इक्षुः मधु तृणं वा ।

– उ०को०, ३/१५७

✓इषु – इच्छायां + क्सुः प्रत्ययः (इषेः क्सुः – उ०को०, ३/१५७) ।

## इक्षुकुट्टकः

इक्षून् कुट्टयतीति इक्षुकुट्टकः ।

– उ०को०, २/३२

इक्षु + ✓कुट्ट – भेदनभर्त्सनयोः पूरणे इत्येके कौटिल्ये प्रतापने च + क्वुन् (क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२)।

## इडा

इड्यते स्तूयतेऽनया सा वाणी ।

– ऋ०, १/१३/९

✓ईड – स्तुतौ + क्विप् प्रत्ययः ( क्विप् च – अष्टा०, ३/२/७६ ) धातोर्ह्रस्वत्वञ्च ततः टाप् स्त्रियाम्।

## इध्मः

य इन्धे दीप्यते वा येनेन्धे स इध्मः समिद्धः। – उ०को०, १/१४५

✓जिइन्धि – दीप्तौ + मक् प्रत्ययः ( इषियुधीन्धिदसिश्याधूसूभ्यो मक् – उ०को०, १/१४५ ) ।

## इनः

एतीति इनः ईश्वरो राजा प्रभुः सूर्यो वा।

– उ०को०, ३/२

✓इण – गतौ + नक् प्रत्ययः ( इण्सिञ्जिदीङुष्यविभ्यो नक् – उ०को०, ३/२ ) ।

## इनधते

इनमीश्वरं दधाति यस्मिंस्तस्मिन् ।

– ऋ०, ४/२/७

( स०ए०व० ) – ✓इण – गतौ + नक् प्रत्ययः ( इण्सिञ्जिदीङुष्यविभ्यो नक् – उ०को०, ३/२ ) > इन + ✓डुधाञ् – धारणपोषणयोः + अतच् प्रत्ययः, आकारान्तधातोरङ्गस्य लोपः ( आतो लोप इटि च - अष्टा०, ६/४/६४ ) ।

## इन्दुः

जलानि उन्दन्ति आर्द्रीकुर्वन्ति पदार्थांस्ते।

– ऋ०, १/१५/१

उन्दन्ति स्नेहयन्ति सर्वान् पदार्थान् ये ते रसाः। – ऋ०, १/१६/२६

उनत्त्यार्द्रीकरोति पदार्थानिति इन्दुः चन्द्रमा वा । – उ०को०, १/१२

✓उन्दी – क्लेदने + उः प्रत्ययः आदिवर्णस्येकारादेशश्च ( उन्देरिच्चादेः – उ०को०, १/१२ ) ।

## इन्द्रः

इरा शब्देनान्नं पृथिव्यादिकमुच्यते। तद्दारणात्तद्दानात्तद्धारणात् ।

– ऋ०, १/३/४

दुःखानां विदारयिता ।

– ऋ०, १/१०/६

सर्वपदार्थविदारकस्य सूर्यलोकस्येव सभापतेः राज्ञः । – ऋ०, १/३२/१

दारयिता सूर्य्यः । – ऋ०, २/१२/१

शत्रूणां विदारयितारम् ।

– ऋ०, ३/३१/२२

शत्रूणां दारयिता राजन् । – ऋ०, ५/३२/१

य इन्दति परमैश्वर्यवान् भवति सः इन्द्रः परमेश्वरः । – स०प्र० ( प्रथमसमुल्लासः )

शत्रूणां दारयिता । – यजु०, १७/३५

इन्दति परमैश्वर्यवान् भवतीति इन्द्रः समर्थोऽन्तरात्मादित्यो योगी वा ।

– उ०को०, २/२८

✓इदि – परमैश्वर्ये + रन् प्रत्ययः नुमागमश्च ( ऋज्रेन्द्राग्रवज्रविप्र कुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः – उ०को०, २/२८ ), ✓इरा + ✓दॄ – विदारणे, नुमागमश्च।

## इभः

एतीति इभः हस्ती वा । – उ०को०, ३/१५३

✓इण – गतौ + भनन् प्रत्ययः ( इणः कित् – उ०को०, ३/१५३ ) ।

## इरम्मदं

य इरयाऽन्नेन माद्यति हृष्यति तम् ।

– यजु०, ११/७६

इरा ( अन्नं ) + ✓मदि – हर्षे + खश् प्रत्ययः निपातनात् ( उग्रम्पश्येरम्मदपाणिन्धमाश्च – अष्टा०, ३/२/३७ )।

## इरा

एति गच्छति यया सा इरा उदकं मद्यं वा। – उ०को०, २/२८

✓इण् – गतौ + रन् प्रत्ययः (ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रगौरवन्नेरामालाः – उ०को०, २/२८) ततः स्त्रियां टाप् प्रत्ययः।

## इरिणं

ऋच्छन्ति गच्छन्ति यत्र यस्माद्वा जनास्तत् इरिणं शून्यमूषरभूमिर्वा। – उ०को०, २/५१

✓ऋ – गतौ + इनन् प्रत्ययः धातोः इकारादेशश्च (अर्त्तेः किदिच्च – उ०को०, २/५१)।

## इल्वलः

इलति स्वपितीति इल्वलः नक्षत्रविशेषो वा। – उ०को०, ४/१०७

✓इल – विलासे + वलच् प्रत्ययः (सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्य शल्याः – उ०को०, ४/१०७)।

## इषः

विद्यासिद्धये या इष्यन्ते ताः क्रियाः।

– ऋ०, १/३/१

इष्यन्ते यास्ताः सेनाः। – ऋ०, १/९/८

इष्यते या सत्क्रिया ताम्।

– ऋ०, १/१२/११

इष्यन्ते यास्ताः प्रजाः। – ऋ०, १/२७/७

इष्यते ज्ञायते येन तदित् ज्ञानम्।

– यजु०, २/१८

सर्वैर्जनैर्यानीष्यन्ते तेषाम्। – यजु०, ३/१३

इष्यन्ते यास्ताः प्रजाः। – यजु०, ६/२९

✓इषु – इच्छायां, ✓इष – गतौ वा + क्विप् प्रत्ययः।

## इषयुः

इष्यते सर्वैर्जनैर्विज्ञायते यत्तद्याति प्राप्नोतीति। – ऋ०, १/१२०/५

✓इष – गतौ + कः प्रत्ययः (इगुपधज्ञाप्रीकिरः कः – अष्टा०, ३/१/१३५) > इष + ✓या – प्रापणे + कु प्रत्ययः।

## इषिरः

इच्छन्तीष्टं साध्नुवन्त्यनेनेति इषिरः अग्निः।

– उ०को०, १/५१

✓इषु – इच्छायां + किरच् प्रत्ययः (इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिभिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१)।

## इषीका

इषते गच्छतीति इषीका मुञ्जादिशलाका वा। – उ०को०, ४/२१

✓इषु – इच्छायां + ईकन् प्रत्ययः (ईषेः किद्ध्रस्वश्च – उ०को०, ४/२१) स्त्रियां टाप् प्रत्ययः।

## इषुः

इषति गच्छति हिनस्ति वा शत्रूनिति इषुः बाणो वीरो वा। – उ०को०, १/१३

✓इष – गतौ + उः प्रत्ययः (इषेः किच्च – उ०को०, १/१३)।

## इषुकारं

यो इषून् बाणान् करोति तम्।

– यजु०, ३०/७

✓इष – गतौ + उ प्रत्ययः (इषेः किच्च – उ०को०, १/१३) > इषु + ✓डुकृञ् – करणे + अण् प्रत्ययः।

## इषुधिः

इषवो बाणा धीयन्ते येषु तान्।

– ऋ०, १/३३/३

इषवो धीयन्ते यस्यां तयेव।

– ऋ०, १/१२२/१

इषवो धीयन्ते यस्मिन्। – ऋ०, ६/७५/५

**इषवो धीयन्ते यस्मिन् सः ।**

– यजु०, १६/१२

**इषवो धीयन्ते यस्मिन्सः । – यजु०, २९/४२**

इषु + √डुधाञ् – धारणपोषणयोः + किः प्रत्ययः (कर्मण्यधिकरणे च – अष्टा०, ३/३/९३) ।

## इषुध्यवः

**य इषुभिर्युध्यन्ते । – ऋ०, ५/४१/६**

(प्र०ब०व०) – इषु + √युध – सम्प्रहारे + युक् प्रत्ययः पृषोदरादिना ।

## इष्टका

**इष्यतेऽसौ इष्टका मृद्विकारविशेषः।**

– उ०को०, ३/१४८

√इष – गतौ + तकन् प्रत्ययः (इष्यशिभ्यां तकन् – उ०को०, ३/१४८) ।

## इष्मः

**य इच्छति य इष्यते स इष्मः कामो वसन्त ऋतुर्वा । – उ०को०, १/१४५**

√इषु – इच्छायां + मक् प्रत्ययः (इषियुधीन्धिदसिश्याधूसूभ्यो मक् – उ०को०, १/१४५) ।

## ईर्मं

**ईर्त्ते गच्छति कम्पते वा तत् ईर्मं व्रणं वा।**

– उ०को०, १/१४५

√ईर – गतौ कम्पने च + मक् प्रत्ययः बाहुलकात् (इषियुधीन्धिदसिश्याधूसूभ्यो मक् – उ०को०, १/१४५)।

## इष्टकानां

**इज्यन्ते संगम्यन्ते कामा यैः पदार्थैस्तेषाम्।**

– यजु०, १३/३१

(ष०ब०व०) – √यज – देवपूजासङ्गतिकरणदानेषु + क्त प्रत्ययः सम्प्रसारणञ्च (वचिस्वपियजादीनां किति – अष्टा०, ६/१/१५), षत्वादेशः (व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः – अष्टा०, ८/२/३६) > इष्ट + कन् प्रत्ययः (संज्ञायां कन् – अष्टा०, ५/३/८७) ।

## ईशानः

**ऐश्वर्यवान् ऐश्वर्यहेतुः सृष्टेः कर्त्ता प्रकाशको वा । – ऋ०, १/७/८**

√ईश – ऐश्वर्ये + चानश् प्रत्ययः (ताच्छील्यवयोवचनशक्तिषु चानश् – अष्टा०, ३/२/१२९) ।

## ईश्वरः

**य ईष्टे सर्वैश्वर्यवान् वर्त्तते स ईश्वरः।**

– स० प्र० (प्रथमसमुल्लासः)

**अश्नुते आशु शीघ्रं करोति जगद्रचयति स ईश्वरः स्वामी वा । – उ०को०, ५/५७**

√ईश – ऐश्वर्ये + वरट् प्रत्ययः (अश्नोतेराशुकर्मणि वरट् च – उ०को०, ५/५७) ।

## ईष्वः

**ईषते हिनस्त्यज्ञानमिति ईष्वः आचार्यो वा। – उ०को०, १/१५३**

√ईष – गतिहिंसादर्शनेषु + वन् प्रत्ययः (सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे – उ०को०, १/१५३) ।

## उक्थं

**उच्यते परितो भाष्यते यत्तत् उक्थं सामवेदो वा । – उ०को०, २/७**

√वच – परिभाषणे + थक् प्रत्ययः (पातॄतुदिवचिरिचिसिचिभ्यस्थक् – उ०को०, २/७) ततः किति प्रत्यये परतः सम्प्रसारणत्वात् उक्थं (वचिस्वपियजादीनां किति – अष्टा०, ६/१/१५) ।

## उक्षा

**उक्षति सिञ्चतीति उक्षा बलीवर्दो वा ।**

– उ०को०, १/१५९

√उक्ष – सेचने + कनिन् प्रत्ययः (श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्वन्मातरिश्वन्मघवन्निति – उ०को०, १/१५९) ।

## उक्थभृतं

**य ऋग्वेदं बिभर्त्ति । – ऋ०, ७/३३/१४**

✓वच – परिभाषणे + थक् प्रत्ययः (पातृतुदिवचिरिचिसिचिभ्यस्थक् – उ०को०, २/७) ततः किति प्रत्यये परतः सम्प्रसारणत्वात् उक्थं (वचिस्वपियजादीनां किति – अष्टा०, ६/१/१५) + डुभृञ् भरणे + क्त प्रत्ययः ।

## उक्थशासः

य उक्थानां प्रशंसनीयानां मन्त्राणामर्थाञ्छासन्ति ते । – ऋ०, ७/१९/६

यो योगाभ्यासं विहाय उक्थानि वचनानि शंसन्ति तेऽर्थात् शब्दार्थयोः खण्डने रताः। – यजु०, १७/३१

उक्थानि वक्तुं योग्यानि वचनानि शंसन्ति। – यजु०, १९/६९

१- (प्र०ब०व०) उक्थ + ✓शासु – अनुशिष्टौ + अण् प्रत्ययः।

२- उक्थ + ✓शंसु – स्तुतौ + ण्विन् प्रत्ययः न लोपश्च निपात्यते छान्दसो दीर्घत्वञ्च (मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् – अष्टा०, ३/२/७१) ।

## उखच्छित्

य उखङ्गमनञ्छिनत्ति सः । – ऋ०, ४/१९/९

✓उख – गतौ + कः प्रत्ययः + छिदिर् – द्वैधीकरणे + क्विप् प्रत्ययः ।

## उज्झकः

उज्झत्युत्सृजतीति उज्झकः योगी मेघो वा। – उ०को०, २/३७

✓उज्झ – उत्सर्गे + क्वन् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/३७) ।

## उत्क्रान्तिः

उत्क्राम्यन्त्युल्लंघयन्ति समान् विषमान् देशान् यया गत्या तद्विद्याज्ञात्री । – यजु०, १५/९

उत् + ✓क्रमु – पादविक्षेपे + क्तिन् प्रत्ययः उपधायाः दीर्घश्च (अनुनासिकस्य क्विझलोः क्ङिति – अष्टा०, ६/४/१५) ।

## उत्तरः

उत्कृष्टतया तरन्ति यया सेनया तां प्राप्तविजयाम् । – यजु०, १७/५०

उत्कृष्टं तारयति समादधाति सः । – यजु०, २३/५२

उत् + ✓तॄ – प्लवनसंतरणयोः + अप् प्रत्ययः (ऋदोरप् – अष्टा०, ३/३/५७) ।

## उत्तरासदः

य उत्तरस्यां दिशि सीदन्ति तेभ्यः । – यजु०, ९/३५

ये प्रश्नोत्तराणि समादधाना उत्तरस्यां दिशि सीदन्ति । – यजु०, ९/३६

(प्र०ब०व०) उत्तर + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः पूर्व पदस्य दीर्घत्वञ्च ।

## उत्सः

उन्दन्ति येन तं कूपम् । – यजु०, १७/८७

उन्दन्ति यस्मात् स कूप इव । – यजु०, ११/८७

उनत्ति क्लिद्यतीति उत्सः जलस्रवणस्थानमृषिर्वा । – उ०को०, ३/६८

✓उन्दी – क्लेदने + सः प्रत्ययः (उन्दिगुधिकुषिभ्यश्च – उ०को०, ३/६८) ।

## उत्सधिं

उत्साः कूपा धीयन्ते यस्मिन् भूमिभागे तम्। – ऋ०, १/८८/४

उत्स + ✓डुधाञ् – धारणपोषणयोः + किः प्रत्ययः (कर्मण्यधिकरणे च – अष्टा०, ३/३/९३) ।

## उदकं

उनत्ति क्लेदयतीति उदकं जलं वा । – उ०को० २/३९

✓उन्दी – क्लेदने + क्वन् प्रत्ययः (उदकश्च – उ०को०, २/३९) ।

## उदधिः

**उदकानि धीयन्ते येषु तानिव ।**
– ऋ०, ३/४५/३

**उदकानि धीयन्ते यस्मिंस्तत्समुद्रोऽन्तरिक्षं वा।** – यजु०, ३८/२२

उदक (उदादेशः पेषंवासवाहनधिषु च – अष्टा०, ६/३/५८) + √डुधाञ् – धारणपोषणयोः + किः प्रत्ययः (कर्मण्यधिकरणे च – अष्टा०, ३/३/९३)।

## उदरं

**उद् दृणाति येनान्नमिति उदरं कुक्षि-स्थानम् ।** – उ०को०, ५/१९

उत् + √दृ – विदारणे + अल् अथवा अच् प्रत्ययः (उदि दृणातेरलचौ पूर्वपदान्त्यलोपश्च – उ०को०, ५/१९) ।

## उदरथिः

**उदृच्छन्त्यूर्ध्वं गच्छन्त्यापोऽस्मिन् स उदरथिः समुद्रो वा ।** – उ०को०, ४/८८

उत् + √ऋ – गतौ + घथिन् प्रत्ययः (उद्यर्त्तेश्चित् – उ०को०, ४/८८) ।

## उदश्वित्

**उदकेन श्वयति वर्धते तत् उदश्वित् तक्रं वा।** – उ०को०, २/५७

उदक (उदादेशः) + √श्वि – गतिवृद्ध्योः + क्विप् प्रत्ययः बाहुलकात् (क्विप् वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च – उ०को०, २/५७) ।

## उदवाहः

**य उदकानि वहति तेन ।** – ऋ०, १/३८/९

**य उदकं वहन्ति तानिव ।** – ऋ०, ५/५८/३

उद (उदक) + √वह – प्रापणे + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१) ।

## उदव्रजे

**उदकानि व्रजन्ति यस्मिँस्तस्मिन् ।**
– ऋ०, ६/४७/२१

(स०ए०व०) उद (उदक) + √व्रज – गतौ + घ प्रत्ययः निपातनात् (गोचरसंचरवहव्रजव्यजापण-निगमाश्च – अष्टा०, ३/३/११९) ।

## उदहार्य्यः

**या उदकं हरन्ति ताः ।** – यजु०, १६/७

(प्र०ब०व०) – उद (उदक) + √हञ् – हरणे + अण् प्रत्ययः ततः स्त्रियां ङीप् प्रत्ययः ।

## उदारः

**य उत्कृष्टं परीक्ष्य ऋच्छति ददाति ।**
– यजु०, १२/२२

उत् + √ऋ – गतौ + अण् प्रत्ययः ।

## उदीची

**य उदङ्ङुत्तरं देशमञ्चति सा ।**
– यजु०, १५/१३

**योदक् पूर्वाभिमुखस्य जनस्य वामभाग-मञ्चति तस्यै ।** – यजु०, २२/२४

उत् + √अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९), ततः न लोपः (अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४) धातोः अकारस्य ईकारादेशः (उद ईत् – अष्टा०, ६/४/१३७) ततः स्त्रियां ङीप् प्रत्ययः ।

## उद्ग्राभेण

**उत्कृष्टतया गृह्णाति येन तेन ।**
– यजु०, १७/६३

(तृ०ए०व०) – उत् + √ग्रह-उपादाने + घञ् प्रत्ययः, ततः हकारस्य भकारः (हृग्रहोर्भश्छन्दसि हस्येति वक्तव्यम् – अष्टा०वा०, ८/२/३५) ।

## उद्गीथः

**य उद्गीयत उच्चैः शब्दायते स उद्गीथः सामध्वनिः प्रणवो वा ।** – उ०को०, २/१०

उत् + √गा – स्तुतौ + थक् प्रत्ययः ईडागमः (गश्चोदि – उ०को०, २/१०) ।

## उद्दिशः

**या उद्दिश्यन्ते ताः । – यजु०, ६/१९**

(प्र०ब०व०) – उद् + √दिश – अतिसर्जने + क्विन् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९)।

## उद्भिदः

**ये पृथिवीं उद्भिद्य जायन्ते। – ऋ०, १/१३९/६**

**ये पृथिवीं भित्त्वा प्ररोहन्ति । – ऋ०, ५/५९/६**

**य उद्भिदन्ति । – यजु०, २५/१४**

(प्र०ब०व०) – उत् + √भिदिर् – विदारणे + क्विप् प्रत्ययः ।

## उद्भौ

**उदुत्कृष्टानि वस्तूनि भवन्ति यस्मिन् तस्मिन्। – यजु०, १५/१**

(स०ए०व०) – उत् + √भू – सत्तायां + डु प्रत्ययः (डुप्रकरणे मितद्रवादिभ्यः उपसंख्यानम् – अष्टा०वा०, ३/२/१८०)।

## उद्रः

**उनत्ति क्लिद्यति स उद्रः जलचरो वा । – उ०को०, २/१३**

√उन्दी – क्लेदने + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विति-वृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिद-हिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३)।

## उन्मा

**ऊर्ध्वं मिनोति यया तुलया तद्वत् । – यजु०, १५/६५**

उत् + √माङ् – माने + घञ् प्रत्ययः ।

## उन्नेता

**उन्नयति कार्याणीति उन्नेता ऋत्विग्वा । – उ०को०, २/९४**

उत् + √णीञ् – प्रापणे + तृच् प्रत्ययः (तृन्तृचौ शंसिक्षदादिभ्यः सञ्ज्ञायां चानिटौ – उ०को०, २/९४)।

## उपदां

**उप समीपे दीयते ताम् । – यजु०, ३०/९**

उप + √डुदाञ् – दाने + अङ् प्रत्ययः (आतश्चोपसर्गे – अष्टा०, ३/३/१०६)।

## उपनतिः

**उपनमन्ति यया सा । – यजु०, २०/१३**

उप + √णम – प्रह्वत्वेशब्दे च + क्तिन् प्रत्ययः स्त्रियाम् ।

## उपपृक्

**उपसामीप्यं पृङ्क्ते स्पृशति यः सः । – ऋ०, १/३२/५**

उप + √पृची – सम्पर्के + क्विप् प्रत्ययः ।

## उपभृत्

**योपगतं बिभर्त्यनया हस्त क्रियया सा । – यजु०, २/६**

उप + √डुभृञ् – धारणपोषणयोः + क्विप् प्रत्ययः तुगागमश्च ।

## उपमं

**येन उपमिमीते तम् । – ऋ०, ७/३०/३**

**उपमिमीते येन तम् । – ऋ०, ७/३०/४**

**येनोपमीयते तम् । – ऋ०, ७/३१/७**

उप + √माङ् – माने + कः प्रत्ययः (आतश्चोपसर्गे कः – अष्टा०, ३/१/१३६)।

## उपमश्रवस्तमं

**उपमीयते येन तच्छ्रवस्तदतिशयितम् । – ऋ०, २/२३/१**

उपम + √श्रु – श्रवणे + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) > उपमश्रवः + तमप् प्रत्ययः ।

## उपमा

**उपमीयतेऽनयेति दृष्टान्तः ।**

**– ऋ०, १/३१/१५**

उप + √माङ् – माने + अङ् प्रत्ययः स्त्रियां (आतश्चोपसर्गे – अष्टा०, ३/३/१०६) ।

## उपमादं

**य उपमां ददाति तम् । – ऋ०, ३/५/५**

उपमा + √डुदाञ् – दाने + कः प्रत्ययः।

## उपमित्

**य उप समीपे मिनोति प्रक्षिपति सः ।**

**– ऋ०, १/५९/१**

**य उपमिनोति सः । – ऋ०, ४/५/१**

उप + √डुमिञ् – प्रक्षेपणे + क्विप् प्रत्ययः ह्रस्वस्य तुगागमश्च ।

## उपरिसदः

**ये उपरि उत्कृष्ट आसने व्यवहारे वा सीदन्ति ते । – यजु०, ९/३६**

(प्र०ब०व०) उपरि + √षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## उपशाकेभिः

**उपशक्यन्ते यैः कर्मभिस्तैः ।**

**– ऋ०, १/३३/४**

(तृ०ब०व०) – उप + √शक्लृ – शक्तौ + घञ् प्रत्ययः ।

## उपसत्ता

**य उपसीदति सः । – यजु०, २७/२**

उप + √षद्लृ – विशरणगत्यवसादनेषु + तृच् प्रत्ययः ।

## उपसदं

**उपसीदन्ति यस्या तां वेदीम् ।**

**– ऋ०, २/६/१**

**य उपसीदन्ति तेषामतिथीनाम् ।**

**– यजु०, १९/१४**

**यः समीपे सीदति तम् । – यजु०, ३०/९**

उप + √षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## उपस्तयः

**ये उप समीपे स्त्यायन्ति संघ्नन्ति ते ।**

**– यजु०, १२/१०१**

(प्र०ब०व०) – उप + √स्त्यै – शब्दसंघातयोः + क्विप् प्रत्ययः ।

## उपस्थं

**उपतिष्ठन्ति यस्मिन् तस्मिन् ।**

**– ऋ०, १/३१/९**

**उपतिष्ठन्ति यस्मिँस्तत्र । – ऋ०, १/३५/६**

**क्रोडे तिष्ठति सा । – ऋ०, १/१२४/५**

**उपतिष्ठन्ति यस्मिँस्तम् । – ऋ०, २/४१/२१**

**यः समीपे तिष्ठति तस्मात् ।**

**– ऋ०, ६/६२/६**

उप + √ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः (आतश्चोपसर्गे कः – अष्टा०, ३/१/१३६) ।

## उपहूता

**उपहूयते जनैः राज्यसुखार्थं या ।**

**– यजु०, २/१०**

उप + √ह्वेञ् – स्पर्द्धायां शब्दे च + क्त प्रत्ययः ततः टाप् प्रत्ययः स्त्रियाम् ।

## उपह्वरे

**उपह्वरन्ति कुटिलयन्ति येन तस्मिन् व्यवहारे। – ऋ०, १/६२/६**

(स०ए०व०) – उप + √ह्वृ – कौटिल्ये + घ प्रत्ययः (पुंसि संज्ञायां घः प्रायेण – अष्टा०, ३/३/११८) ।

## उपह्वरः

उपजुहोतीति उपह्वरः रथो वा ।

– उ०को०, ३/१

उप + √हु – दानादानयोः + ष्वरच् प्रत्ययः बाहुलकात् (छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः – उ०को०, ३/१) ।

## उरः

ऋच्छति प्राप्नोति येन तत् उरः हृदयस्थानं वा । – उ०को०, ४/१९५

√ऋ – गतिप्रापणयोः + असुन् प्रत्ययः, धातोः उकारादेश च (अर्त्तेरुच्च – उ०को०, ४/१९५) ।

## उरणः

ऋच्छति गच्छतीति उरणः मेषो वा ।

– उ०को०, ५/१७

√ऋ – गतौ + क्युः प्रत्ययः, धातोः उकारादेशत्वञ्च (अर्त्तेः क्युरुच्च – उ०को०, ५/१७) ।

## उराणः

य उरून् बहूननिति प्राणयति सः ।

– ऋ०, ४/६/३

उर + √अन – प्राणने + अण् प्रत्ययः ।

## उरु:

ऊर्णोत्याच्छादयत्यल्पानिति उरु महत् ।

– उ०को०, १/३१

√ऊर्णुञ् – आच्छादने + कुः प्रत्ययः, णु लोपः ऊकारस्य ह्रस्वश्च (महति ह्रस्वश्च – उ०को०, १/३१) ।

## उरुगायः

य उरुभिर्बहुभिर्मन्त्रैर्गीयते स्तूयते वा ।

– ऋ०, १/१५४/१

यो बहूनर्थान् वेदद्वारा गायत्युपदिशति सः।

– यजु०, ५/१८

उरूणि बहूनि शास्त्राणि गायति पठति तत्सम्बुद्धौ । – यजु०, ८/१

उरु + √गै – शब्दे + अण् प्रत्ययः युगागमश्च ।

## उरुव्यञ्चं

उरुषु विशेषेणाञ्चति तम् ।

– यजु०, १५/२५

उरु + √अञ्चु – गतिपूजनयोः + अण् प्रत्ययः ।

## उरुशंस

य उरून् बहून् शंसति तत्सम्बुद्धौ ।

– यजु०, १८/४९

उरु + √शंसु – स्तुतौ + अण् प्रत्ययः ।

## उरूची

या उरूणि बहून्यञ्चति सा ।

– ऋ०, ३/३१/११

या उर्वीर्बह्वीर्विधा अञ्चति सा ।

– ऋ०, ३/५७/५

या बहूनञ्चति प्राप्नोति सा ।

– ऋ०, ७/३५/३

उरूणि बहूनि वस्तून्यञ्चन्तीम् ।

– ऋ०, ७/४५/३

या उरूणि बहून्यञ्चति प्राप्नोति ताम् ।

– यजु०, २१/५

उरु + √अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९) नकारस्य लोपः (अचः – अष्टा०, ६/४/१३८) दीर्घश्चेति (चौ – अष्टा०, ६/३/१३८) + ङीप् प्रत्ययः स्त्रियाम् ।

## उर्वराजिते

**य उर्वरां सर्वफलपुष्पशस्यादिप्रापिकां जयति तस्मै । – ऋ०, २/२१/१**

(च०ए०व०) – उर्वरा + √जि – जये + क्विप् प्रत्ययः तुगागमश्च ।

## उर्वरासां

**बहुश्रेष्ठाः पदार्थाः सन्ति यस्यान्तां भूमिं सनति ताम् । – ऋ०, ४/३८/१**

(द्वि०ए०व०) – उर्वरा + √षण – संभक्तौ + क्विप् प्रत्ययः ततः स्त्रियां टाप् ।

## उर्वशी

**उरवो बहवो वशे भवन्ति यया सा वाणी। – ऋ०, ५/४१/१९**

**ययोरूणि बहूनि सुखान्यश्नुवते सा यज्ञ क्रिया। – यजु०, ५/२**

**उरू बहु अश्नाति यया सा दीप्तिः । – यजु०, १५/१९**

उरु + √अशूङ् – व्याप्तौ संघाते च, अथवा √अश – भोजने, अथवा √वश – कान्तौ + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) + ङीप् प्रत्ययः स्त्रियाम् ।

## उलूकः

**वलतेऽसौ उलूकः पक्षिभेदो वा । – उ०को०, ४/४१**

√वल – संवरणे + ऊकः प्रत्ययः, निपातनात् धातोः सम्प्रसारणञ्च (उलूकादयश्च – उ०को०, ४/४१)।

## उलूखलक

**उलूखलं कायति शब्दयति यस्तत्संबुद्धौ विद्वन् । – ऋ०, १/२८/५**

उरु (उलु) + √डुकृञ् – करणे + ट प्रत्ययः (कृञो हेतुताच्छील्यानुलोम्येषु – अष्टा०, ३/२/२०), उकारस्य दीर्घत्वं, रेफस्य लकारत्वं, ककारस्य खकारत्वञ्च, वर्णव्यत्ययत्वात् उलूखलः ततः √कै – शब्दे + कः प्रत्ययः ।

## उल्का

**ओषति दहतीति उल्का विद्युदग्नेर्ज्वाला वा। – उ०को०, ३/४२**

√उष – दाहे + कक् प्रत्ययः निपातनात्, धातोः षकारस्य लकारत्वञ्च (शुकवल्कोल्काः – उ०को०, ३/४२) ।

## उल्मुकं

**ओषति दहतीति उल्मुकं ज्वलदङ्गारो वा। – उ०को०, ३/८४**

√उष – दाहे + मुक प्रत्ययः, षकारस्य लकारत्वं (उल्मुकदर्विहोमिनः – उ०को०, ३/८४) ।

## उशधक्

**उशः कमनीयान्दहति येन सः । – ऋ०, ३/६/७**

**य उशान् युद्धं कामयमानान्दहति सः। – ऋ०, ३/३४/३**

**य उशन्ति परस्वं कामयन्ति तान् दहति सः। – यजु०, ३३/२६**

√वश – कान्तौ (पृषोदरादि) सम्प्रसारणत्वात् > उश + √दह > धक् – भस्मीकरणे + क्विप् प्रत्ययः।

## उशनाः

**वष्टि कामयते स उशनाः शुक्रवारो वा। – उ०को०, ४/२३९**

√वश – कान्तौ + कनसिः प्रत्ययः (वशेः कनसिः – उ०को०, ४/२३९), सम्प्रसारणं (ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च – अष्टा०, ६/१/१६), ततः अनङादेशत्वञ्च (ऋदुशनस्पुरुदंशोऽनेहसाञ्च – अष्टा०, ७/१/९४) उपधा दीर्घत्वञ्च (सर्वनामस्थाने चासम्बुद्धौ – अष्टा०, ६/४/८)।

## उशी

उश्यते काम्यतेऽसौ उशी वाञ्छा ।

– उ०को०, ४/१

✓वश – कान्तौ + ई प्रत्ययः बाहुलकात् ( वातप्रमीः – उ०को०, ४/१ ) धातोः सम्प्रसारणम् ।

## उशीरं

उश्यते काम्यते तद् उशीरं वीरणमूलं वा। – उ०को०, ४/३१

✓वश – कान्तौ + ईरन् प्रत्ययः ( वशेः किच्च – उ०को०, ४/३१ ) धातोः सम्प्रसारणञ्च ।

## उषः

ओषति दहतीति उषः कर्णछिद्रं पर्वतभेदः।

– उ०को०, ४/२३४

✓उष – दाहे + असिः प्रत्ययः ( उषः किच्च – उ०को०, ४/२३४ ) ।

## उषपः

ओषति दहति स उषपः अग्निः सूर्यो वा। – उ०को०, ३/१४२

✓उष – दाहे + कपन् प्रत्ययः ( उषिकुटिदलिकचिखजिभ्यः कपन् – उ०को०, ३/१४२ ) ।

## उषर्बुधः

उषः संप्राप्य बोधयन्ति तान् । – ऋ०, १/१४/९

य उषसि स्वयं बुध्यन्ते, सुतान् बोधयन्ति तान् । – ऋ०, १/४४/१

य उषसि बुध्यन्ते तान् । – ऋ०, १/४४/९

यः उषः कालं बोधयन्ति तान् किरणान्।

– ऋ०, १/९२/१८

य उषसि बोधयति तम् ।

– ऋ०, ३/२/१४, ६/१५/१

य उषसि बुध्यते तम् । – ऋ०, ४/६/८

य उषन्ति हविर्दहन्ति तैर्यजमानैः ।

– यजु०, २९/३७

उषःकाले बुध्यते इति उषर्बुधः अग्निबलिः संयमी वा । – उ०को०, ४/२३४

✓उष – दाहे + असि प्रत्ययः ( उषः किच्च – उ०को०, ४/२३४ ) + ✓बुध – अवगमने + क्विप् प्रत्ययः ।

## उष्ट्रः

ओषति दहतीति उष्ट्रः पशुजातिभेदो वा।

– उ०को०, ४/१६२

✓उष – दाहे + ष्ट्रन् प्रत्ययः ( उषिखनिभ्यां कित् – उ०को०, ४/१६२ ) ।

## उष्णं

ओषति दहतीति उष्णं ईशतप्तं वा ।

– उ०को०, ३/२

✓उष – दाहे + नक् प्रत्यय ( इणषिञ्जिदीङुष्यविभ्यो नक् – उ०को०, ३/२ ) ।

## उष्णिक्

यया उषः स्निह्यति तया । – यजु०, २३/३३

उत्कृष्टतया स्निह्यति यया तस्यै क्रियायै।

– यजु०, २४/१२

उत् + ✓ष्णिह – प्रीतौ स्नेहने च + क्विन् प्रत्ययः ( ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९ ) ।

## ऊधः

वहति यत् इति, ऊधः गवादेर्दुग्धस्थानं वा। – उ०को०, ४/१९३

✓वह – प्रापणे + असुन् प्रत्ययः बाहुलकात्, धातोः सम्प्रसारणञ्च ( श्वेः सम्प्रसारणञ्च – उ०को०, ४/१९३ ) ।

## ऊनः

अवति रक्षादिकं करोतीति ऊनः असम्पूर्णं वा । – उ०को०, ३/२

√अव – रक्षणगत्यादिषु + नक् प्रत्ययः (इण्सिञ्-जिदीङुष्यविभ्यो नक् – उ०को०, ३/२)।

### ऊमं

**अवति रक्षणादिकं भवति यत्र तत् ऊमं नगरं वा। – उ०को०, १/१४४**

√अव – रक्षणादिषु + मन् प्रत्ययः (अविसिवि-सिषुषिभ्यः कित् – उ०को०, १/१४४) ऊठादेशः (ज्वरत्वरश्रिव्यविमवामुपधायाश्च – अष्टा०, ६/४/२०)।

### ऊरुः

**ऊर्णोत्याच्छादयति या सा ऊरुः जङ्घा। – उ०को०, १/३०**

√ऊर्णुञ् – आच्छादने + कु प्रत्ययः नु इत्यस्य लोपः (ऊर्णोतेर्नुलोपश्च – उ०को०, १/३०)।

### ऊर्णम्रदः

**य ऊर्णैरक्षकैर्मृद्नन्ति। – ऋ०, ५/५/४**

**उर्णानि धान्याच्छादनानि तुषाणि म्रदयति येन तं पाषाणमयम्। – यजु०, २/२**

**ऊर्णानि सुखाच्छादनानि म्रदयति येन तं यज्ञम्। – यजु०, २/५**

**ऊर्णमाच्छादनं मृद्नन्ति संत्वेषन्ति यया सा। – यजु०, ४/१०**

**य ऊर्णानाच्छादकानि मृद्नन्ति ते। – यजु०, २१/३३**

**य ऊर्णैराच्छादकैर्मृदन्ते ते। – यजु०, २१/५७**

√म्रद – मर्दने + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९)।

### ऊर्णा

**ऊर्णोत्याच्छादयति यया सा ऊर्णा अविमेषयो रोमाणि वा। – उ०को०, ५/४७**

√ऊर्णुञ् – आच्छादने + डः प्रत्ययः (ऊर्णोतेर्डः – उ०को०, ५/४७) ततः स्त्रियां टाप्।

### ऊर्णायुः

**ऊर्णा याति प्राप्नोतीति ऊर्णायुः मेषो मेषोर्णा कम्बलो वा। – उ०को०, ५/४७**

ऊर्णा + √या - प्रापणे + डुः प्रत्ययः (डु प्रकरणे मितद्र्वादिभ्य उपसंख्यानम् – अष्टा०वा०, ३/२/१८०)।

### ऊर्दरः

**उर्क् पराक्रमं रसं वा दृणातीति ऊर्दरः शूरो दुष्टो वा। – उ०को०, ५/४०**

ऊर्ज् + √दृ – विदारणे + अल् अच् वा प्रत्ययः (अर्जि दृणातेरलचौ – उ०को०, ५/४०)।

### ऊर्मिः

**ऋच्छति गच्छतीति ऊर्मिः जलतरङ्गो वा। – उ०को०, ४/४४**

√ऋ – गतौ + मिः प्रत्ययः धातोरूकारादेशश्च (अर्त्तेरू च – उ०को०, ४/४४)।

### ऊर्ध्वचितः

**ऊर्ध्वानुत्कृष्टगुणान् चेतयन्ति ते मनुष्याश्चित्तानि कपालानि वा। – यजु०, १/१८**

(प्र०ब०व०) – ऊर्ध्व + √चिती – सञ्ज्ञाने + क्विप् प्रत्ययः, ततः तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९)।

### ऊर्जः

**ऊर्जन्ति सर्वे पदार्था यस्मिन् स कार्त्तिकः। – यजु०, १४/१६**

√ऊर्ज – बलप्राणनयोः + क्विप् प्रत्ययः (भ्राजभास-धुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् – अष्टा०, ३/२/१७७)।

## ऊष्मा

ओषति दहतीति उष्मा ग्रीष्मर्त्तुर्वाष्पो वा।

– उ०को०, ४/१४५

✓उष – दाहे + मनिन् प्रत्ययः बाहुलकात् ( सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५ ) दीर्घत्वञ्च ( अन्येषामपि दृश्यते – अष्टा०, ६/३/१३७ ) ।

## ऋक्

ऋचन्ति स्तुवन्ति यया सा ऋक् ।

– उ०को० २/५७

✓ऋच्–स्तुतौ + क्विप् प्रत्ययः ( क्विब् वचिप्रच्छिश्रि-सुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च–उ०को०, २/५७ ) ।

## ऋक्थं

ऋचति यदर्थं स्तौतीति ऋक्थं धनं वा ।

– उ०को०, २/७

✓ऋच् – स्तुतौ + थक् प्रत्ययः ( पातृतुदिवचिरिचिसिचिभ्यस्थक् – उ०को०, २/७ ) ।

## ऋक्सामाभ्यां

ऋचन्ति स्तुवन्ति पदार्थान् येन स ऋग्वेदः। सामयन्ति सान्त्वयन्ति कर्मान्तं फलं प्राप्नुवन्ति येन स सामवेदः ऋक् च साम च ताभ्याम् । – यजु०, ४/१

( तृ०द्वि०व० ) ✓ऋच् – स्तुतौ + क्विप् प्रत्ययः ( अन्येभ्योऽपि दृश्यते – अष्टा०, ३/२/७५ ) > ऋक् + ✓षोऽन्तः कर्मणि + मनिन् प्रत्ययः ( सातिभ्यां मनिन्मनिणौ – उ०को०, ४/१५३ ) > ऋक्साम, अत्र समासान्ते अच् प्रत्ययः निपातनात् ( अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजमनिश्श्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः – अष्टा०, ५/४/७७ ) ततः टि लोपः ( नस्तद्धिते – अष्टा०, ६/४/१४४ ) ।

## ऋक्षं

ऋषति गच्छतीति ऋक्षं नक्षत्र सामान्यं वा। – उ०को०, ३/६६

ऋषति गच्छतीति ऋक्षः मृगजातिभेदो भल्लूकः । – उ०को०, ३/६७

✓ऋष – गतौ + सः प्रत्ययः ( स्नुव्रश्चिकृत्यृषिभ्यः कित् – उ०को०, ३/६७ ) ।

## ऋक्षरः

ऋषति प्राप्नोति वा स ऋक्षरः ऋत्विग्वा।

– उ०को०, ३/७५

ऋच्छति गच्छति स ऋच्छरः ।

– उ०को०, ३/१३१

✓ऋष – गतौ + क्सरन् प्रत्ययः ( तन्यृषिभ्यां क्सरन् – उ०को०, ३/७५ ) ।

## ऋग्मियं

ऋचां वेदमन्त्राणां निर्मातारम् ।

– ऋ०, १/९/९

ऋग्भिर्यो मीयते स्तूयते तस्मै ।

– ऋ०, १/६२/१

य ऋग्भिर्मीयते प्रमीयते तम् ।– ऋ०, ३/२/४

य ऋग्भिर्मीयते तम् । – ऋ०, ६/८/४

यो ऋचो मिनोत्यधीते तस्मै ।

– यजु०, ३४/१६

ऋग् + ✓माङ् – माने शब्दे च + डियच् प्रत्ययः, जत्वस्य गत्वञ्चेति ।

## ऋघावान्

य ऋन् शत्रून् घ्नन्ति ते वा बहवः शूरा विद्यन्ते यस्य सः । – ऋ०, ३/३०/३

१- ऋ ( अरिः ) + ✓हन् – हिंसागत्योः + क्वनिप् प्रत्ययः, वर्णव्यत्ययत्वात् हकारस्य घकारः, न लोपश्च ।

२- ✓ऋघ – वधार्थे + अङ् प्रत्ययः + मतुप् प्रत्ययः।

## ऋचीषमाय

ऋच्यन्ते स्तूयन्ते ये त ऋचीषास्तानतिमान्यान् करोति तस्मै । – ऋ०, १/६१/१

(च०ए०व०) – ✓ऋच् – स्तुतौ + ईषन् प्रत्ययः > ऋचीष + ✓माङ् – माने शब्दे च + डः प्रत्ययः (अन्येष्वपि दृष्यते – अष्टा०, ३/२/१०१)।

## ऋजीकः

अर्जति गच्छतीति ऋजीकः ।

– उ०को०, ४/२२

अर्जति गच्छतीति ऋजीकः सूर्यो धूमो वा । – उ०को०, ५/५१

✓अर्ज – अर्जने + ईकन् प्रत्ययः धातोर्ऋजादेशश्च (ऋजेश्च – उ०को०, ४/२२)।

## ऋजीषं

अर्जति सञ्चितो भवति यस्मात्तत् ऋजीषं पिष्टपचनं वा । – उ०को०, ४/२८

✓अर्ज – अर्जने + ईषन् प्रत्ययः धातोर्ऋजादेशश्च (अर्जेर्ऋज च – उ०को०, ४/२८)।

## ऋजुः

अर्जयति सञ्चिनोति गुणानिति ऋजुः कोमलो वा । – उ०को०, १/२७

✓अर्ज – अर्जने + कुः प्रत्ययः (अर्जिदृशिकम्यमिपंसिबधामृजिपशितुकधुकदीर्घहकाराश्च – उ०को०, १/२७)।

## ऋजिप्याः

ऋजीन्सरलान्व्यवहारान् प्यायन्ते वर्धयन्ति ते। – ऋ०, ३/३१/१७

(प्र०ब०व०) – ✓अर्ज – अर्जने + इन् प्रत्ययः (इगुपधात् कित् – उ०को०, ४/१२०), ततः अर्जेर्ऋजादेशः (अर्जेर्ऋज च – उ०को०, ४/२८) > ऋजि + ✓ओप्यायी – वृद्धौ + कः प्रत्ययः ।

## ऋजिश्वानं

य ऋजीन् ज्ञानादिसरलान् गुणानश्नुते तं धार्मिकं मनुष्यम् । – ऋ०, १/५१/५

ऋजि + ✓अशूङ् व्याप्तौ + वनिप् प्रत्ययः धातोः अकारलोपश्च ।

## ऋजुगाथ

य ऋजुं सरलं व्यवहारं गाति स्तौति तत्सम्बुद्धौ । – ऋ०, ५/४४/५

✓अर्ज – अर्जने + कुः प्रत्ययः (अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुकधुकदीर्घहकाराश्च – उ०को०, १/२७), अर्ज धातोः ऋजादेशः (अर्जेर्ऋज च – उ०को०, ४/२८) > ऋजु + ✓गै – शब्दे + स्थन् प्रत्ययः ।

## ऋजुमुष्कान्

य ऋजुना मुष्णन्ति तान् । – ऋ०, ४/२/२

य ऋजुं मार्गं मुष्णन्ति ते । – ऋ०, ४/६/९

ऋजु + ✓मुष – स्तेये + कक् प्रत्ययः ।

## ऋज्वञ्चः

याभिर्ऋजुमञ्चन्ति । – ऋ०, ४/६/९

(प्र०ब०व०) – ऋजु + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः ।

## ऋज्रः

अर्जति गच्छति तिष्ठति वा स ऋज्रः नायको वा। – उ०को०, २/२८

✓अर्ज – अर्जने + रन् प्रत्ययः (ऋजेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्रेरामालाः – उ०को०, २/२८)।

## ऋञ्जसानः

य ऋञ्जति प्रसाध्नोति सः ।

– ऋ०, १/५८/३

ऋञ्जत्योषध्यादिकं पाचयतीति ऋञ्जसानः मेघो वा । – उ०को०, २/८७

√ऋञ्ज – स्तुतिप्रसाधनयोः + असानच् प्रत्ययः (ऋञ्चिवृधिमन्दिसहिभ्यः कित् – उ०को०, २/८७)।

## ऋणचित्

य ऋणं चिनोति सः । – ऋ०, २/२३/१७

ऋण + √चिञ् – चयने + क्विप् प्रत्ययः तुगागमश्चेति।

## ऋणयाः

य ऋणं याति प्राप्नोति सः ।

– ऋ०, २/२३/११, २/२३/१७

ऋण + √या – प्रापणे + अण् प्रत्ययः ।

## ऋणयावा

य ऋणं याति प्राप्नोति सः ।

– ऋ०, १/८७/४

ऋण + √या – प्रापणे + वनिप् प्रत्ययः (आतो मनिन्क्वनिब्वनिपश्च – अष्टा०, ३/२/७४) ।

## ऋणञ्चय

ऋणं चिनोति येन तस्य ।

– ऋ०, ५/३०/१२

ऋणं चिनोति यस्मात्तस्मिन् ।

– ऋ०, ५/३०/१४

ऋण + √चिञ् – चयने + अच् प्रत्ययः (एरच् – अष्टा०, ३/३/५६) ।

## ऋतं

ऋच्छत्यात्मानं प्राप्नोतीति ऋतं यथार्थं वा।

– उ०को०, ३/८९

√ऋ – गतिप्रापणयोः + क्त प्रत्ययः बाहुलकात् (अञ्जिघृसिभ्यः क्तः – उ०को०, ३/८९) ।

## ऋतचित्

या ऋतं सत्यं चिनोति सा ।

– ऋ०, ४/३/४, ४/१६/१०,

य ऋतं चिनोति सः । – ऋ०, ५/३/९

√ऋ – गतिप्रापणयोः > ऋत + क्त प्रत्ययः + √चिञ् – चयने + क्विप् प्रत्ययः तुगागमश्चेति ।

## ऋतजाः

ऋतात्सत्याज्जातः । – ऋ०, ३/५८/८

यः सत्याज्जातः । – ऋ०, ४/४०/५

य ऋतं सत्यं ज्ञानं जनयति सः ।

– यजु०, १२/१४

ऋत + √जनि – प्रादुर्भावे + डः प्रत्ययः ।

## ऋतजाताः

य ऋते जायन्ते । – ऋ०, ५/६१/१४

य ऋते सत्ये जायते तत्सम्बुद्धौ ।

– ऋ०, ६/१३/३

ऋत + √जनि – प्रादुर्भावे + क्तः प्रत्ययः धातोर्जादिशश्च।

## ऋतज्ञाः

या ऋतं जानन्ति ताः । – ऋ०, ४/१९/७

ऋतं सत्यं जानाति यया ताम् ।

– ऋ०, ५/४३/६

ये ऋतं यथार्थं जानन्ति ते ।

– ऋ०, ५/५७/८

य ऋतं परमात्मानं प्रकृतिं वा जानन्ति ते।

– ऋ०, ५/५८/८

य ऋतं सत्यं जानन्ति । – ऋ०, ७/३५/१५

य ऋतं जानन्ति ते सत्यं व्यवहारं ब्रह्म वा जानन्ति ते । – ऋ०, ७/३८/८

ये ऋतं सत्यं जानन्ति ते । – यजु०, ९/१८

ये ऋतं सत्यं जानन्ति । – यजु०, १९/४९

य ऋतं सत्यं जानन्ति ते । – यजु०, २१/११

(प्र०ब०व०) – ऋत + √ज्ञा – अवबोधने + कः प्रत्ययः ।

## ऋतधामा

यथा सत्यं कारणं जलं वा दधाति तथा।

– यजु०, ५/३२

ऋत + √डुधाञ् – धारणपोषणयोः + मनिन् प्रत्ययः।

## ऋतपाः

य ऋतं सत्यं पाति ।

ऋ०, ६/३/१ – यजु०, २६/८०

ऋत + √पा – रक्षणे + अप् प्रत्ययः ।

## ऋतयुक्

ये ऋतेन सत्येन युञ्जते तैः । – ऋ०, ४/५१/५

ये ऋतेन सत्येन युनक्ति । – ऋ०, ६/३९/२

ऋत + √युजिर् – योगे + क्विप् प्रत्ययः (सत्सूद्विषद्रुहदुयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१) ।

## ऋतसत्

यः सत्ये सीदति । – ऋ०, ४/४०/५

य ऋतेषु सत्येषु प्रकृत्यादिषु सीदति सः।

– यजु०, १०/२४

य ऋते सत्ये संस्थितः । – यजु०, १२/१४

ऋत + √षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः (सत्सूद्विषद्रुहदुयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि – अष्टा०, ३/२/६१) ।

## ऋतसापः

य आप्नुवते त आपः समानाश्च ते इति सापः सन्त्यस्य मध्ये व्यापकाः व्यापायितारो वा विद्वांसः । – ऋ०, १/१७९/२

य ऋतेन सत्येन सपन्ति । – ऋ०, ६/२१/११

ये ऋतेन सत्येन सपन्ति सम्बध्नन्ति ते ।

– ऋ०, ६/५०/२

ये ऋतेन सपन्ति प्रतिज्ञां कुर्वन्ति ते ।

– ऋ०, ७/५६/१२

(प्र०ब०व०) ऋत + √आप्लृ – व्याप्तौ + क्विप् प्रत्ययः, समानत्वं सादेशत्वात् ऋतसापः अथवा ऋत + √सप (षप) – समवाये + घञ् प्रत्ययः ।

## ऋतस्तुभं

यया ऋतं स्तोभते स्तभ्नाति धरति ।

– ऋ०, १/११२/२०

(द्वि०ए०व०) ऋत + √स्तुम्भु – स्तम्भार्थे (स्तोतृनाम) + क्विप् प्रत्ययः ।

## ऋतस्पृशः

य ऋतं सत्यं यथार्थं स्पृशन्ति स्वीकुर्वन्ति ते। – ऋ०, ५/६७/४

(प्र०ब०व०) ऋत + √स्पृश – संस्पर्शने + क्विप् प्रत्ययः।

## ऋतावा

य ऋतेन सत्येन वनोति संभजति सः ।

– ऋ०, १/१२२/९

यः ऋतानि सत्याचरणानि वनन्ति संभजन्ति ते । – ऋ०, २/२४/७

य ऋतानि सत्यानि वनन्ति सम्भजन्ति ते।

– ऋ०, २/२७/४

य ऋतं वनति संभजति सः । – ऋ०, २/३५/८

य ऋतं सत्यं वनुते याचते सः ।

– ऋ०, ३/१३/२

य ऋतं संभजति । – ऋ०, ३/२०/४

य ऋतं सत्यं वनुते याचते सः ।

– ऋ०, ६/१२/१

यः ऋतं जलं संवनति भजति सः ।

– ऋ०, ६/७३/१

य ऋतं जलं वनति संभजति तम् ।

– यजु०, २६/६

ऋत + √वन – सम्भक्तौ अथवा √वनु – याचने + विच् प्रत्ययः (अन्येभ्योऽपि दृष्यते – अष्टा०, ३/२/७५) ततः आकारादेशः उपधायाः दीर्घत्वञ्चेति।

## ऋतावृधः

ऋतमुदकं सत्यं यज्ञं च वर्धयन्ति तान्।
– ऋ०, १/१४/७

ऋतेन सत्येन वर्द्धन्ते ते। – ऋ०, १/४५/१४

यावृतेन सत्यानुष्ठानेन वर्धेते तौ।
– ऋ०, १/४७/५

ये ऋतेन कारणेन वर्धेतां ते।
– ऋ०, १/१०६/३

ऋतेन सत्येनाचरणेन विज्ञानेन च वृद्धाः।
– ऋ०, १/१४२/१०

या ऋतं सत्यं वर्धयन्ति ताः।
– ऋ०, ५/४४/४

या ऋतं सत्यं वर्धयन्ति ताः।
– यजु०, ४/१२

या ऋतं सत्यं वर्धयन्ति ताः।
– यजु०, १७/३

या ऋतेन जलेन नद्य इव सत्येन वर्द्धन्ते ताः। – यजु०, १७/३

ये ऋतेन सत्येन वर्धन्ते। – यजु०, १७/७८

य ऋतेन वेदविज्ञानेन वर्द्धन्ते।
– यजु०, १९/६५

ये ऋतं सत्यं वर्द्धयन्ति ते।
– यजु०, २०/३०

या ऋतं सत्यं वर्द्धयन्ति ताः।
– यजु०, २८/५

य ऋतं सत्यं वर्द्धयन्ति। – यजु०, २९/४७

(प्र०ब०व०) – ऋत + √वृधु – वृद्धौ + क्विप् प्रत्ययः पूर्वपदस्य च दीर्घः (अन्येषामपि दृश्यते – अष्टा०, ६/३/१३७)।

## ऋताषाट्

य ऋतं सत्यं व्यवहारं सहते सः।
– यजु०, १८/३८

ऋत + √षह – मर्षणे + ण्वि प्रत्ययः (छन्दसि सहः – अष्टा०, ३/२/६३), षत्वं, दीर्घत्वञ्च (अन्येषामपि दृष्यते – अष्टा०, ६/३/१३७)।

## ऋतीषाहं

य ऋतिं सत्यं सहते तम्। – ऋ०, १/६४/१५

य ऋतीन् परपदार्थप्रापकाञ्छत्रून्सहते तम्।
– ऋ०, ६/१४/४

√ऋ – गतौ + क्तिच् प्रत्ययः > ऋति + √षह – मर्षणे + ण्वि प्रत्ययः (छन्दसि सहः – अष्टा०, ३/२/६३), पूर्वपदस्य दीर्घत्वं (अन्येषामपि दृष्यते – अष्टा०, ६/३/१३७)।

## ऋतुः

पुनः पुनर्ऋच्छति गच्छत्यागच्छतीति ऋतुः वसन्तादिः स्त्रीणां रजःपतनकालो वा।
– उ०को० १/७२

√ऋ – गतिप्रापणयोः + तुः प्रत्ययः (अर्त्तेश्च तुः – उ०को०, १/७२)।

## ऋतुपाः

य ऋतून् पाति रक्षति स सूर्य्यः।
– ऋ०, ३/४७/३

ये ऋतुषु पान्ति तैः। – ऋ०, ४/३४/७

य ऋतून् पाति। – ऋ०, ५/१२/३

√ऋ – गतिप्रापणयोः + तु प्रत्ययः (अर्तेश्च तुः – उ०को०, १/७२) > ऋतु + √पा – रक्षणे + अच् प्रत्ययः।

## ऋतुभिः

ऋच्छन्ति प्राप्नुवन्ति यैस्तैः।
– ऋ०, १/१५/१०

(तृ०ब०व०) – √ऋ – गतिप्रापणयोः + तु प्रत्ययः (अर्तेश्च तुः – उ०को०, १/७२)।

## ऋतुष्ठाः

**या ऋतुषु वसन्तादिषु तिष्ठन्ति ताः।**
– यजु०, १७/३

ऋतु + √ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः।

## ऋतेजाः

**यो ऋते सत्ये जायते।** – ऋ०, ६/३/१

ऋते (स०ए०व०) + √जनि – प्रादुर्भावे + विट् प्रत्ययः (जनसनखनक्रमगमो विट् – अष्टा०, ३/२/६७) अनुनासिस्याकारादेशः (विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१)।

## ऋत्विक्

**य ऋतौ प्रत्युत्पत्ति कालं संसारं सङ्गतं यजति करोति तथा च शिल्पसाधनानि सङ्गमयति सर्वेषु ऋतुषु यजनीयस्तम्।**
– ऋ०, १/१/१

**ऋतून् जयति संगच्छते यस्तम्।**
– ऋ०, १/४५/७

**य ऋतुषु यजन्ते ते विद्वांसः।**
– ऋ०, १/६०/३

**य ऋतुषु यजति तद्वद्वर्त्तमानम्।**
– ऋ०, ५/२२/२

ऋतु + √यज – देवपूजासङ्गतिकरणदानेषु + क्विन् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९), कुत्व इति सम्प्रसारणञ्च (वचिस्वपियजादीनां किति – अष्टा०, ६/१/१५)।

## ऋभुक्षाः

**य ऋभून् मेधाविनः क्षाययति निवासयति ज्ञापयति वा तम्।** – ऋ०, १/१११/४

**य ऋभून् मेधाविनः क्षियति निवासयति स महान्।** – ऋ०, ७/४८/३

ऋ (ऋत) + √भू – सत्तायां, √भा – दीप्तौ वा + कु प्रत्ययः (मृगय्वादयश्च – उ०को०, १/३७) धातोः दीर्घस्य लोपः (आतो लोप इटि च – अष्टा०, ६/४/६४) > ऋभु + √क्षि – निवासे + इनि प्रत्ययः, टिलोपः (पतः स्थ च – उ०को०, ४/१२) आकारादेशश्च।

## ऋषभः

**ऋषति गच्छतीति ऋषभः।**
– उ०को०, ३/१२३

√ऋष – गतौ + अभच् प्रत्ययः (ऋषिवृषिभ्यां कित् – उ०को०, ३/१२३)।

## ऋषिः

**मन्त्रार्थद्रष्टृभिरध्यापकैस्तर्कैः कारणस्थैः प्राणैर्वा।** – ऋ०, १/१/२

**ऋषति गच्छति प्राप्नोति जानाति वा स ऋषिः मन्त्रार्थद्रष्टा वा।** – उ०को०, ४/१२०

√ऋष – गतौ + इन् प्रत्ययः (इगुपधात् कित् – उ०को०, ४/१२०)।

## ऋष्यः

**ऋषति गच्छतीति ऋष्यः मृगभेदो वा।**
– उ०को०, ४/११२

√ऋष् – गतौ + यक् प्रत्ययः (अघ्न्यादयश्च – उ०को०, ४/११२)।

## ऋष्टिभिः

**याभिः कलायन्त्रयष्टीभिर्ऋषन्ति जानन्ति प्राप्नुवन्ति व्यवहारांस्ताभिः।**
– ऋ०, १/३७/२

(तृ०ब०व०) – √ऋष – गतौ + क्तिन् प्रत्ययः स्त्रियाम्।

## एकः

**एति प्राप्नोतीति एकः मुख्योऽन्यः केवलो वा।** – उ०को०, ३/४३

✓इण् – गतौ + कन् प्रत्ययः (इणभीकापाशल्यतिमर्चिभ्यः कन् – उ०को०, ३/४३)।

## एतग्वाः

**एतान् प्रत्यक्षान् पदार्थान् गच्छन्तीति ।**

– ऋ०, १/११५/३

✓इण् + गतौ + तन् प्रत्ययः (हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६) > एतः + ✓गम् – गतौ + वन् प्रत्ययः धातोः टिलोपश्च ।

## एतः

**एति प्राप्नोति यं स एतः विचित्रवर्णो वा।** – उ०को०, ३/८६

✓इण् – गतौ + तन् प्रत्ययः (हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६)।

## एतत्

**एति प्राप्नोतीति एतत् अस्य सर्वनामसञ्ज्ञा।**

– उ०को०, १/१३३

✓इण् – गतौ + अदिः प्रत्ययः (तुडागमश्च एतेस्तुद् च – उ०को०, १/१३३)।

## एतशः

**एति प्राप्नोतीति एतशः अश्वो ब्राह्मणो वा।** – उ०को०, ३/१४९

✓इण – गतौ + तशन् प्रत्ययः (इणस्तशन्तशसुनौ – उ०को०, ३/१४९)।

## एधतुः

**एधते वर्द्धतेऽसौ एधतुः पुरुषो वा ।**

– उ०को०, १/७७

✓एध – वृद्धौ + तुः प्रत्ययः (एधिवह्योश्च तुः – उ०को०, १/७७)।

## एनः

**ईयते प्राप्यते दुःखमनेन तद् एनः पापं वा।** – उ०को०, ४/१९८

✓इण् – गतौ + असुन् प्रत्ययः (इण आगसि च – उ०को०, ४/१९८)।

## एमन्

**एति गच्छति तस्मिन् वायौ ।** – यजु०, १३/५३ (स०ए०व०) – ✓इण् – गतौ + मनिन् प्रत्ययः ।

## ओकः

**अवति रक्षणहेतुर्भवतीति ओकः राशिः स्थानं वा ।** – उ०को०, ३/४१

✓अव – रक्षणादिषु + कक् प्रत्ययः बाहुलकात् (सृवृभूशुषिमुषिभ्यः कक् – उ०को०, ३/४१) अथवा ✓उच् – समवाये + असुन् प्रत्ययः बाहुलकात् कुत्वञ्च (अञ्च्यञ्जियुजिभृजिभ्यः कुश्च – उ०को०, ४/२१६) ततः आद्युदात्तः ।

## ओजः

**उब्जति कोमलो भवतीति ओजः पराक्रमो वा ।** – उ०को०, ४/१९२

✓उब्ज – आर्जवे + असुन् प्रत्ययः बलोपश्च (उब्जेर्बले बलोपश्च – उ०को०, ४/१९२)।

## ओतुः

**अवति रक्षणादिकं करोति स ओतुः विडालो वा ।** – उ०को०, १/६९

✓अव – रक्षणादिषु + तुन् प्रत्ययः (सितनिगमिमसिसच्यवि धाञ्क्रुशिभ्यस्तुन् – उ०को०, १/६९) ऊठादेशश्च (ज्वरत्वरश्रिव्यविमवामुपधायाश्च – अष्टा०, ६/४/२०)।

## ओदनः

**उनत्त्यार्द्रीभवतीति ओदनः भक्तं वा ।**

– उ०को०, २/७६

✓उन्दी – क्लेदने + युच् प्रत्ययः धातोः 'न' लोपश्च (उन्देर्नलोपश्च – उ०को०, २/७६)।

## ओम्

**योऽवति सकलं जगत्तदाख्यां ।** – यजु०, ४०/१७

अवति रक्षादिकं करोतीति ओम् प्रणव आरम्भोऽनुमतिर्वा । – उ०को०, १/१४२

अवतीत्योम् । – *स०प्र० प्रथम समुल्लास*

✓अव-रक्षणगतिकान्तिप्रीत्यादिषु + मन् प्रत्ययः (अविसिविसिशुषिभ्यः कित्, ऊठादेशः, ज्वरत्वरश्रिव्यविमवामुपधायाश्च – अष्टा०, ६/४/२०) मन् प्रत्ययः टिलोपश्च (अवतेष्टिलोपश्च – उ०को०, १/१४२)।

## ओम्यावन्तं

ये अवन्ति ते ओमानस्तान् ये यान्ति प्राप्नुवन्ति त ओम्याः एते प्रशस्ता विद्यन्ते यस्य तम्। – ऋ०, १/११२/७

(द्वि०ए०व०) – ✓अव – रक्षणगतिकान्तिप्रीत्यादिषु + मनिन् प्रत्ययः > ओमन् + ✓या प्रापणे + अण् प्रत्यय > ओम्या + मतुप् प्रत्ययः ।

## ओषधे

ओषो विज्ञानं धीयते यस्मिँस्तत्संबुद्धौ । – यजु०, ६/१५

(सम्बोधने) ✓ओष – गतौ + ✓धेट् – पाने + किः प्रत्ययः (कर्मण्यधिकरणे च – अष्टा०, ३/३/९३)।

## ओष्ठः

ओषति यो दहति येन वा स ओष्ठः मुखावयवो वा । – उ०को०, २/४

✓उष – दाहे + थन् प्रत्ययः (उषिकुषिगार्त्तिभ्यस्थन् – उ०को०, २/४) धातोः गुणः (पुगन्तलघूपधस्य च-अष्टा०, ७/३/८६) ततः प्रत्ययस्य थकारस्य ठकारः।

## ओहं

ओहति प्राप्नोति येन तम् । – ऋ०, १/६१/१

✓वह – प्रापणे + घञ् प्रत्ययः सम्प्रसारणञ्च ।

## औशिजः

य उशिजि प्रकाशे जातः स उशिक् तस्य विद्यावतः पुत्रं इव । – ऋ०, १/१८/१

यः सर्वा विद्या वष्टि स उशिक् तस्य विद्यापुत्र इव । – यजु०, ३/२८

✓वश – कान्तौ + इजिः प्रत्ययः (वशः कित् – उ०को०, २/७१) सम्प्रसारणञ्च > उशिज् + अण प्रत्ययः, आदिवृद्धिश्च, (तस्यापत्यम् – अष्टा०, ४/१/९२)।

## कक्खटं

कखति हसतीति कक्खटं कठिनं वा । – उ०को०, ४/८१

✓कख – हसने + अटन् प्रत्ययः बाहुलकात् कुगागमश्च (शकादिभ्योऽटन् – उ०को०, ४/८१)।

## कक्षं

कषति हिनस्तीति कक्षं तृणं लतावनसमीपं बाहुमूलं वा । – उ०को०, ३/६२

✓कष – हिंसार्थे + सः प्रत्ययः (वृतृवदिवचिवसिहनिकमिकषिभ्यः सः – उ०को०, ३/६२) षकारस्य ककारत्वं (षढोः कः सि – अष्टा०, ८/२/४१)।

## कक्ष्यप्राः

कक्षासु भवाः कक्ष्याः सर्वपदार्थाऽवयवास्तां प्रातः प्रपूरयतस्तौ । – ऋ०, १/१०/३

कक्ष्यं प्रातः पिपूर्तः । – यजु०, ८/३४

कक्ष् + यत् प्रत्ययः भवार्थे (भवे छन्दसि – अष्टा०, ४/४/११०) > कक्ष्य + ✓प्रा – पूरणे + कः प्रत्ययः (आतोऽनुपसर्गे कः – अष्टा०, ३/२/३)।

## कङ्कटः

कङ्कते गच्छतीति कङ्कटः कवचो वा । – उ०को०, ४/८१

✓ककि – गतौ + अटन् प्रत्ययः (शकादिभ्योऽटन् – उ०को०, ४/८१) नुमागमश्च ।

**कङ्कणः**

कायति शब्दयतीति कङ्कणः करभूषणं वा। – उ०को०, ४/२४

कं + √कण – शब्दार्थाः + अच् प्रत्ययः ।

**कङ्कणीका**

पुनः पुनः कणति शब्दयतीति कङ्कणीका वाद्यसाधनविशेषो वा । – उ०को०, ४/१८

यङ्लुगन्तात् कण + √ईकन् प्रत्ययः कङ्कणादेशश्च (चङ्कणः कङ्कण च – उ०को०, ४/१८) स्त्रियां टाप् ।

**कचपं**

कचते बध्नातीति कचपं शाकपात्रं वा। – उ०को०, ३/१४२

√कच – बन्धने + कपन् प्रत्ययः (उषिकुटिदलिकचिखजिभ्यः कपन् – उ०को०, ३/१४२) ।

**कच्छः**

कच्यते बध्यतेऽसौ कच्छः शाकमूलं वा। – उ०को०, ४/१०५

√कच – बन्धने + छक् प्रत्ययः (अन्येऽपि दृश्यन्ते – उ०को०, ४/१०५) ।

**कच्छूः**

कषति हिनस्ति दुःखयतीति कच्छूः पामा वा। – उ०को०, १/८४

√कष – हिंसार्थे + ऊः प्रत्ययः, षकारस्य छकारः (कषेश्छश्च – उ०को०, १/८४) ।

**कञ्चूलः**

कञ्चते दीप्यतेऽसौ कञ्चूलः स्त्रीगात्राभरणं वा । – उ०को०, ४/९०

√कचि – दीप्तिबन्धनयोः + ऊलः प्रत्ययः (खर्जिपिञ्जादिभ्य ऊरोलचौ – उ०को०, ४/९०) नुमागमश्च ।

**कञ्जारः**

कञ्जति रौतीति कञ्जारः मयूरो व्यञ्जनं वा । – उ०को०, ३/१३७

√कजि – शब्दे + आरन् प्रत्ययः (अङ्गिमदिमन्दिभ्य आरन् – उ०को०, ३/१३७) धातोः नुमागमश्च ।

**कटकः**

कटत्यावृणोत्यङ्गमिति कटकं आभूषणं वा। – उ०को०, २/३२

कटति वर्षत्यावृणोति वा स कटकः बाहुभूषणं शिखरा वा । – उ०को०, ५/३५

√कटी – गतौ + वुन् प्रत्ययः (कृञादिभ्यः संज्ञायां वुन् – उ०को०, ५/३५) ।

**कटप्रूः**

कटेन कटिभागेन प्रवते गच्छतीति कटप्रूः कामुको जनः कीटो वा । – उ०को०, २/५७

कट + √प्रुङ् – गतौ + क्विप् प्रत्ययः, धातोः दीर्घत्वमसंप्रसारणश्च (क्विप् वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणश्च – उ०को०, २/५७) ।

**कटम्बः**

कटतीति कटम्बः वादित्रं वा । – उ०को०, ४/८२

√कटी – गतौ + अम्बच् प्रत्ययः (कृकदिकडिकटिभ्योऽम्बच् – उ०को०, ४/८२) ।

**कटिः**

कटतीति कटिः कटी शरीरमध्यं वा । – उ०को०, ४/११८

√कटी – गतौ + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

**कटित्रं**

कटतीति कटित्रं कवचभेदो वा । – उ०को०, ४/१७३

√कटी – गतौ + इत्र प्रत्ययः (अशित्रादिभ्य इत्रोत्रौ – उ०को०, ४/१७३)।

## कटीरः

कट्यत् आव्रियतेऽसौ कटीरः कुटी जघनदेशो वा। – उ०को०, ४/३०

√कटी – गतौ + ईरन् प्रत्ययः (कृशृपृकटिपटिशौटिभ्य ईरन् – उ०को०, ४/३०)।

## कटुः

अत्र चकारग्रहणाद् वा कटति विकारयतीति कटुः रसः। – उ०को०, १/८

√कटी – गतौ + उः प्रत्ययः (अणश्च – उ०को०, १/८)।

## कटोलः

कटति वर्षत्यावृणोति वा स कटोलः कटुश्चालो वा। – उ०को०, १/६६

√कटे – वर्षावरणयोः + ओलच् प्रत्ययः (कपिगडिगण्डिकटिपटिभ्य ओलच् – उ०को०, १/६६)।

## कट्वरं

कटतिवर्षत्यावृणोति वा तत् कट्वरं भोज्यं व्यञ्जनं वा ; – उ०को०, ३/१

√कटे – वर्षावरणयोः + ष्वरच् प्रत्ययः निपातनात् (छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः - उ०को०, ३/१)।

## कठाकुः

कठतीति कठाकुः पक्षी वा।

– उ०को०, ३/७७

√कठ – कृच्छ्रजीवने + काकुः प्रत्ययः (कठिकुषिभ्यां काकुः – उ०को०, ३/७७)।

## कठिनं

कठति कृच्छ्रेण जीवतीति कठिनं कठोरं वा। – उ०को०, २/४९

√कठ – कृच्छ्रजीवने + इनच् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/४९)।

## कठेरः

कटति कृच्छ्रेण जीवतीति कठिनं कठोरं वा। – उ०को०, १/५८

√कठ – कृच्छ्रजीवने + एरक् प्रत्ययः (पतिकठिकुठिगडिगुडिदंशिभ्यः एरक् – उ०को०, १/५८)।

## कठोरः

कठति कृच्छ्रेण जीवति येन सः कठोरः कठिनः पूर्णो वा। – उ०को०, १/६४

√कठ – कृच्छ्रजीवने + ओरन् प्रत्ययः (कठिचकिभ्यामोरन् – उ०को०, १/६४)।

## कडत्रं

गठति सिञ्चतीति कडत्रम्।

– उ०को०, ३/१०६

√गड – सेचने + अत्रन् प्रत्ययः धातोः गकारस्य ककारः (गडेरादेश्च – उ०को०, ३/१०६)।

## कडम्बः

कडत्यावृणोतीति कडम्बः अग्रभागो वा।

– उ०को०, ४/८२

√कड – आवरणे मदे च + अम्बच् प्रत्ययः (कृकदिकडिकटिभ्योऽम्बच् – उ०को०, ४/८२)।

## कडारः

गडति सिञ्चतीति कडारः पीतवर्णो वा।

– उ०को०, ३/१३५

√गड – सेचने + आरन् प्रत्ययः, धातोः गकारस्य ककारः (गडेः कड च – उ०को०, ३/१३५)।

## कणीचिः

कणति शब्दयतीति कणीचिः पत्रादियुक्ता शाखा शब्दो वा।

– उ०को०, ४/७०

√कण – गतौनिमीलने शब्दार्थे च + ईचिः प्रत्ययः (मृकणिभ्यामीचिः – उ०को०, ४/७०)।

## कण्ठः

कणति येन शब्दं करोतीति कण्ठः गलो ध्वनिर्वा। – उ०को०, १/१०३

√कण – गतौ निमीलने शब्दार्थे च + ठः प्रत्ययः (कणेष्ठः – उ०को०, १/१०३)।

## कण्डोलः

कण्डति माद्यतीति कण्डोलः चाण्डालो वा। – उ०को०, १/६६

√कडि – मदे + ओलच् प्रत्ययः बाहुलकात् (कपि-गडिगण्डिकटिपटिभ्य ओलच् – उ०को०, १/६६)।

## कण्वं

कणति निमीलति चेष्टतेऽसौ कण्वम् पापं कण्वोमुनिर्वा। – उ०को०, १/१५१

√कण – गतौ निमीलने शब्दार्थे च + क्वन् प्रत्ययः (अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् – उ०को०, १/१५१)।

## कदम्बः

कदतीति कदम्बः वृक्षभेदो वा।

– उ०को०, ४/८२

√कद – वैकल्व्ये + अम्बच् प्रत्ययः (कृदिकडिक-टिभ्योऽम्बच् – उ०को०, ४/८२)।

## कदरः

कन्दति वैकल्यं करोतीति कदरः श्वेत खादिरो वा। – उ०को०, ३/१३१

√कद – वैकल्व्ये + अरः प्रत्ययः बाहुलकात् (ऋच्छेररः – उ०को०, ३/१३१)।

## कदली

कन्दत्याह्वयति सा कदली वृक्षभेदः।

– उ०को०, १/१०८

√कदि – आह्वाने रोदने च + कल प्रत्ययः बाहुलकात् (लङ्गेर्वृद्धिश्च – उ०को०, १/१०८) स्त्रियां ङीप् प्रत्ययः।

## कद्रूः

कवतेऽसौ कद्रूः वर्णभेदो वा।

– उ०को०, ४/१०२

√कवृ – वर्णे + रू प्रत्ययः (जत्वादयश्च – उ०को०, ४/१०२), धातोः वकाकस्य स्थाने दकारश्चेति।

## कधप्रियाः

ये कधाभिः कथाभिः प्रीणयन्ति ते।

– ऋ०, १/३८/१

वर्णव्यत्ययत्वात् > कध < कथ < कथा (टाप् प्रत्ययः स्त्रियाम्)।

१. √कथ – वाक्यप्रबन्धने + अङ् प्रत्ययः (चिन्तिपूजिकथिकुम्बिचर्चश्च – अष्टा०, ३/३/१०५)।

२. किं + था प्रत्ययः > किं शब्दाद्धेतौ वर्तमानात् था प्रत्ययः (था हेतौ चेच्छन्दसि – अष्टा०, ५/३/२६), ततः किमः कादेशश्च (किमः कः – अष्टा०, ७/२/१०३) – कथेति।

३. (प्र०ब०व०) – (कध) कथा + √प्रीञ् – तर्पणे कान्तौ च + क्विप् प्रत्ययः > कधप्री + जस् बहुवचने > कधप्रियाः।

## कनकं

कन्यते दीप्यते काम्यतेऽभीप्स्यते वा तत् कनकं सुवर्णं वा। – उ०को०, २/३२

√कनी – दीप्तिकान्तिगतिषु + क्वुन् प्रत्ययः (क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२)।

## कनीनकः

यः कनति दीपयतीति स एव कनीनकः।

– यजु०, ४/३

कनति प्रकाशयते येन तत्। – यजु०, ४/३२

√कनी – दीप्तिकान्तिगतिषु + ईनकः प्रत्ययः बाहुलकात् अथवा √कनी धातोर्बाहुलकादौणादिक ईन प्रत्ययः ततः स्वार्थे कन् प्रत्ययः ।

## कन्तुः

**कामयन्ते यं स कन्तुः कामो वा ।**

– उ०को०, १/२७

**कामयते येन स कन्तुः कामश्चित्तं वा।**

– उ०को०, १/७३

१- √कमु – कान्तौ + कुः प्रत्ययः, धातोस्तुगागमः (अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च – उ०को०, १/२७)

२- √कमु – कान्तौ तुः प्रत्ययः (कमिमनिजनिगाभायाहिभ्यञ्च – उ०को०, १/७३) ।

## कन्दः

**कनति दीप्यतेऽसौ कन्दः सस्यमूलं सूकरो वा ।** – उ०को०, ४/९८

√कनी – दीप्तिकान्तिगतिषु + दन् प्रत्ययः बाहुलकात् (अब्दादयश्च – उ०को०, ४/९८) ।

## कन्दुः

**स्कन्दति गच्छति शुष्यति वा येन स कन्दुः।**

– उ०को०, १/१४

√स्कन्दिर् – गतिशोषणयोः + उः प्रत्ययः, धातोः सलोपः (स्कन्देः सलोपश्च – उ०को०, १/१४) ।

## कन्या

**कन्यते दीप्यते काम्यते गच्छति वा सा कन्या कुमारी वा ।** – उ०को०, ४/११२

√कनी – दीप्तिकान्तिगतिषु + यक् प्रत्ययः (अघ्न्यादयश्च – उ०को०, ४/११२), स्त्रियां टाप् प्रत्ययश्चेति ।

## कंसः

**कामयते परपदार्थान्निति कंसः तैजसद्रव्यं पात्रं तस्करो वा ।** – उ०को०, ३/६२

√कमु – कान्तौ + सः प्रत्ययः (वृतृवदिवचिवसिहनिकमिकषिभ्यः सः – उ०को०, ३/६२) ।

## कपटं

**कम्पते येन स कपटम् माया वा ।**

– उ०को०, ४/८१

√कपि – चलने + अटन् प्रत्ययः (शकादिभ्योऽटन् – उ०को०, ४/८१) ।

## कपालं

**कम्पते येन तत् कपालं नृशिरो घटखण्डो वा ।** – उ०को०, १/११८

√कपि – चलने + कालन् प्रत्ययः (तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् – उ०को०, १/११८) ।

## कपिः

**कम्पतेऽसौ कपिः वानरो वर्णभेदो वा।**

– उ०को०, ४/१४४

√कपि – चलने + इः प्रत्ययः (कुण्ठिकम्प्योर्नलोपश्च – उ०को०, ४/१४४) ।

## कपिलः

**कामयतेऽसौ कपिलः वर्णभेदो मुनिविशेषो वा ।** – उ०को०, १/५५

√कमु – कान्तौ + इलच् प्रत्ययः, धातोः मकारस्य पकारः (कमेः पश्च – उ०को०, १/५५) ।

## कपोतः

**कबते विचित्रवर्णो भवतीति कपोतः पक्षिभेदो वा ।** – उ०को०, १/६२

√कबृ – वर्णे + ओतच् प्रत्ययः बकारस्य पकारः (कबेरोतच् पश्च – उ०को०, १/६२) ।

## कपोलः

**कम्पते चलति स कपोलः वदनैकदेशो वा ।** – उ०को०, १/६६

✓कपि – चलने + ओलच् प्रत्ययः (कपिगडिगण्डि-कटिपटिभ्य ओलच् – उ०को०, १/६६)।

## कफेलूः

कफं श्लेष्माणं लात्याददातीति कफेलूः ओषधिविशेषो वा । – उ०को०, १/९३

कफ + ✓ला – आदाने + कू प्रत्ययः एकारान्तत्वं कफ शब्दस्य निपातनम् (अन्दूदृम्फूजम्बूकम्बूकफेलूक-र्कन्धूदिधिषूः – उ०को०, १/९३)।

## कबरः

कौत्युपदिशतीति कबरः पाठको वा ।

– उ०को०, ४/१५५

✓कु – शब्दे + अरन् प्रत्ययः ।

## कमठः

कामयतेऽसौ कमठः कच्छपो वा ।

– उ०को०, १/१००

✓कमु – कान्तौ + अरः प्रत्ययः (अर्त्तिकमिभ्रमि-चमिदेविवासिभ्यश्चित् – उ०को०, ३/१३२)।

## कमरः

कामयतेऽसौ कमरः कामुको वा ।

– उ०को०, ३/१३२

✓कमु – कान्तौ + अरः प्रत्ययः (अर्त्तिकमिभ्रमिचमिदे-विवासिभ्यश्चित् – उ०को०, ३/१३२)।

## कमलं

काम्यतेऽसौ कमलः कमलं पद्मं वा ।

काम्यतेऽसौ कमलम् पद्मं वा।–उ०को०, १/१०४

✓कमु – कान्तौ + कल प्रत्ययः, बाहुलकात् (कलस्तृपश्च – उ०को०, १/१०४)।

## कम्बलः

काम्यतेऽभीप्स्यते यः स कम्बलः ऊर्णा-विकार उदकं वा । -- उ०को०, १/१०७

✓कमु – कान्तौ + कल प्रत्ययः, बुगागमश्च (कमेर्बुक् – उ०को०, १/१०७)।

## कम्बूः

कामयते स कम्बूः परद्रव्यापहारी वा ।

– उ०को०, १/९३

✓कमु – कान्तौ + कूः प्रत्ययः (अन्दूदृम्फूजम्बू-कम्बूकफेलूकर्कन्धूदिधिषूः – उ०को०, १/९३) ततः धातोः बुगागमश्च (कमेर्बुक् – उ०को०, १/१०७)।

## कयस्य

चिकेति जानाति योद्धुं शत्रून्पराजेतुं यः स कयस्तस्य । – ऋ०, १/२७/८

(ष०ए०व०) १. ✓किती > क – सञ्ज्ञाने + ✓युधि > य – सम्प्रहारे ।

२. ✓किती – सञ्ज्ञाने + अच् प्रत्ययः ।

(एरच् – अष्टा०, ३/३/५६), ततः धातोः एत्वं, अयादेशत्वाच्चः 'कयः' ।

## करकः

करोतीति करकः वृष्टिपाषाणो वा ।

– उ०को०, ५/३५

✓डुकृञ-करणे – वुन् प्रत्ययः (कृञादिभ्यः संज्ञायां वुन् – उ०को०, ५/३५)।

## करञ्जं

यः किरति विक्षिपति धार्मिकांस्तम् ।

– ऋ०, १/५३/८

✓कृ – विक्षेपे + अञ्जन् प्रत्ययः औणादिकः ।

## करटः

किरति विक्षिपतीति करटः काको वा ।

– उ०को०, ४/८१

✓कृ – विक्षेपे + अटन् प्रत्ययः (शकादिभ्योऽटन् – उ०को० ४/८१)।

## करणं

क्रियन्ते यैस्तानि । – ऋ०, ४/१९/१०

कुर्वन्ति यैस्तानि साधनानि ।

– ऋ०, ५/३१/६

करोति येन तत् । – ऋ०, ५/३१/७
✓डुकृञ् – करणे + ल्युट् प्रत्ययः ।

## करण्डः

क्रियतेऽसौ करण्डः पुष्पभाण्डभेदः ।
– उ०को०, १/१२९
✓कृञ् – करणे + अण्डन् प्रत्ययः (अण्डन् कृसृभृवृञः – उ०को०, १/१२९) ।

## करभः

किरति विक्षिप्तीति करभः हस्तस्य बहिर्भागः उष्ट्रः बालो वा ।
– उ०को०, ३/१२२
✓कृ – विक्षेपे + अभच् प्रत्ययः (कृशृशलिकलिगर्दिभ्योऽभच् – उ०को०, ३/१२२) ।

## करम्बं

करोतीति करम्बं व्यामिश्रम् ।
– उ०को०, ४/८२
✓कृञ् – करणे + अम्बच् प्रत्ययः (कृकदिकडिकटिभ्योऽम्बच् – उ०को०, ४/८२) ।

## करीरः

किरतीति करीरः वृक्षभेदो वंशाङ्कुरो वा। – उ०को०, ४/३०
✓कृ – विक्षेपे + ईरन् प्रत्ययः (कृशृपृकटिपटिशौटिभ्य ईरन् – उ०को०, ४/३०) ।

## करीषः

कीर्यते विक्षिप्यते स करीषः शुष्कगोमयं वा । – उ०को०, ४/२६
✓कृ – विक्षेपे + ईषन् प्रत्ययः (कृतृभ्यामीषन् – उ०को०, ४/२६) ।

## करुणा

किरति विक्षिपति दुर्गणमिति करुणः वृक्षभेदो वा, करुणा कृपा वा ।
– उ०को०, ३/५३
✓कृ – विक्षेपे + उनन् प्रत्ययः (कृवृदारिभ्यः उनन् – उ०को०, ३/५३) ।

## करेणुः

करोतीति करेणुः हस्ती हस्तिनी वा ।
– उ०को०, २/१
✓कृञ् – करणे + एणुः प्रत्ययः (कृहृभ्यामेणुः – उ०को०, २/१) ।

## कर्कः

करोतीति कर्कः अग्निः शुक्लाश्वो दर्पणो घटो वा । – उ०को०, ३/४०
✓कृञ् – करणे यङ्लुगन्तात् द्वित्वं > कृ + कृ + कः प्रत्ययः (कृदाधारार्चिकलिभ्यः कः – उ०को०, ३/४०) ।

## कर्कटः

कर्कतीति कर्कटः जलजन्तुभेदो वा ।
– उ०को०, ४/८१
कर्क + अटन् प्रत्ययः (शकादिभ्योऽटन् – उ०को०, ४/८१) ।

## कर्कन्धुं

यः कर्कान् कारुकानन्तति व्यवहारे बध्नाति तम् । – ऋ०, १/११२/६
येन कर्म दधाति । – यजु०, १९/९१
ये कर्कं बदरीक्रियां दधति तैः ।
– यजु०, २१/३२
कर्कं कण्टकं दधाति धरतीति कर्कन्धूः वदरीफलं वा । – उ०को०, १/९३
कर्क + ✓डुधाञ् – धारणपोषणयोः + कूः प्रत्ययः (अन्दूदृम्फूजम्बूकम्बूकफेलूकर्कन्धूदिधिषूः – उ०को०, १/९३) निपातनात् नुमागमः प्रत्ययस्य ह्रस्वत्वमपि ।

## कर्करीकं

करोति कार्याणि येन तत् कर्करीकं शरीरं वा । – उ०को०, ४/२०

कर्क + ईकन् प्रत्ययः अभ्यासस्य रुगागमश्च (फर्फरीकादयश्च – उ०को०, ४/२०) ।

## कर्णः

किरती विक्षिपतीति कर्णः श्रोत्रं क्षत्रियविशेषो वा । – उ०को०, ३/१०

✓कृ – विक्षेपे + नक् प्रत्ययः (कृवृजृसिद्रूपन्यनिस्वपिभ्यो नित् – उ०को०, ३/१०) ।

## कर्दमः

कर्दति कुत्सितं शब्दयतीति कर्दमः पापं वा। – उ०को०, ४/८४

✓कर्द – कुत्सिते शब्दे + अमः प्रत्ययः (कलिकर्द्योरमः – उ०को०, ४/८४) ।

## कर्पटः

कर्पतीति कर्पटः छिन्नं पुराणं वस्त्रं वा । – उ०को०, ४/८१

✓कृप – दौर्बल्ये + अटन् प्रत्ययः (शकादिभ्योऽटन् – उ०को०, ४/८१) ।

## कर्पासः

क्रियते उत्पाद्यतेऽसौ कर्पासः सस्यभेदो वा। – उ०को०, ५/४५

✓कृञ् – करणे + पासः प्रत्ययः (कृञ् पासः – उ०को०, ५/४५) ।

## कर्पूरः

कल्पते समर्थो भवतीति कर्पूरः सुगन्धिद्रव्यं वा । – उ०को०, ४/९०

✓कृपू – सामर्थ्ये + ऊरः प्रत्ययः (खर्जिपिञ्जादिभ्य ऊरोलचौ – उ०को०, ४/९०) ।

## कर्बुरः

कबते वर्णविशेषो भवतीति स कर्बुरः श्वेतो दुष्टो वा । – उ०को०, १/४१

✓कबृ – वर्णे + उरच् प्रत्ययः (मद्गुरादयश्च – उ०को०, १/४१) ।

## कर्म

क्रियते तत् कर्म क्रिया वा । – उ०को०, ४/१४५

✓डुकृञ् – करणे + मनिन् प्रत्ययः (सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५) ।

## कर्मकृतः

ये कर्माणि कुर्वन्ति ते । – यजु०, ३/४७

(प्र०ब०व०) कर्म + ✓डुकृञ् – करणे + क्विप् प्रत्ययः तुगागमश्च ।

## कर्वः

किरति विक्षिपति चित्तमिति कर्वः कामो वा । – उ०को०, १/१५५

✓कृ– विक्षेपे + वः प्रत्ययः (कृवृशदृश्यो वः – उ०को०, १/१५५) ।

## कर्वरः

किरति विक्षिपतीति कर्वरः व्याघ्रो दुष्टो वा । – उ०को०, २/१२१

✓कृ – विक्षेपे + ष्वरच् प्रत्ययः (कृगृशृवृञ्चतिभ्यः ष्वरच् – उ०को०, २/१२१) ।

## कर्षूः

कर्षत्याकर्षति पदार्थानिति कर्षूः शुष्कगोमयोऽग्निनदी वा । – उ०को०, १/८०

✓कृष – विलेखने + ऊः प्रत्ययः (कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः स्त्रियाम् – उ०को०, १/८०)।

## कलत्रं

गडति सिञ्चतीति कडत्रं, कलत्रं कटिभागो भार्या वा ।

– उ०को०, ३/१०६

✓गड – सेचने + अत्रन् प्रत्ययः धातोः गस्य कः (गडेरादेश्च कः – उ०को०, ३/१०६) > कडत्रं, बाहुलकात् डस्य लत्वात् कलत्रम् ।

## कलभः

कलते संख्यां करोतीति स कलभः करिशावको वा । – उ०को०, ३/१२२

✓कल – गतौ संख्याने च + अभच् प्रत्ययः (कृशृशलिकलिगर्दिभ्योऽभच् – उ०को०, ३/१२२)।

## कलमः

कलते सङ्ख्यातीति कलमः शालिभेदो वा । – उ०को०, ४/८४

✓कल – गतौ संख्याने च + अमः प्रत्ययः (कलिकर्द्योरमः – उ०को०, ४/८४) ।

## कलापकः

कलामंशं पाति रक्षतीति कलापकः चन्द्रमा वा । – उ०को०, २/३२

कला (मात्रां संख्यां वा) + ✓पा – रक्षणे + क्वुन् प्रत्ययः (क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२) ।

## कलिं

यः किरति विक्षिपति, दुःखानि दूरीकरोति तं सद्वैद्यं गणकं वा । – ऋ०, १/११२/१५

कलन्ते स्पर्द्धमाना भाषन्ते यत्र स कलिः कलहो विग्रहो वा । – उ०को०, ४/११८

१. ✓कृ – विक्षेपे + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) धातोः रकारस्य लत्वञ्च।

२. ✓कल – शब्दसंज्ञाने + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

## कलिलं

कलति सङ्ख्याति तत् कलिलं मिश्रं दुःखेन साध्यं गहनमिति वा ।

– उ०को०, १/५४

✓कल – गतौ संख्याने च + इलच् प्रत्ययः (सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डि-कुकिभूभ्य इलच् – उ०को०, १/५४) ।

## कलुषं

कलते शब्दयतीति कलुषं पापं वा ।

– उ०को०, ४/७५

✓कल – शब्दसंख्यानयोः + उषच् प्रत्ययः (पॄनहिकलिभ्य उषच् – उ०को०, ४/७५) ।

## कल्कः

कलते शब्दयतीति कल्कं दम्भः किल्विषं वा । – उ०को०, ३/४०

✓कल – शब्दसंख्यानयोः + कः प्रत्ययः (कृदाधाराचिकलिभ्यः कः – उ०को०, ३/४०) ।

## कवसः

कौति वा कवत इति कवसः कण्टकजातिर्वा । – उ०को०, ४/२

✓कु – शब्दे + अस् प्रत्ययः (ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कलिच्चयतुजलिजिष्णुजिष्ठ-जिसनस्यनिथिन्नुल्यसासानुकः – उ०को०, ४/२) ।

## कविः

सर्वज्ञ, क्रान्तप्रज्ञ, कविं क्रान्तदर्शनं भौतिकं वा । – यजु०, २/४

क्रान्तप्रज्ञः क्रान्तदर्शनो वा । – यजु०, ५/३२

क्रान्तदर्शनम् । – यजु०, ७/२४

यः कौति शब्दयति सर्वा विद्याः स कविरीश्वरः। – स० प्र० (*प्रथमसमुल्लासः*)

कौति शब्दयत्युपदिशति स कविः मेधावी

विद्वान् क्रान्तदर्शनो वा ।
– उ०को०, ४/१३९

कु – शब्दे गत्यर्थे च + इः प्रत्ययः (अचः इः – उ०को०, ४/१३९) ।

## कविक्रतुः

कविः सर्वज्ञः क्रान्तदर्शनो वा । करोति यो येन वा स क्रतुः, कविश्चासौ क्रतुश्च सः । – ऋ०, १/१/५

कवि + √कृञ् – करणे + कतुः प्रत्ययः (कृञः कतुः – उ०को०, १/७६) ।

## कव्यवाहन

कुर्वन्ति शब्दयन्ति सर्वा विद्या ये ते कवचः क्रान्तदर्शनाः क्रान्तप्रज्ञाश्च, तेभ्यो हितानि कर्माणि कव्यानि, तानि यो वहति प्रापयति तस्मै । – यजु०, २/२९

यः कविषु साधूनि वस्तूनि वहति प्रापयति तत्सम्बुद्धौ । – यजु०, १९/६४

कवि प्रातिपदिकः साध्वर्थे हितार्थे वा – यत् प्रत्ययः > कव्य + √वह – प्रापणे + ञ्युट् प्रत्ययः (कव्यपुरीपुरीष्येषु ञ्युट् – अष्टा०, ३/२/६५), उत्तरपदे ञित्वाद् वृद्धिश्च ।

## कशेरुः

कष्टे शास्ति स कशेरुः तृणकन्दं वा ।
– उ०को०, १/८८

कं (जलं वातं वा) + √शृ – हिंसायां + ऊः प्रत्ययः धातोः एरङादेशः (के श्र एरङ् चास्य – उ०को०, १/८८) ।

## कशोजुवं

कशांस्युदकानि जवयति गमयति तम्।
– ऋ०, १/११२/१४

√कश – गतिशासनयोः + अच् प्रत्ययः (नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः – अष्टा०, ३/१/१३४) > कशः + √जु – गतौ + क्विप् प्रत्ययः (अन्येभ्योऽपि दृश्यते – अष्टा०, ३/१/१७८) ।

## कश्मलं

कष्टे गच्छति शास्ति वा स कश्मलं पापं वा । – उ०को०, १/१०९

√कश – गतिशासनयोः + कल प्रत्ययः मुडागमश्च (कुटिकशिकौतिभ्यो मुट् च – उ०को०, १/१०९)।

## कश्मीरः

कष्टे गच्छति शास्ति वाऽसौ कश्मीरः देश भेदो वा । – उ०को०, ४/३२

√कश – गतिशासनयोः + ईरन् प्रत्ययः मुडागमश्च (कशेर्मुट् च – उ०को०, ४/३२) ।

## कश्यः

कष्टे गच्छति शास्ति वा स कश्यः मद्यं वा। – उ०को०, ४/११२

√कश – गतिशासनयोः + यक् प्रत्ययः (अघ्न्यादयश्च – उ०को०, ४/११२) ।

## कुषाकुः

कुषति निष्कर्षतीति कुषाकुः अग्निः सूर्यो वा । – उ०को०, ३/७७

√कुष – निष्कर्षे + काकुः प्रत्ययः (कठिकुषिभ्यां काकुः – उ०को०, ३/७७) ।

## कषिः

कषति हिनस्तीति कषिः हिंसको वा ।
– उ०को०, ४/१४०

√कष – हिंसार्थे + इः प्रत्ययः (खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च – उ०को०, ४/१४०)।

## कषीका

कषति हिनस्तीति कषीका, पक्षिजातिर्वा।
– उ०को०, ४/१६

√कष – हिंसार्थे + ईकन् प्रत्ययः (कषिदूषिभ्यामीकन् – उ०को०, ४/१६) । ततः स्त्रियां टाप् प्रत्ययश्चेति।

## कस्तूरः

कस्ते गच्छति प्राप्नोति शास्ति वा स कस्तूरः। स्त्रियां कस्तूरी प्रसिद्धा सुगन्धिभेदः ।

– उ०को०, ४/९०

✓कस – गतिशासनयोः + ऊरः प्रत्ययः ( खर्जिपिञ्जादिभ्य ऊरोलचौ – उ०को०, ४/९० ) तुडागमश्चेति ।

## काकः

कायति शब्दयतीति काकः वायसो वा।

– उ०को०, ३/४३

✓कै – शब्दे + कन् प्रत्ययः ( इणभीकापाशल्यतिमर्चिभ्यः कन् – उ०को०, ३/४३ ) ततः उपदेशे ऐचः आत्वं भवति शिति प्रत्ययाभावे ( आदेच उपदेशेऽशिति – अष्टा०, ६/१/४४ ) ।

## काकुः

कक्यते लोलश्चञ्चलो भवति येनेति काकुः भयादिः ध्वनेर्विकारो वा ।

– उ०को०, १/१

✓ककि – लौल्ये + उण् प्रत्ययः बाहुलकात् ( कृवापाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१ ) ।

## काटे

कटन्ति कर्षन्ति सकला विद्या यस्मिन्नध्यापने व्यवहारे तस्मिन् ।

– ऋ०, १/१०६/६

( स०ए०व० ) – ✓कटे – वर्षावरणयोः + घञ् प्रत्ययः ( हलश्च – अष्टा०, ३/३/१२१ ) ।

## काणूकः

कणति शब्दयतीति काणूकः काको वा।

– उ०को०, ४/३९

✓कण – शब्दार्थे + ऊकण प्रत्ययः ( मृकणिभ्यामूकोकणौ – उ०को०, ४/३९ ) ।

## काण्डं

काम्यते जनैस्तत् काण्डं ग्रन्थैकदेशः परिमाणविशेषो वाणोऽवसरो वा ।

– उ०को०, १/११५

✓कमु – कान्तौ + ड प्रत्ययः ( क्वादिभ्यः कित् – उ०को०, १/११५ ) धातोः वृद्धिश्च ।

## कादम्बः

कदति विकलो भवतीति कादम्बः पक्षिभेदो वा । – उ०को०, ४/८३

✓कद – वैक्लव्ये + अम्बच् प्रत्ययः धातोः दीर्घत्वं ( कदेर्णित् पक्षिणि – उ०को०, ४/८३ ) ।

## कामः

काम्यत इष्यते सर्वैर्जनैस्तम् ।

– ऋ०, १/१७/९

कामयते असौ तत्सम्बुद्धौ । – यजु०, ७/४८

यः काम्यते सः । – यजु०, १२/११७

काम्यते येन यस्मिन् वा । – यजु०, १८/८

✓कमु – कान्तौ + घञ् प्रत्ययः, आद्युदात्तत्वं ( वृषादीनां च – अष्टा०, ६/१/२०३ ) ।

## कामदुघाः

याः कामान् दुहन्ति प्रपिपुरति ताः ।

– यजु०, १७/३

( प्र०ब०व० ) काम + ✓दुह – प्रपूरणे + कप् प्रत्ययः, दुह धातोः घादेशः ( दुहः कब् घश्च – अष्टा०, ३/२/७० ) ततः स्त्रियां टाप् ।

## कामप्रेणा

यत्कामं प्राति पिपर्ति तेनेव ।

– ऋ०, १/२२/१५८

( तृ०ए०व० ) काम + ✓प्रा – प्रपूरणे + कः प्रत्ययः ( आतोऽनुपसर्गे कः – अष्टा०, ३/२/३ ) ।

## काम्पीलवासिनीं

कं सुखं पीलति बध्नाति गृह्णाति इति काम्पीलः तं वासयितुं शीलमस्यास्तां लक्ष्मीम् । – यजु०, २३/१८

कं (सुखं) + √पील – प्रतिष्टम्भे + अण् प्रत्ययः स्वार्थे > काम्पीलः + √वस – निवासे + णिनि प्रत्ययः, स्त्रियां ङीप् ।

## काम्याः

काम्यन्त इष्यन्ते ये पदार्थास्ते ।

– यजु०, ३/२७

(प्र०ब०व०) – √कमु – कान्तौ + ण्यत् प्रत्ययः धातो आकारत्वञ्च ।

## काराधुनिः

कारान् शब्दान् धूनयतीव ।

– ऋ०, १/१८०/८

√कृञ् – करणे + घञ् प्रत्ययः > कारः + √धुञ् – कम्पने + निः प्रत्ययः बाहुलकात् (वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् – उ०को०, ४/५१) ।

## कारिः

करोतीति कारिः शिल्पी ।

– उ०को०, ४/१२९

√कृञ् – करणे + इञ् प्रत्ययः धातोः वृद्धिश्च (कृञ उदीचां कारुषु – उ०को०, ४/१२९) ।

## कारुः

ये कार्याणि कुर्वन्ति ते । – ऋ०, १/११/६

य उत्साहेनोत्तमानि कर्माणि करोति तम्।

– ऋ०, १/३१/८

करोतीति कारुः कर्त्ता शिल्पी वा ।

– उ०को०, १/१

√कृञ् – करणे + उण् प्रत्ययः धातोः दीर्घश्च (कृवापाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१) ।

## कारुधायाः

यः कारून् शिल्पीन् दधाति सः ।

– ऋ०, ३/३२/१०

कारूणां विदुषां धर्त्तः । – ऋ०, ६/२१/८

कारवो ध्रियन्ते येन सः । – ऋ०, ६/२४/२

विदुषां शिल्पिनां धारयिता। – ऋ०, ६/४४/१२

कारूणां शिल्पिनां धारकः ।

– ऋ०, ६/४४/१५

कारु + √डुधाञ् – धारणपोषणयोः + असुन् प्रत्ययः (वहिहाधाञ्भ्यश्छन्दसि – उ०को०, ४/२२१) णितोऽनुवृत्तिकरः युगागमश्च (आतो युक् चिण्यतोः – अष्टा०, ७/३/३३) ।

## कार्षकः

कृषतीति कार्षकः कृषकः वा कृषीबलः।

– उ०को०, २/३८

√कृष – विलेखने + क्वुन् प्रत्ययः धातोः वृद्धिश्च (कृषेर्वृद्धिश्चोदीचाम् – उ०को०, २/३८) ।

## कार्षिः

कर्षति हलेन भूमिमिति । – यजु०, ६/२८

कर्षत्याकर्षतीति कार्षिः अग्निर्वा ।

– उ०को०, ४/१२७

√कृष – विलेखने + इञ् प्रत्ययः, वृद्धिश्च (कृषेर्वृद्धिश्छन्दसि – उ०को०, ४/१२७) ।

## कालः

कलयति संख्याति सर्वान् पदार्थान् स कालः । – स० प्र० (प्रथमसमुल्लासः)

√कल – गतौ संख्याने च + घञ् प्रत्ययः (वृषादीनां च – अष्टा०, ६/१/२०३) ।

## कालाग्निः

योऽग्निरिव कालः कलयिता प्रलयकर्त्ता स कालाग्निरीश्वरः । –स०प्र० समु०

कालः – व्याख्यातः, अग्निश्च व्याख्यातः।

## काशिः

काश्यते दीप्यतेऽसौ काशिः देशभेदो वा।

– उ०को०, ४/११८

✓काशृ – दीप्तौ + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८)।

## काशूः

कष्टे गच्छति शास्ति वेति काशूः।

– उ०को०, १/८५

✓कश – गतिशासनयोः + ऊ प्रत्ययः दीर्घश्च (णित्कशिपद्यर्त्तेः – उ०को०, १/८५)।

## काष्ठं

काश्यन्ते प्रकाश्यन्ते यासु ता दिशः।

– ऋ०, १/३२/१०

काशते दीप्यते तत् काष्ठं इन्धनं स्थानं कालमानं वा। काष्ठा दिक् दारुहरिद्रा वा। – उ०को०, २/२

✓काशृ – दीप्तौ + क्थन् प्रत्ययः (हनिकुषिनीरमिकाशिभ्यः क्थन् – उ०को०, २/२)।

## कासारः

कासते शब्दयति निन्दति वा स कासारः सरो वा। – उ०को०, ३/१३९

✓कासृ – शब्दकुत्सायां + आरन् प्रत्ययः (तुषारादयश्च – उ०को०, ३/१३९)।

## किकिदीवि

किं किं ज्ञानं दीव्यति ददाति यस्तेन।

– यजु०, २२/७७

किकिना शब्देन दीव्यतीति किकीदिविः चाषो वा। – उ०को०, ४/५६

✓ककि – गत्यर्थे + इन् प्रत्ययः पृषोदरादिना इत्वं > किकि अथवा ✓कि – ज्ञाने द्वित्वात् किकि + ✓दिवु – क्रीडाविजिगीषादिषु + क्विन् प्रत्ययः (कृविघृष्विछविस्थ विकिकीदिवि – उ०को०, ४/५६)।

## किङ्कणीका

किं पुनः पुनः कणति शब्दयतीति कङ्कणीका वाद्यसाधनविशेषो वा। किङ्किणीका क्षुद्रघण्टिका।

– उ०को०, ४/१८

किं + ✓कण – शब्दार्थे + ईकन् प्रत्ययः (चङ्कणः कङ्कण च – उ०को० ४/१८)।

## किम्

कायति शब्दतीति किम् प्रश्नाद्यर्थे वा।

– उ०को०, ४/१५८

✓कु – शब्दे + डिमि प्रत्ययः (कायतेर्डिमिः – उ०को०, ४/१५८)।

## किम्मयः

यः किं मिनोति सः। – ऋ०, ४/३५/४

किं + ✓डुमिञ् – प्रक्षेपणे + अच् प्रत्ययः।

## कियेधाः

यः कियतो धरति सः। – ऋ०, १/६१/६

किं (परिमाण) – वतुप् प्रत्ययः (यत्तदेतेभ्यः परिमाणे वतुप् – अष्टा०, ५/२/३९) वतुपः वस्य घादेशश्च (किमिदंश्यां वो घः – अष्टा०, ५/२/४०), घस्येयादेशत्वात् > कियत् + ✓डुधाञ् – धारणपोषणयोः + अच् प्रत्ययः, पृषोदरादित्वात् पूर्वपदस्य किये भावः अर्थात् तस्य स्थाने इकारत्वमिति।

## किरणः

किरति विक्षिपत्यन्धकारमिति किरणः।

– उ०को०, २/८१

✓कृ – विक्षेपे + क्युः प्रत्ययः (कृपृवृजिमन्दिनिधाञः क्युः – उ०को०, २/८१)।

## किरिः

**किरतीति किरिः वराहो वा ।**

**– उ०को०, ४/१४३**

✓कृ – विक्षेपे + इः प्रत्ययः (कृगृशृपृकुटिभिदिछिदिभ्यश्च – उ०को०, ४/१४३) ।

## किरीटं

**किरति विक्षिपतीति किरीटं मुकुटं शिरोवेष्टनं वा । – उ०को०, ४/१८५**

✓कृ – विक्षेपे + कीटन् प्रत्ययः (कृपृकृपिभ्यः कीटन् – उ०को०, ४/१८५) ।

## किल्विषं

**किलति क्रीडति विचारशून्यतया कार्येषु प्रवर्त्तते येन तत् किल्विषं पापम् ।**

**– उ०को०, १/५०**

✓किल – श्वैत्यक्रीडनयोः + टिषच् प्रत्ययः धातोः वुगागमश्च (किलेर्वुक् च – उ०को०, १/५०) ।

## किशोरः

**किं शृणाति हिनस्तीति किशोरः अश्वशावको वा । – उ०को०, १/६५**

१. किं + ✓शृ – हिंसायां + ओरन् प्रत्ययः (किशोरादयश्च – उ०को०, १/६५) किमोः मलोपः तथा च शृ धातोः टिलोपत्वं निपातनात् ।

२. ✓कश – गतिशासनयोः शब्दे च + ओरन् प्रत्ययः (किशोरादयश्च – उ०को०, १/६५), धातोरिडागमश्च ।

## कीकसं

**कङ्कते चञ्चलं भवतीति कीकसं अस्थि वा । – उ०को०, ३/११७**

१. ✓ककि – गतौ + असच् प्रत्ययः (अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् – उ०को०, ३/११७), धातोः कीकादेशश्च ।

२. की (कुत्सायां) + ✓कस – गतौ + अच् प्रत्ययः।

## कीचकः

**चीकयते सहतेऽसौ कीचकः वंशभेदो वा। – उ०को०, ५/३६**

१. की (कुत्सार्थे) + ✓चक – तृप्तौ प्रतिघाते च + अच् प्रत्ययः ।

२. ✓चीक – आमर्षणे + वुन् प्रत्ययः (चीकयतेराद्यन्तविपर्ययश्च – उ०को०, ५/३६) आद्यन्त विपर्ययात् कीचकः ।

## कीनाशः

**क्लिश्नातीति कीनाशः कृषीबलो न्यायाधीशो वा । – उ०को०, ५/५६**

१. ✓क्लशू – बिबाधने + कन् प्रत्ययः उपधाया ईत्वं लकारलोपः नामागमश्च (क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च – उ०को०, ५/५६) ।

२. की (कुत्सितार्थे) + ✓णश् – अदर्शने + अच् प्रत्ययः ।

## कीरेः

**किरति विविधतया वाचा प्रेरयतीति कीरिः स्तोता तस्मात् । – ऋ०, १/३१/१३**

(पं०ए०ब०) – ✓कृ – विक्षेपे + इः प्रत्ययः (कृगृशृपृकुटिभिदिछिदिभ्यश्च – उ०को०, ४/१४३) दीर्घः बाहुलकात् ।

## कीर्त्तिः

**कीर्त्यते संशब्द्यते सा कीर्त्तिः पुण्यं यशो वा। – उ०को०, ४/११९**

✓कृत – संशब्दने + इन् प्रत्ययः (हृपिषिरुहिवृतिविदिछिदिकीर्त्तिभ्यश्च – उ०को०, ४/११९) ।

## कुक्कुरः

**कोकत आदत्ते परपदार्थमिति कुक्कुरः श्वा वा । – उ०को०, १/४१**

✓कुक – आदाने + उरच् प्रत्ययः (मद्गुरादयश्च – उ०को०, १/४१) पक्षान्तरे कुगागमश्च निपातनात्।

## कुक्कुटः

कुकं परद्रव्यादातारं चोरं शत्रुं वा कुटति येन स यज्ञः । – यजु०, १/१६

कुक + ✓कुट – कौटिल्ये + क्विप् प्रत्ययः बाहुलकात्।

## कुक्षः

कुष्णाति निष्कर्षतीति कुक्षः जठरस्थानं वा । – उ०को०, ३/६८

✓कुष – निष्कर्षे + सः प्रत्ययः (उन्दिगुधिकुषेभ्यश्च – उ०को०, ३/६८) धातोः षकारस्य ककारत्वं (षढोः कः सि – अष्टा०, ८/२/४१) ।

## कुक्षिः

कुष्णाति निष्कर्षति सर्वपदार्थेभ्यो रसं यः । – ऋ०, १/८/७

कुष्णाति निष्कृषतीति कुक्षिः जठरं गर्भाशयो वा । – उ०को०, ३/१५५

✓कुष – निष्कर्षे + क्सिः प्रत्ययः (प्लुषिकुषिशुषिभ्यः क्सिः – उ०को०, ३/१५५) ।

## कुचरः

यः कुत्सितं चरति सः । – ऋ०, १/१५४/२

यः कुत्सितं प्राणबधं चरति ।

– यजु०, ५/२०

यः कुत्सितां गतिं चरति सः ।

– यजु०, १८/७१

कु (कुत्सितार्थे) + ✓चर – गतौ + टः प्रत्ययः (चरेष्टः – अष्टा०, ३/२/१६) ।

## कुचितं

कोचति शब्दतारं करोतीति कुचितं परिमितं वा । – उ०को०, ४/१८६

✓कुच – शब्दतारे + कितच् प्रत्ययः (रुचिवचिकुचिकुटिभ्यः कितच् – उ०को०, ४/१८६) ।

## कुटरुः

कुटतीति कुटरुः वस्त्रगृहं वा ।

– उ०को०, ४/८०

✓कुट – कौटिल्ये + अरुः प्रत्ययः (कुटः किश्च – उ०को०, ४/८०) ।

## कुटिः

कुटतीति कुटिः कुटी शाला वा ।

– उ०को०, ४/१४३

✓कुट – कौटिल्ये + इः प्रत्ययः (कृगृशृपृकुटिभिदिछिदिभ्यश्च – उ०को०, ४/१४३) ।

## कुटितं

कुटतीति कुटितं कुटिलं वा ।

– उ०को०, ४/१८६

✓कुट – कौटिल्ये + कितच् प्रत्ययः (रुचिवचिकुचिकुटिभ्यः कितच् – उ०को०, ४/१८६) ।

## कुटिलः

कुटति कौटिल्यं करोति स कुटिलः क्रूरकर्मा वा । – उ०को०, १/५४

✓कुट – कौटिल्ये + इलच् प्रत्ययः (सलिलकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् – उ०को०, १/५४) ।

## कुटीरः

कुटतीति कुटीरः अल्पा कुटी वा ।

– उ०को०, ४/३०

✓कुट – कौटिल्ये + ईरन् प्रत्ययः (कृशृपृकटिपटिशौटिभ्य ईरन् – उ०को०, ४/३०) ।

## कुट्मलः

कुटतीति कुट्मलः । – उ०को०, १/१०९

✓कुट – कौटिल्ये + कलः प्रत्ययः, धातोः मुडागमश्च (कुटिकशिकौतिभ्यो मुट् च – उ०को०, १/१०९)।

## कुठेरः

कुठेरः अपि कृच्छ्रजीवी पर्णाशो वा ।

– उ०को०, १/५८

√कुठ - प्रतायने + एरक् प्रत्ययः (पतिकठिकुठिग-डिगुडिदंशिभ्य एरक् - उ०को०, १/५८)।

## कुड्मलः

कुण्डति दहतीति कुड्मलः किंचिद्विक-सितपुष्पनाम्नी वा । - उ०को०, १/१०९
कुटतीति कुड्मलं मुकुलमिति ।
- उ०को०, ४/१८७

१. √कुडि – दाहे + कल प्रत्ययः मुडागमश्च (बाहुलकात् मुडागमश्च – उ०को०, १/१०९)।

२. √कुठ – प्रतापने + क्मलन् प्रत्ययः (कुटिकुषिभ्यां क्मलन् – उ०को०, ४/१८७)।

## कुड्यं

कौति शब्दयतीति कुड्यं भित्तिर्वा ।
- उ०को०, ४/११२

√कु – शब्दे + यक् प्रत्ययः (अघ्न्यादयश्च – उ०को०, ४/११२), डुगागमश्चेति ।

## कुणपः

क्वणति शब्दं करोतीति कुणपः शवो मृद्भेदो वा । - उ०को०, ३/१४३

√क्वण – शब्दार्थः + कपन् प्रत्ययः, धातोः सम्प्रसारणञ्चात्र (क्वणेः सम्प्रसारणञ्च – उ०को०, ३/१४३)।

## कुणालः

क्वणति शब्दं करोतीति कुणालः देशभेदो वा । - उ०को०, ३/७६

√क्वण – शब्दार्थः + कालन् प्रत्ययः धातोः सम्प्रसारणञ्च (पीयुक्वणिभ्यां कालन् ह्रस्वं सम्प्रसारणञ्च – उ०को०, ३/७६)।

## कुणिन्दः

कुण्यते शब्द्यतेऽसौ कुणिन्दः शब्दो वा।
- उ०को०, ४/८५

√क्वण – शब्दार्थः + किन्दच् प्रत्ययः (कुणिपुल्योः किन्दच् – उ०को०, ४/८५)।

## कुण्डं

कुणति शब्दयत्युपकरोति वा स कुण्डः पत्यौ जीवति पुरुषान्तरादुत्पन्नः पुत्रो जलाधारविशेषो वा । - उ०को०, १/११५

√कुण – शब्दोपकारयोः + डः प्रत्ययः कित्वात् (क्वादिभ्यः कित् – उ०को०, १/११५)।

## कुण्डलं

कुण्डति दहतीति कुण्डलं वलयं पाशं कर्णभूषणं वा । - उ०को०, १/१०४

√कुडि – दाहे + कल प्रत्ययः बाहुलकात् (कलस्तृपश्च – उ०को०, १/१०४) नुमागमश्च ।

## कुण्डिनः

कुण्डते दहतीति कुण्डिनः ऋषिर्वा ।
- उ०को०, २/४९

√कुडि – दाहे + इनच् प्रत्ययः (बहुलमन्यत्रापि – उ०को०, २/४९) नुमागमश्च ।

## कुण्ड्टणाच्या

यया कुटिलां गतिमञ्चति प्राप्नोति तया।
- ऋ०, १/२९/६

(तृ०ए०व०) – √कुडि – दाहे + ल्युट् प्रत्ययः नुमागमश्चेति > कुण्डन, डकारं ऋकारत्वमपि ततः णत्वञ्च (ऋवर्णाच्चेति वक्तव्यं – अष्टा०वा०, ३/२/५९) > कुण्ड्टण + √अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिग- ञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९) स्त्रियां ङीप् प्रत्ययः ।

## कुन्तिः

कामयतेऽसौ कुन्तिः, स्त्रियां कुन्ती ।
- उ०को०, ३/५०

√कमु – कान्तौ + उन्तिः प्रत्ययः बाहुलकात् धातोः कुरादेशः प्रत्ययस्यादि लोपश्च (युगे झिच् – उ०को०, ३/५०)।

## कुन्दः

**कौति शब्दयतीति कुन्दः पुष्पजातिर्वा ।**
**– उ०को०, ४/९८**

✓कु – शब्दे + दन् प्रत्ययः धातोः नुमागमश्च (अब्दादयश्च – उ०को०, ४/९८) ।

## कुपिन्दः

**कुप्यति क्रुद्धो भवति स कुविन्दः कुपिन्दः तन्तुवायो वा । – उ०को०, ४/८६**

✓कुप – क्रोधे + किन्दच् प्रत्ययः (कुपेर्वा वश्च – उ०को०, ४/८६) ।

## कुबेरः

**कुम्बति स्वव्याप्त्याच्छादयति कुबेरः ।**
*– स०प्र० (प्रथमसमुल्लासः)*

**कुम्बत्यन्यानाऽऽच्छादयतीति कुबेरः धनाध्यक्षो विद्वान् वा । – उ०को०, १/५९**

✓कुबि – आच्छादने + एरक् प्रत्ययः (कुम्बेर्नलोपश्च – उ०को०, १/५९) ।

## कुब्रः

**कुम्बत्याच्छादयतीति कुब्रं अरण्यं वा ।**
**– उ०को०, २/२८**

✓कुबि – आच्छादने + रन् प्रत्ययः (ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः – उ०को०, २/२८) ।

## कुमारः

**कामयते भोगानिति कुमारः शिशुर्युवराजो वा । – उ०को०, ३/१३८**

१. ✓कमु – कान्तौ + आरन् प्रत्ययः धातोः उपधायाः उत्वं (कमेः किदुच्चोपधायाः – उ०को०, ३/१३८)।
२. ✓कुमार – क्रीडायां + अच् प्रत्ययः ।

## कुमारयुः

**कुमारावस्थां यातीति कुमारयुः राजपुत्रो वा। – उ०को०, १/३७**

कुमार + ✓या – प्रापणे + कुः प्रत्ययः (मृगय्वादयश्च – उ०को०, १/३७) ।

## कुरङ्गः

**किरति विक्षिपतीति कुरङ्गः हरिणो वा।**
**– उ०को० १/१२१**

कॄ – विक्षेपे + अङ्गच् प्रत्ययः बाहुलकात् ऋकारस्योत्वं रपरत्वञ्चेति (विडादिभ्यः कित् – उ०को०, १/१२१) ।

## कुररः

**कौति शब्दयतीति कुररः पक्षिभेदो वा ।**
**– उ०को०, ३/१३३**

✓कु – शब्दे + क्ररन् प्रत्ययः (कुवः क्ररन् – उ०को०, ३/१३३) ।

## कुरीरं

**क्रियते तत् कुरीरं मैथुनं वा ।**
**– उ०को०, ४/३३**

✓कृञ् – करणे + इरन् प्रत्ययः, धातोः उकारादेशः (कृञ उच्च – उ०को०, ४/३३) ।

## कुरुः

**यः करोति येन वा स कुरुः कुरवो राजानो वा । – उ०को०, १/२४**

✓कृञ् – करणे + कुः प्रत्ययः, धातोः उकारादेशः (कृग्रोरुच्च – उ०को०, १/२४) ।

## कुरुपिशङ्गिला

**कुरोः कृतस्य कृष्यादेः पिशान्यङ्गानि गिलति । – यजु०, २३/५६**

कुरु + ✓पिश – अवयवे + कः प्रत्ययः (इगुपधज्ञाप्रीकिरः कः – अष्टा०, ३/१/१३५) >
कुरुपिश + ✓गिल – भक्षणे सौत्र धातुः, धातोः पूर्वं मुमागमश्चेति 'गिलेऽगिलस्य' इत्यनेन वार्तिकेण।

## कुलालः

कोलति सङ्घातयतीति कुलालः कुम्भकारो वा । – उ०को०, १/११८

✓कुल – संस्त्यानेबन्धुषु + कालन् प्रत्ययः (तमिविशिविडिमृणिकुलिकपिपलिपञ्चभ्यः कालन् – उ०को०, १/११८) ।

## कुलीरः

क्रियते तत् कुरीरं मैथुनं वा, लत्वे कुलीरः जलजन्तुभेदो वा । – उ०को०, ४/३३

✓कृञ् – हिंसायां + ईरन् प्रत्ययः धातोः उत्त्वं (कृञ् उच्च – उ०को०, ४/३३) रलयोरभेदत्वात् लत्वं – कुलीरः ।

## कुलुञ्चानां

ये कुशीलेन लुञ्चन्ति अपनयन्ति परपदार्थांस्तेषाम् । – यजु०, १६/२२

(ष०ब०व०) – कु (कुत्सितार्थे) + ✓लुञ्च – अपनयने + अण् प्रत्ययः ।

## कुल्मलं

कुष्णातीति कुल्मलं पापं वा।

– उ०को०, ४/१८८

✓कुष – निष्कर्षे + क्मलन् प्रत्ययः धातोः षकारस्य लकारत्वं (कुषेर्लश्च – उ०को०, ४/१८८) ।

## कुवित्सस्य

यः कुविन्महत्सनति विभजति तस्य ।

– ऋ०, ६/४५/२४

(ष०ए०व०) ✓कु – शब्दे + ✓विद् – विचारणे ज्ञाने, लाभे सत्तायां वा, अथवा कुविदिति बहुनाम पठितं–(निघण्टु, ३/१) + ✓षण –सम्भक्तौ + डः प्रत्ययः (अन्येष्वपि दृश्यते – अष्टा०, ३/२/१०१)।

## कुशलः

कुशलः निपुणः कुशलं क्षेममिति वा ।

– उ०को०, १/१०६

✓कुस – संश्लेषणे + कल प्रत्ययः (वृषादिभ्यश्चित् – उ०को०, १/१०६) ।

## कुष्ठं

कुष्णाति निरन्तरं कर्षतीति कुष्ठं व्याधिभेदः । – उ०को०, २/२

✓कुष – निष्कर्षे + क्थन् प्रत्ययः (हसिकुषिनीरमिकाशिभ्यः क्थन् – उ०को०, २/२) ।

## कुष्मलं

कुष्णाति निष्कर्षतीति कुष्मलं पर्ण वा ।

– उ०को०, ४/१८७

✓कुष – निष्कर्षे + क्मलन् प्रत्ययः (कुटिकुषिभ्यां क्मलन् – उ०को०, ४/१८७) ।

## कुसुम्भं

कुस्यति शिलष्यतीति कुसुम्भं महारजनं वा । – उ०को०, ४/१०६

✓कुस – संश्लेषणे + उम्भ प्रत्ययः (कुसेरुम्भोमेदेताः – उ०को०, ४/१०६) ।

## कुसूलः

कुस्यति शिलष्यतीति कुसूलः धान्यपात्रं वा । – उ०को०, ४/९०

✓कुस – संश्लेषणे + ऊल् प्रत्ययः (खर्जिपिञ्जादिभ्य ऊरोलचौ – उ०को०, ४/९०) ।

## कुहकः

कोहयति विस्मयं कारयतीति कुहकः ।

– उ०को०, २/३७

✓कुह – विस्मापने + क्वुन् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/३७) ।

## कुहचिद्विदे

यः कुह क्वचिदपि विन्दति तस्मै ।

– ऋ०, ७/३२/१९

(च०ए०व०) – कुह < कस्मिन् (सप्तमी) > किं

+ त्रल प्रत्ययः ( सप्तम्यास्त्रल – अष्टा०, ५/३/१० ) त्रल इत्यस्य स्थाने ह प्रत्ययः (वा ह च छन्दसि – अष्टा०, ५/३/१३), ततः किमो कुरादेशः ( कु तिहोः – अष्टा०, ७/२/१०४), चित् पदपूरणार्थं कुह – चित् + ✓विद्लृ – लाभे + क्विप् प्रत्ययः।

## कुहुः

कोहयति विस्मापयतीति कुहुः । यस्यां चन्द्रो न दृश्यते साऽमावास्या वा कुहुः ।

– उ०को०, १/३७

✓कुह – विस्मापने + कु प्रत्ययः ( मृगय्वादयश्च – उ०को०, १/३७ ) ।

## कूचः

कौति शब्दयतीति कूचः स्तनं हस्ती वा। स्त्रियां-कूची-चित्रलेखनी ।

– उ०को०, ४/९१

✓कु – शब्दे + चट् प्रत्ययः, दीर्घत्वं कूची ( कुवश्चट् दीर्घश्च – उ०को०, ४/९१ ) ।

## कूटस्थः

य कूटेऽनेकविधव्यवहारे स्वस्वरूपेणैव तिष्ठति स कूटस्थः परमेश्वरः ।

– स० प्र० ( प्रथमसमुल्लासः )

✓कूट – आप्रदाने परितापे च + अच् प्रत्ययः > कूट + ✓ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ।

## कूपः

कौति शब्दयतीति कूपः ।

– उ०को०, ३/२७

✓कु – शब्दे + पः प्रत्ययः धातोर्दीर्घत्वञ्च ( कुयुभ्यां च – उ०को०, ३/२७ ) ।

## कूष्ठः

यः कौ पृथिव्यां तिष्ठति । – ऋ०, ५/७४/१

कू ( पृथिवी नाम ) + ✓ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ।

## कृकदाश्वं

कृकं हिंसनं दाशति ददाति तं शत्रुम् ।

– ऋ०, १/२९/७

( द्वि०ए०व० ) ✓कृञ् – हिंसायां + क प्रत्ययः ( कृदाधारार्चिकलिभ्यः कः – उ०को०, ३/४० ) गुणाभावत्वात् कृक + ✓दाशृ – दाने + उण् प्रत्ययः औणादिकश्चेति ।

## कृकवाकुः

कृकेन कण्ठेन वक्तीति कृकवाकुः यवनादिर्मयूरो वा । – उ०को०, १/६

कृक + ✓वच् – परिभाषणे + ञुण् प्रत्ययः कागमश्चेति धातोः उपधायाः दीर्घत्वञ्च ( कृके वचः कश्च – उ०को०, १/६ ) ।

## कृच्छ्रं

कृन्तति छिनन्तीति कृच्छ्रः च कठिनं दुःखं खलो वा । – उ०को०, २/२१

✓कृती – छेदने + रक् प्रत्ययः छागमश्च ( कृतेश्छः क्रू च – उ०को०, २/२१ ) ।

## कृच्छ्रेश्रितः

ये कृच्छ्रे दुःखेऽपि धर्मं श्रियन्ति सेवन्ते ।

– ऋ०, ६/७५/९

ये कृच्छ्रे कष्टे श्रिता कष्टं सेवमाना ।

– यजु०, २९/४६

कृच्छ्रे ( स०ए०ब० ) + ✓श्रिञ् – सेवायां + क्तः प्रत्ययः।

## कृतकं

कृन्तति छिनत्तीति कृतकं मिथ्या वा ।

– उ०को०, २/३७

✓कृती – छेदने + क्वुन् प्रत्ययः बाहुलकात् ( बहुलमन्यत्रापि – उ०को०, २/३७ ) ।

## कृत्तिका

कृन्तीति कृत्तिका नक्षत्रं वा ।

– उ०को०, ३/१४७

√कृती – छेदने + कन् प्रत्ययः (कृतिभिदिलतिभ्यः कित् – उ०को०, ३/१४७)।

## कृत्नुः

**करोतीति कृत्नुः शिल्पी वा।**

– उ०को०, ३/३०

√कृञ् – करणे + क्तु प्रत्ययः (कृहनिभ्यां क्तुः – उ०को०, ३/३०)।

## कृत्सं

**कृन्तति छिनत्तीति कृत्सं उदकम्।**

– उ०को०, ३/६६

√कृती – छेदने + सः प्रत्ययः (स्नुव्रश्चिकृत्यृषिभ्यः कित् – उ०को०, ३/६६)।

## कृत्स्नं

**कृन्तति स्वल्पमिति कृत्स्नं संपूर्णं वा।**

– उ०को०, ३/१७

√कृती – छेदने + क्स्नः प्रत्ययः (कृत्यशूभ्यां क्स्नः – उ०को०, ३/१७)।

## कृदरः

**कृत्स्नं दृणातीति कृदरः कुशूलो वा।**

– उ०को०, ५/४१

कृ (कृत्स्नं) + √दृ – विदारणे + अल् प्रत्ययः (कृदरादयश्च – उ०को०, ५/४१)।

## कृन्तत्रं

**कृन्तति छिनत्ति येन तत् कृन्तत्रं लाङ्गलं वा।** – उ०को०, ३/१०९

√कृती – छेदने + कत्रन् प्रत्ययः नुमागमश्च (कृतेर्नुम् च – उ०को०, ३/१०९)।

## कृपणः

**कल्पतेऽसौ कृपणः लोभयुक्तो वा।**

– उ०को०, २/७९

√कृपू – सामर्थ्ये + क्युन् प्रत्ययः बाहुलकात् (रञ्जेः क्युन् – उ०को०, २/७९)।

## कृपा

**कल्पते समर्थयति यया तया।**

– ऋ०, १/१२७/१

√कृपू – सामर्थ्ये + अङ् प्रत्ययः स्त्रियां (षिद्भिदादिभ्योऽङ् – अष्टा०, ३/३/१०४)।

## कृपाणः

**कल्पते समर्थो भवतीति कृपाणः खड्गो वा।** – उ०को०, २/९०

√कृपू – सामर्थ्ये + क्युः प्रत्ययः, णित्वात् वृद्धिश्च (युधिबुधिदृशः किच्च – उ०को०, २/९०)।

## कृपीटं

**कल्पतेऽसौ कृपीटं कुक्षिरुदकं वा।**

– उ०को०, ४/१८५

√कृपू – सामर्थ्ये + कीटन् प्रत्ययः (कृतॄवृपिभ्यः कीटन् – उ०को०, ४/१८५)।

## कृमिः

**क्राम्यति पादान् विक्षिपतीति क्रिमिः क्षुद्रजन्तुर्वा। सम्प्रसारणानुवृत्तेः कृमिः इत्यपि।** – उ०को०, ४/१२२

√क्रमु – पादविक्षेपे + इन् प्रत्ययः (क्रमितमिशतिस्तम्भामत इच्च – उ०को०, ४/१२२)।

## कृविः

**करोति येन स कृविः तन्तुवायद्रव्यं वा।**

– उ०को०, ४/५६

√कृञ् – करणे + क्विन् प्रत्ययः (कृविधृष्विछविस्थविकिकीदिवि – उ०को०, ४/५६)।

## कृशानुः

**दुष्टान् कृशति तत्संबुद्धौ।** – यजु०, ४/२७

**कृशति तनुकरोतीति कृशानुः अग्निर्वा।**

– उ०को०, ४/२

✓कृश – तनूकरणे + आनुक् प्रत्ययः ( ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्णुजिष्ठजिसन्स्यनिथिन्नुल्यसासानुकः–उ०को०, ४/२ )।

## कृषकः

कृषतीति कृषकः कृषीबलः ।

– उ०को०, २/३८

✓कृष – विलेखने + क्वुन् प्रत्ययः ( कृषेर्वृद्धिश्चोदीचाम् – उ०को०, २/३८ ) ।

## कृषिः

कर्षन्ति विलिखन्ति याभिस्ताः ।

– यजु०, ४/१०

कृषन्ति विलिखन्ति भूमिं यया तस्यै ।

– यजु०, ९/२२

कृष्यते विलेख्यते या सा कृषिः 'खेती' इति प्रसिद्धा । – उ०को०, ४/१२०

✓कृष – विलेखने + इक् प्रत्ययः ( इक् कृष्यादिभ्यः – अष्टा० वा० ३/३/१०८ )

## कृषिकः

कृषति येन स कृषिकः फालो वा ।

– उ०को०, २/४०

✓कृष – विलेखने + किकन् प्रत्ययः ( वृश्चिकृषोः किकन् – उ०को०, २/४० ) ।

## कृष्टपच्याः

या कृष्टेषु क्षेत्रेषु पच्यन्ते ताः ।

– यजु०, १८/१४

( प्र०ब०व० ) – ✓कृष – विलेखने + क्त प्रत्ययः > कृष्ट + ✓डुपचष् – पाके + क्यप् प्रत्ययः ( राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः – अष्टा०, ३/१/११४ ) ।

## कृष्टयः

मनुष्यानाकर्षणादिव्यवहारान् वा ।

– ऋ०, १/७/८

कृषन्ति विलिखन्ति स्वानि कर्माणि ये ते मनुष्याः । – ऋ०, १/५२/११

( प्र०ब०व० ) – ( कृष्टयः – मनुष्यनाम – निघण्टु, २/३ ) – ✓कृष – विलेखने + क्तिन् प्रत्ययः स्त्रियाम्।

## कृष्टिप्रः

यः कृष्टीन् मनुष्यान् दूतचारैः प्राति तस्य।

– ऋ०, ४/३८/९

कृष्टि + ✓प्रा – प्रपूरणे + कः प्रत्ययः ।

## कृष्णः

कर्षति येन स कृष्णस्तेन। यद्वा कृष्णवर्णेन लोकेन । – ऋ०, १/३५/२

कृष्णान्याकर्षणकृष्णवर्णयुक्तानि पृथिव्यादीनि । – ऋ०, १/३५/४

कर्षति विलिखति येन ज्योतिः समूहेन तम् । – ऋ०, १/५८/४

ये कृषन्ति ते । – ऋ०, १/१४१/८

कृषतीति कृष्णः नीलवर्णो वा ।

– उ०को०, ३/४

✓कृष – विलेखने + किकन् प्रत्ययः ( कृषेर्वर्णे – उ०को०, ३/४ ) ।

## कृष्णव्यथिः

यः कर्षकश्चासौ व्यथयिता च ।

– ऋ०, २/४/७

कृष्ण + ✓व्यथ – भयसञ्चलनयोः + इन् प्रत्ययः ( सर्वधातुभ्य इन् – उ०को०, ४/११८ ) ।

## कृसरः

य करोति क्रियते वा स कृसरः तिलौदनं मिश्रं वा । – उ०को०, ३/७३

✓कृञ् – करणे + सरन् प्रत्ययः ( कृधूमदिभ्यः कित् – उ०को०, ३/७३ ) ।

## केतपूः

**यः केतं प्रज्ञां पुनाति पवित्रीकरोति सः ।**

– यजु०, ९/१

**यः केतेन विज्ञानेन पुनाति ।**

– यजु०, ११/७

**यः केतं विज्ञानं पुनाति सः ।**

– यजु०, ३०/१

केत (प्रज्ञानाम) + ✓पूञ – पवने + क्विप् प्रत्ययः।

## केतसापः

**ये केतेन प्रज्ञया सम्पन्ति ते ।**

– ऋ०, ५/३८/३

केत + ✓षप् – समवाये + अण् प्रत्ययः ।

## केतुः

**यः केतयति चिकित्सति वा स केतुरीश्वरः ।** – स० प्र० (*प्रथमसमुल्लासः*)

**चायते पूजयति निशामयति श्रावयति वा स केतुः ग्रहः पताका वा।**– उ०को०, १/७४

१- ✓चायृ – पूजानिशामनयोः + तुः प्रत्ययः, धातोः की आदेशः, (चायः की > उ०को०, १/७४), आर्धधातुकलक्षणे गुणश्चेति ।

२- ✓कित् – ज्ञाने, रोगापनयने निवासे च + उः प्रत्ययः बाहुलकादौणादिकः, धातोः उपधायाः गुणत्वात् > केतुः ।

## केलिः

**केलति चलति यस्यां सा केलिः क्रीडा वा ।** – उ०को०, ४/११८

✓केलृ – चलने + इन् प्रत्ययः (सार्वधातुभ्य इन् – उ०को०, ४/११८) ।

## केशः

**क्लिश्यति येन स केशः शिरलोमानि वा।** – उ०को०, ५/३३

✓क्लिश – उपतापे + अन् प्रत्ययः लकारस्य लोपः (क्लिशेरन् लो लोपश्च – उ०को०, ५/३३) ।

## कोकिलः

**कोकत आदत्तेऽसौ कोकिलः पक्षिविशेषो वा ।** – उ०को०, १/५४

✓कुक – आदाने + इलच् प्रत्ययः (सलिकल्यनिमहिभडिभण्डिपिण्डितुण्डिकुकिभ्य इलच् – उ०को०, १/५४) ।

## कोटरः

**कोटं कौटिल्यं रातीति कोटरः वृक्षगुहा कुटि वा।** – उ०को०, ३/१३१

✓कुट – कौटिल्ये + अरः प्रत्ययः (ऋच्छेररः – उ०को०, ३/१३१) ।

## कोटिः

**कुटतीति कोटिः सङ्ख्यावरणमग्रभागो वा ।** – उ०को०, ४/ ११८

✓कुट – कौटिल्ये + इन् प्रत्ययः (सार्वधातुभ्य इन् – उ०को०, ४/११८) ।

## कोमलं

**कौति कोटिः शब्दयतीति कोमलं मृदु जलं वा ।** – उ०को०, १/१०९

✓कु – शब्दे + कल प्रत्ययः, मुडागमश्च (कुटिकाशिकौतिभ्यो मुट्च – उ०को०, १/१०९)।

## कोरकः

**कुरति शब्दयतीति कोरकः कलिका 'कली' इति प्रसिद्धा ।** – उ०को०, ५/३५

✓कुर – शब्दे + वुन् प्रत्ययः (कृञादिभ्यः संज्ञायां वुन् – उ०को०, ५/३५) ।

## कोशकारीं

**या कोशं करोति ताम् ।** – यजु०, ३०/१४

(द्वि०ए०व०) ✓कुष – निष्कर्षे + घञ् प्रत्ययः

षकारस्य शकारे वा छन्दसि > कोश + √कृ – करणे + अण् प्रत्ययः स्त्रियां ङीप् च ।

## कोष्ठः

कुष्णाति निरन्तरं कर्षति स कोष्ठः कुक्षिः कुशूलमन्तगृहे वा । – उ०को०, २/४

√कुष – निष्कर्षे + थन् प्रत्ययः ( उषिकुषिगार्त्तिभ्यस्थन् – उ०को०, २/४ ) ।

## क्रतुः

करोति कार्याणि येन सः ।

– ऋ०, १/१७/५

यः क्रियते यया करोति वेति क्रतुः प्रज्ञा यज्ञो वा । – उ०को०, १/७६

√कृञ – करणे + कतुः प्रत्ययः ( कृञः कतुः – उ०को०, १/७६ ) ।

## क्रतुपाः

ये प्रज्ञां पूरयन्ति ते । – ऋ०, ५/३९/२

( प्र०ब०अ० )क्रतु + √प्रा – पूरणे + कः प्रत्ययः ( आतोऽनुपसर्गे कः – अष्टा०, ३/२/३ ) ।

## क्रतुवित्

क्रतु प्रज्ञां विन्दति याभ्याम्।– ऋ०, २/३९/२

क्रतुः प्रज्ञां तां विन्दति येन तम् ।

– ऋ०, ३/४०/२

कतु + √विदॢ – लाभे + क्विप् प्रत्ययः ।

## क्रयिकः

क्रीणाति द्रव्येण पदार्थान्तरं ददाति गृह्णाति वा क्रयिका क्रेता । – उ०को०, २/४४

√क्रीञ – द्रव्यविनिमये + इकन् प्रत्ययः ( क्रिय इकन् – उ०को०, २/४४ ) ।

## क्रव्यादं

यः क्रव्यं मांसमत्ति तम् । – यजु०, ३५/१९

√क्लव् – आममांसार्थे + यत् प्रत्ययः, लस्य र > क्रव्य + √अद् – भक्षणे + विट् प्रत्ययः ( क्रव्ये च – अष्टा०, ३/२/६९ ) ।

## क्रान्तुः

क्रामति पादान् विक्षपतीति क्रान्तुः पक्षि वा । – उ०को०, ५/४३

√क्रमु – पादविक्षेपे + तुन् प्रत्ययः धातोः उपधायाः वृद्धिश्च ( क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च – उ०को०, ५/४३ ) ।

## क्रिमिः

क्राम्यति पादान् विक्षिपतीति क्रिमिः क्षुद्रजन्तुर्वा । – उ०को०, ४/१२२

√क्रमु – पादविक्षेपे + इन् प्रत्ययः धातो इदागमश्च ( क्रमितमिशतिस्तम्भामत इच्च – उ०को०, ४/१२२ )।

## क्रुश्वा

क्रोशतीति क्रुश्वा शृगालो वा ।

– उ०को०, ४/११४

√क्रुश–आह्वाने रोदने च + क्वनिप् प्रत्ययः ( शीङ्क्रुशिरूहिजिक्षिसृधृभ्यः क्वनिप् – उ०को०, ४/११४)।

## क्रूरः

कृन्तति क्षिनत्तीति कृच्छः क्रूरः च कठिनं दुःखं खलो वा । – उ०को०, २/२१

√कृत – छेदने + रक् प्रत्ययः धातोः क्रूरादेशः ( कृतेश्छः क्रूच – उ०को०, २/२१ ) ।

## क्रेणिः

क्रीणातीति क्रेणिः । – उ०को०, ४/४८

√क्रीञ् – द्रव्यविनिमये + निः प्रत्ययः बाहुलकात् धातोः उपधायाः एत्वञ्च ( वीज्याज्वरिभ्यो निः – उ०को०, ४/४८ ) ।

## क्रोष्टुः

क्रोशत्याह्वयति रोदिति वा स क्रोष्टुः ।

– उ०को०, १/६९

✓क्रुश – आह्वाने रोदने च + तुन् प्रत्ययः (सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् – उ०को०, १/६९)।

## क्लेदा

क्लिद्यत्यार्द्रीभवतीति क्लेदा चन्द्रमा वा।
– उ०को०, १/१५९

✓क्लिदू – आर्द्रीभावे + कनिन् प्रत्ययः (श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्वन्मातरिश्वन्मघवन्निति – उ०को०, १/१५९), धातोर्गुणश्चेति।

## क्लेदुः

क्लिद्यत्यार्द्रीकरोति चित्तमिति क्लेदुः चन्द्रमा वा। – उ०को०, १/१०

✓क्लिदू – आर्द्रीभावे + उः प्रत्ययः (शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१०), धातोर्गुणश्च।

## क्षत्ता

क्षदति संवृणोतीति क्षत्ता सारथिर्द्वारपालो वैश्यायां शूद्राज्जातो वा। – उ०को० २/९४

✓क्षद – संवृत्तौ (सौत्रौ धातुः) + तृच् प्रत्ययः (तृन्तृचौ शंसिक्षदादिभ्यः सञ्ज्ञायां चानिटौ – उ०को०, २/९४)।

## क्षत्रभृत्

यः क्षत्रं राज्यं बिभर्त्ति सः।
– यजु०, २७/७

क्षत्र + ✓भृञ् – भरणे + क्विप् प्रत्ययः।

## क्षत्रं

राज्यं, क्षण्यते हिंस्यते नश्यते पदार्थो येन सः क्षतो घातादिस्ततस्त्रायते रक्षतीति क्षत्रः क्षत्रियादिवीरस्तम्। – यजु०, ५/२७

१- ✓क्षद – संवृत्तौ (सौत्रोधातुः) + स्त्रः प्रत्ययः (गुधृवीपचिवचियमिसदिक्षदिभ्यः स्त्रः – उ०को०, ४/१६७)

२- ✓क्षणु – हिंसायां + क्त प्रत्ययः > क्षत + ✓त्रैङ् पालने + कः प्रत्ययः।

## क्षत्रवनिः

क्षत्रं संभाजिनं वनति तम्।
– यजु०, १/१७

राज्यं वनयति तम्। – यजु०, १/१८

यया क्षत्रं राज्यं धनुर्विद्यां शूरवीरान् पुरुषान् वा वनन्ति संभजन्ति सा।
– यजु०, ५/१२

क्षत्रस्य राज्यस्य क्षत्रियाणां वा संविभाजकम्। – यजु०, ६/३

क्षत्र + ✓वण – सम्भक्तौ + इन् प्रत्ययः (सार्वधातुभ्य इन् – उ०को०, ४/११८)।

## क्षमाचराः

ये क्षमायां पृथिव्यां चरन्ति।
– यजु०, १६/५७

(प्र०ब०व०) – ✓क्षमूष् – सहने + अङ् प्रत्ययः स्त्रियां (षिद्भिदादिभ्योऽङ् – अष्टा०, ३/३/१०४) > क्षमा + ✓चर गतौ + टः प्रत्ययः।

## क्षमि

क्षाम्यन्ति सहन्ते जना यस्मिन् व्यवहारे तस्मिन् स्थित्वा। – ऋ०, १/२५/१८

(स०ए०व) – ✓क्षमूष् – सहने + क्विप् प्रत्ययः।

## क्षान्तुः

क्षमतेऽसौ क्षान्तुः सहनशीलो वा।
– उ०को०, ५/४३

✓क्षमूष् – सहने + तुन् प्रत्ययः धातोः वृद्धिश्च (क्रमिगमिक्षमिभ्यस्तुन् – उ०को०, ५/४३)।

## क्षितिः

क्षियन्ति क्षयं प्राप्नुवन्ति निवसन्ति ये ते मनुष्याः। – ऋ०, १/३३/६

क्षियन्ति निवसन्ति राज्यरत्नानि प्राप्नुवन्ति यस्यां सा । – ऋ०, १/६५/३

✓क्षि – निवासगत्योः + क्तिच् प्रत्ययः (क्तिच्क्तौ च संज्ञायां – अष्टा०, ३/३/१७४) ।

## क्षिपणिः

दूरे क्षिपन्ति शत्रून् यया तां सेनाम् ।

– यजु०, ९/१४

क्षिपत्यनेन शत्रून् स क्षिपणिः आयुधं वा। – उ०को०, २/१०७

✓क्षिप – प्रेरणे + अनिः प्रत्ययः (क्षिपेः किच्च – उ०को०, २/१०७) ।

## क्षिपः

क्षिपन्ति प्रेरयन्ति याभिस्ता अङ्गुलयः।

– ऋ०, ५/४३/४

(प्र०ब०व०) – ✓क्षि – प्रेरणे + क्विप् प्रत्ययः।

## क्षिपणुः

क्षिप्यतीति क्षिपणुः वायुर्वा ।

– उ०को०, ३/५२

✓क्षिप – प्रेरणे + अनुङ् प्रत्ययः (अनुङ् नदेश्च – उ०को०, ३/५२) ।

## क्षिप्रं

क्षिप्यते प्रेर्यते तत् क्षिप्रं शीघ्रं वा ।

– उ०को०, २/१३

✓क्षिप – प्रेरणे + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को० २/१३)।

## क्षीरं

अद्यते भक्ष्यते यत्तत् क्षीरं दुग्धं वा ।

– उ०को०, ४/३४

✓घस् – अदने + ईरन् प्रत्ययः, धातोः उपधायाः ककारः (घसेः किच्च – उ०को०, ४/३४) ।

## क्षीरश्रीः

यः क्षीरादीनि शृणाति । – यजु०, ८/५७

क्षीर + ✓शृ – हिंसायां + क्विप् प्रत्ययः दीर्घश्च (क्विब् वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं च – उ०को०, २/५७) ।

## क्षुद्रः

क्षुनत्ति संपिनष्टि यः स क्षुद्रः अधमः क्रूरः कृपणो वा । – उ०को०, २/१३

✓क्षुदिर् – संपेषणे + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## क्षुद्रपृषती

क्षुद्राणि पृषन्ति यस्याः सा ।

– यजु०, २४/२

क्षुद्र + ✓पृषु – सेचने + अति प्रत्ययः निपातनात् (वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च – उ०को०, २/८४), स्त्रियां ङीप् ।

## क्षुधुनः

क्षुध्यति भोक्तुमिच्छतीति क्षुधुनः म्लेच्छजातिर्वा । – उ०को०, ३/५५

✓क्षुध – बुभुक्षायां + उनन् प्रत्ययः (क्षुधिपिशिमिथिभ्यः कित् – उ०को०, ३/५५) ।

## क्षुमा

क्षौति शब्दयतीति सा क्षुमा अतसी वा ।

– उ०को०, १/१४५

✓क्षु – शब्दे + मक् प्रत्ययः बाहुलकात् (इषियुधीन्धिदंसिश्याधुसूभ्यो मक् – उ०को०, १/१४५) स्त्रियां टाप् ।

## क्षुरः

यः क्षुरति विलिखति येन वा छिनत्तीति स क्षुरः छेदनद्रव्यं कोकिलाक्ष गोक्षुरो लोमच्छेदकं नापितशस्त्रं वा।– उ०को०, २/२८

✓क्षुर – विलेखने + रन् प्रत्ययः (ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरमेलशुक्रशुक्लगौरवन्नेरामालाः – उ०को०, २/२८)।

## क्षेत्रं

क्षियन्ति निवसन्ति पदार्था यस्मिंस्तत्।

– ऋ०, ३/३१/१५

क्षियन्ति निवसन्ति यस्मिन्पुण्ये कर्म्मणि तत्र। – ऋ०, ५/६२/७

क्षियन्ति निवसन्ति तं देशम्।

– ऋ०, ६/४७/२०

क्षियन्ति निवसन्ति येषु तानि।

– ऋ०, ६/६१/१४

क्षयन्ति निवसन्ति यस्मिन् जगति तस्य।

– ऋ०, ७/३५/१०

क्षयति नश्यति निवासहेतुर्भवतीति क्षेत्रं केदारः कलत्रं वा। – उ०को०, ४/१७०

✓क्षि – निवासगत्योः क्षये च + त्रन् प्रत्ययः धातोः इकारस्य एत्वं (दादिभ्यश्छन्दसि – उ०को०, ४/१७०)।

## क्षेत्रसाधसः

ये क्षेत्राणि साध्नुवन्ति ते। – ऋ०, ३/८/७

(प्र०ब०व०) – क्षेत्र + ✓साध – संसिद्धौ + अण् प्रत्ययः ततः जसोऽसुक् आगमश्चेति।

## क्षेत्रसां

यः क्षेत्राणि सनति विभजति तम्।

– ऋ०, ४/३८/१

क्षेत्र + ✓षण् – सम्भक्तौ + डः प्रत्ययः (अन्येष्वपि दृश्यते – अष्टा०, ३/२/१०१)।

## क्षेमं

क्षपत्यज्ञानं नाशयतीति क्षेमं कुशलं वा।

– उ०को०, १/१४०

✓क्षि – क्षये + मन् प्रत्ययः (अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०) धातोः इकारस्य एत्वम्।

## क्षोणिः

क्षौति शब्दयतीति क्षोणिः। – उ०को०, ४/४८

✓क्षु – शब्दे + निः प्रत्ययः बाहुलकात् (वीजाज्वरिभ्यो निः – उ०को०, ४/४८) धातोः ओत्वञ्च।

## क्षोत्ता

क्षुनत्ति संपिनष्टि येन स क्षोत्ता मुसलो वा। – उ०को०, २/९४

✓क्षुदिर् – संपेषणे + तृन् प्रत्ययः (तृन्तृचौ शंसिक्षदादिभ्यः सञ्ज्ञायांचानिटौ – उ०को०, २/९४) धातोः ओत्वम्।

## क्षोमं

क्षौति शब्दयतीति क्षोमं वस्त्रभेदो वा।

– उ०को०, १/१४०

✓क्षु – शब्दे + मन् प्रत्ययः (अर्त्तिस्तु सुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०) धातोः उकारस्य ओकारम्।

## क्ष्मा

क्षमते सहते सर्वमिति क्ष्मा पृथिवी वा।

– उ०को०, ५/६५

✓क्षमूष् – सहने + अच् प्रत्ययः धातोः उपधालोपश्च (क्षमेरुपधालोपश्च – उ०को०, ५/६५) स्त्रियां रूपम्।

## खजकृत्

यः सङ्ग्रामं करोति सः।

– ऋ०, १/१०२/६

यः खजं सङ्ग्रामं करोति सः ।

– ऋ०, ६/१८/२, ७/२०/३

✓खज – मन्थे + अण् प्रत्ययः > खज + ✓कृञ् – करणे + क्विप् प्रत्ययः, ततः तुगागमश्च ।

## खजपं

खजति मथ्नाति मथ्यत इति खजपं घृतं वा । – उ०को०, ३/१४२

✓खज – मन्थे + कपन् प्रत्ययः ( उषिकुटिदलिकचिखजिभ्यः कपन् – उ०को०, ३/१४२ ) ।

## खजाकः

खजति मथ्नातीति खजाकः पक्षिः खजाका दर्विर्वा । – उ०को०, ४/१३

✓खज – मन्थे + आकः प्रत्ययः ( खजेराकः – उ०को०, ४/१३ ) ।

## खट्वा

खट्यते काङ्क्ष्यते या सा खट्वा शय्याभेदो वा । – उ०को०, १/१५१

✓खट् – कांक्षायां + क्वन् प्रत्ययः ( अशुप्रुषिलटिकणिखटिविशिभ्यः क्वन् – उ०को०, १/१५१ ) स्त्रियां टाप् ।

## खड्डूः

खडति भिनत्तीति खड्डूः बाहुजङ्घयोराभूषणंमृतशय्या वा । – उ०को०, १/८२

✓खडि – भेदने + ऊः प्रत्ययः ( खडेर्डुड् वा – उ०को०, १/८२ ) ।

## खड्गः

खडति भिनत्ति येन स खड्गः शस्त्रं गण्डकः 'मेडा' इति प्रसिद्ध ।

– उ०को०, १/१२४

✓खडि – भेदने + गन् प्रत्ययः ( छापूखडिभ्यः कित् – उ०को०, १/१२४ ) ।

## खड्डूः

खडति भिनत्तीति खड्डूःबाहुजङ् घयोराभूषणं मृतशय्या वा । – उ०को०, १/८२

✓खडि – भेदने + ऊः प्रत्ययः धातोः डुडागमश्च बाहुलकात् ( खडेर्डुड वा – उ०को०, १/८२ ) ।

## खण्डः

खण्डतेऽवदीर्यतेऽसौ खण्डः विभागो मिष्टभेदो वा । – उ०को०, १/११४

✓खनु – अवदारणे + डः प्रत्ययः ( समन्ताड्डः – उ०को०, १/११४ ) ।

## खदिरः

खदतिहिनस्तीति खदिरः वृक्षभेदो वा ।

– उ०को०, १/५३

✓खद – स्थैर्ये हिंसायां च + किरच् प्रत्ययः ( अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः – उ०को०, १/५३ ) ।

## खनिः

खनति येन खन्यते यत्रेति वा स खनिः धनस्थानं वा । – उ०को०, ४/१४०

✓खनु – अवदारणे + इः प्रत्ययः ( खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च – उ०को०, ४/१४० ) ।

## खरुः

खनति शरीरमिति खरुः कामो दन्तः संहर्त्ता दर्पोऽश्वो वा । – उ०को०, १/३६

✓खनु – अवदारणे + कुः प्रत्ययः, नस्य रः ( खरूशङ्कुपीयुनीलङ्गुलिगु – उ०को०, १/३६ )।

## खर्जूः

खर्जति पीडयतीति खर्जूः कण्डूर्वा ।

– उ०को०, १/८०

✓खर्ज – पूजने + ऊः प्रत्ययः ( कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः स्त्रियाम् – उ०को०, १/८० ) ।

## खर्जूरः

खर्जति मार्जयतीति खर्जूरः वृक्षभेदो रजतं वा । – उ०को०, ४/९०

√खर्ज – पूजने + अरः प्रत्ययः ( खर्जिपिञ्जादिभ्य अरोलचौ – उ०को०, ४/९० ) ।

## खलतिः

स्खलति सञ्चलतीति खलतिः निष्केशशिराः पुरुषो वा । – उ०को०, ३/११२

√स्खल – सञ्चलने + अतच् प्रत्ययः धातोः सलोपः प्रत्ययान्तस्येत्वं निपातनात् ( खलतिः–उ०को०, ३/११२ )।

## खष्पः

खनतीति खष्पः क्रोधो बलात्कारो वा । – उ०को०, ३/२८

√खनु – अवदारणे + पः प्रत्ययः ( खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः – उ०को०, ३/२८ ) ।

## खाटिः

खटति काङ्क्षतीति खाटिः शुष्कव्रणस्थानं वा । – उ०को०, ४/१२५

√खट – काङ्क्षायां + इञ् प्रत्ययः बाहुलकात् ( वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् – उ०को०, ४/१२५ ) धातोरुपधाया दीर्घत्वञ्च ( जनसनखनां सञ्झलोः – अष्टा०, ६/४/४२ ) ।

## खात्रं

खन्यते तत् खात्रं खनित्रं जलाधारविशेषो वा । – उ०को०, ४/१६२

√खनु – अवदारणे + ष्ट्रन् प्रत्ययः ( उषिखनिभ्यां कित् – उ०को० ४/१६२ ) धातो उपधायाः आकारादेशः ( जनसनखनां सञ्झलोः – अष्टा०, ६/४/४२ ) ।

## खादयः

ये खादन्ति ते । – ऋ०, ७/५६/१३

( प्र० ब० व० ) – √खादृ – भक्षणे + इञ् प्रत्ययः बाहुलकात् ( वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् – उ०को०, ४/१२५ ) ।

## खिदिरः

खिद्यति येन स खिदिरः चन्द्रमा वा । – उ०को०, १/५१

√खिद – दैन्ये परिघाते च + किरच् प्रत्ययः ( इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१ ) ।

## खिद्रः

दीनो भवतीति स खिद्रः रोगो दरिद्रो वा। – उ०को०, २/१३

√खिद – दैन्ये परिघाते च + रक् प्रत्ययः ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ ) ।

## खुरः

खुरति छिनत्ति यो येन वा स खुरः शफं वा । – उ०को०, २/२८

√खुर – छेदने + रन् प्रत्ययः ( ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरमेलशुक्रशुक्लगौरवन्नेशमालाः – उ०को०, २/२८ ) उभयत्र रकारत्वात् रेफलोपः गुणाभावश्चेति ।

## गगनं

मस्य गः गच्छन्त्यस्मिन्निति गगनं आकाशं वा । – उ०को०, २/७७

√गम् – गतौ + युच् प्रत्ययः, धातोः गकारस्य मकारादेशः ( गमेर्गश्च – उ०को०, २/७७ ) ।

## गङ्गा

गच्छतीति गङ्गा नदीभेदो वा । – उ०को०, १/१२३

√गम् – गतौ + गन् प्रत्ययः (गन् गमयद्योः – उ०को०, १/१२३) स्त्रियां टाप् प्रत्ययः ।

## गडेरः

**गडति सिञ्चतीति गडेरः मेघो वा ।**

– उ०को०, १/५८

√गड – सेचने + एरक् प्रत्ययः (पतिकठिकुठिगडिगुडिदंशिभ्यः एरक् – उ०को०, १/५८) ।

## गडोलः

**गडति सिञ्चति स गडोलः ।**

– उ०को०, १/६६

√गड – सेचने + ओलच् प्रत्ययः (कपिगडिगण्डिकटिपटिभ्य ओलच् – उ०को०, १/६६) ।

## गणेशः

**ये प्रकृत्यादयो जड़ा जीवाश्च गणयन्ते संख्यायन्ते तेषामीशः स्वामी पतिः पालको वा ।** स० प्र० (*प्रथमसमुल्लासः*)

√गण – संख्याने + अच् प्रत्ययः (नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः – अष्टा०, ३/१/१३४) – गण + ईश - गणेशः ।

## गण्डः

**गच्छतीति गण्डः कपोलव्याधिविशेषो वा।**

– उ०को०, १/१४४

√गम – गतौ + डः प्रत्ययः (अमन्ताड्डः – उ०को०, १/१४४) ।

## गण्डयन्तः

**गण्डयति सेचयतीति गण्डयन्तः मेघो वा।**

– उ०को०, ३/१२८

√गण्ड – वदने + झच् प्रत्ययः (तृभूषहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च – उ०को०, ३/१२८), प्रत्ययादि झकारस्य अन्तादेशः (झोऽन्तः – अष्टा०, ७/१/३) अन्त परतो णेरयादेशः (अयामन्ताल्वाय्येत्विष्णुषु – अष्टा०, ६/४/५५) ।

## गण्डिः

**गण्डति स गण्डिः वदनैकदेशो वा ।**

– उ०को०, ४/११८

√गण्ड – वदने + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

## गण्डुः

**गण्डति स गण्डुः वदनैकदेशः उपधानम्-तकिया इति प्रसिद्ध तैलं वा ।**

– उ०को०, १/७

√गण्ड – वदने + उः प्रत्ययः बाहुलकात् (भृमृशीङ्तृ चरित्सरितनिधनिमिमस्जिभ्य उः – उ०को०, १/७)।

## गण्डुषः

**गण्डति वदनावयवं दिशतीति गण्डूषः जलादिना पूर्णमुखं कुल्ला इति प्रसिद्धम्।**

– उ०को०, ४/७८

√गण्ड – वदने + ऊषन् प्रत्ययः (गण्डेश्च – उ०को०, ४/७८) ।

## गण्डोलः

**गण्डति स गण्डोलः वदनैकदेशो वा ।**

– उ०को०, १/६६

√गण्ड – वदने + ओलच् प्रत्ययः (कपिगडिगण्डिकटिपटिभ्य ओलच् – उ०को०, १/६६) ।

## गतिला

**गच्छन्ति प्राप्नुवन्ति यां सा गतिला वेत्रलता वा ।** – उ०को०, १/५७

√गम् – गतौ + इलच् प्रत्ययः धातोः मकारस्य तकारादेशः (मिथिलादयश्च – उ०को०, १/५७)।

## गुत्सः

**गुध्नाति रोषं करोतीति गुत्सः हारभेद पुष्प गुम्फो वा ।** – उ०को०, ३/६८

√गुध – रोषे + सः प्रत्ययः (उन्दिगुधिकुषिभ्यश्च – उ०को०, ३/६८) ।

## गदयित्नुः

गादयतीति गदयित्नुः वावदूको वा ।

– उ०को०, ३/२९

√गदी – देवशब्दे + इत्नुच् प्रत्ययः (स्तनिहृषिगदिमदिभ्यो णेरित्नुच् – उ०को०, ३/२९) इत्नु परतः णेरयादेशः (अयामन्ताल्वाय्येत्न्विष्णुषु – अष्टा०, ६/४/५५) ।

## गन्तुः

गच्छतीति गन्तुः पथिको वा ।

– उ०को०, १/६९

√गम – गतौ + तुन् प्रत्ययः (सितनिगमिमसिसच्य-विधाञ्क्रुशिभ्यस्तुन् – उ०को०, १/६९) ।

## गन्त्री

गच्छत्यनया सा गन्त्री महच्छकटं वा ।

– उ०को०, ४/१५९

√गम – गतौ + ष्ट्रन् प्रत्ययः (सर्वधातुभ्यः ष्ट्रन् – उ०को०, ४/१५९) ततः ङीप् प्रत्ययः स्त्रियाम् ।

## गन्धर्वः

यो गां पृथिवीं धरति सः गन्धर्वो वायुस्तस्य वातो गन्धर्वस्तस्यापो अप्सरसः ।

– ऋ०, १/२२/१४

यो गां पृथिवीं धरति स वायुः ।

– ऋ०, १/१६३/२

ये गां सुशिक्षितां वाचं पृथिवीं वा धरन्ति तान् । – ऋ०, ३/३८/६

यो गां पृथिवीं वाणीं वा धरति धारयति वा स गन्धर्वः सूर्यलोकः । – यजु०, २/३

गां पृथिवीं धरतीति, पृषोदरादिना गोशब्दस्य गम्भावः । – यजु०, ९/१

ये वायव इन्द्रियाणि च धरन्ति ते ।

– यजु० ९/७

गां पृथ्वीं धरति स सूर्यः सूत्रात्मा वायुर्वा।

– यजु०, १७/३२

यो गां पृथिवीं धरति । – यजु०, १८/३८

यो गां पृथिवीं धरति सः ।

– यजु०, १८/३९

यो गाः सूर्यकिरणान् धरति सः ।

– यजु०, १८/४०

यः पृथिवीं किरणांश्च धरति सः ।

– यजु०, १८/४१

यो गां वाणीं धरति सः । – यजु०, १८/४२

येन वागादीन् धरति सः । – यजु०, १८/४३

यो गां पृथिवीं धरति सः ।

– यजु०, ३०/१

यो गां वेदवाचं धरति सः ।

– यजु०, ३२/९

गच्छतीति गं-ब्रह्म, तद्धरतीति स गन्धर्वः।

– आर्याभि०, २/२४

गम् (गाम् < गो) + √धृञ् – धारणे + वः प्रत्ययः बाहुलकात् (कृगृशृदृभ्यो वः – उ०को०, १/१५५), गोर्गमादेशत्वात् गन्धर्वः ।

## गभस्तिः

गभमन्धकारमस्यतीति गभस्तिः किरणो वा । – उ०को०, ४/१८०

१- गभं-अन्धकारं + √असु-क्षेपणे + तिः प्रत्ययः।
२- √भस् – भर्त्सनदीप्त्योः + तिः प्रत्ययः बाहुलकात् (वसेस्तिः – उ०को०, ४/१८०) धातोर्गडागमः (भसेर्गद् – सर० क०भ०, २/१/८५) ।

## गभीरः

गम्यते प्राप्यते ज्ञायते वा स गभीरः शान्तो महाशयो वा । – उ०को०, ४/३५

√गम् – गतौ + ईरन् प्रत्ययः, (मकारस्य भकारः निपातनात् (गभीर गम्भीरौ – उ०को०, ४/३५) ।

**गमथः**

**गच्छतीति गमथः पथिको वा ।**

**– उ०को०, ३/११३**

✓गम् – गतौ + अथः प्रत्ययः (शीङ्शपिरूगमिवञ्चि-जीविप्राणिभ्योऽथः – उ०को०, ३/११३) ।

**गमी**

**गमिष्यतीति गमी पथिको वा ।**

**– उ०को०, ४/६**

✓गम् – गतौ + इनि प्रत्ययः (गमेरिनिः – उ०को०, ४/६) ।

**गम्भीरः**

**गम्यते प्राप्यते ज्ञायते वा स गम्भीरः शान्तो महाशयो वा । – उ०को०, ४/३५**

✓गम् – गतौ + ईरन् प्रत्ययः मकारस्य भकारः मुमागमश्च (गमीरगम्भीरौ – उ०को०, ४/३५) ।

**गरुत्**

**गिरति निगलतीति गरुत् पक्षी वा ।**

**– उ०को०, १/९४**

✓गॄ – निगरणे + उतिः प्रत्ययः (मृगोरुतिः – उ०को०, १/९४) ।

**गरुत्मान्**

**यो गुर्वात्मना स गरुत्मान् ।**

**– स० प्र०, प्र०समु०**

गरुत् + मतप् प्रत्ययः

**गर्गः**

**गृणात्युपदिशतीति गर्गः ऋषिविशेषो वा।**

**– उ०को०, १/१२८**

✓गॄ – निगरणे + गः प्रत्ययः (मुदिग्रोर्गग्गौ – उ०को०, १/१२८) ।

**गर्त्तः**

**गिरति निगलति स गर्त्तः अवटः पतनस्थानं वा । – उ०को०, ३/८६**

✓गॄ – निगरणे + तन् प्रत्ययः (हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६) ।

**गर्त्तसदं**

**यो गर्त्ते गृहे सीदति तम् । – ऋ०, २/३३/११**

गर्त्त + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

**गर्भः**

**यो गृह्णाति सः । – ऋ०, १/१५२/३**

**ग्रियते सिच्यते गृह्यते वा स गर्भः ।**

**– यजु०, ८/२८**

**यो गीर्यते स्वीक्रियते सः । – यजु० ११/४३**

**योऽनर्थान् गिरति विनश्यति सः ।**

**– यजु०, १२/३७**

**यो गृह्यते सः । – यजु०, १९/७६**

**गिरति गृणात्युपदिशतीति गर्भः जठरं तत्रस्थो वा । – उ०को०, ३/१५२**

✓गॄ – निगरणे शब्दे च + भन् प्रत्ययः (अर्तिगृभ्यां भन् – उ०को०, ३/१५२) ।

**गर्भधं**

**यो गर्भं दधाति तम् । – यजु०, २३/१९**

गर्भ + ✓डुधाञ् – धारणपोषणयोः + कः प्रत्ययः।

**गर्भधिं**

**गर्भो धीयतेऽस्यां ताम् । – ऋ०, १/३०/४**

गर्भ + ✓डुधाञ् – धारणपोषणयोः + कि प्रत्ययः ।

**गर्मुत्**

**गिरति येन तत् गर्मुत् सुवर्णं तृणजातिभेदो वा । – उ०को०, १/९५**

✓गॄ – निगरणे + उतिः प्रत्ययः मुडागमश्च (ग्रोमुद च – उ०को०, १/९५) ।

## गर्वः

गिरतीति गर्वः अहङ्कारो वा ।

– उ०को०, १/१५५

✓गॄ – निगरणे + वः प्रत्ययः (कॄगॄशॄदॄभ्यो वः – उ०को०, १/१५५) ।

## गर्वरः

गिरति निगरतीति गर्वरः अहङ्कारः ।

– उ०को०, २/१२१

✓गॄ – निगरणे + ष्वरच् प्रत्ययः (कॄगॄशॄवृ-ञ्चतिभ्यः ष्वरच् – उ०को०, २/१२१) ।

## गवयः

गच्छति यो यत्र ययावा सा गौः पशुरिन्द्रियं सुखं किरणो वज्रं चन्द्रमा भूमिवाणो जलं वा । गो सदृशो वनपशु विशेषःगवयः। – उ०को०, २/६७

✓गम् – गतौ + डोः प्रत्ययः (गमेर्डोः – उ०को०, २/६७), अयादेशत्वात् गवयः ।

## गवाशिरं

ये गोभिरिन्द्रियैर्वाऽश्यन्ते । – ऋ०, १/१३७/१

ये गोभिः किरणैरश्यन्ते । – ऋ०, १/१३७/१

गाः किरणान् अश्नुते तस्य ।

– ऋ०, २/४१/३

गावोऽश्नन्ति यं तम् । – ऋ०, ३/४२/१

गावः किरणा अश्नन्ति यं तम् ।

– ऋ०, ३/४२/७

✓गम् – गतौ + डोः प्रत्ययः (गमेर्डोः – उ०को०, २/६७) अवादेशत्वात् गवय यकारस्य लोपः > गव + ✓अश् – भोजने + किरच् प्रत्ययः (अशेर्नित् – उ०को०, १/५२) ।

## गविष्ठिरः

यो गवि सुशिक्षितायां वाचि तिष्ठति ।

– ऋ०, ५/१/१२

गवि + ✓ष्ठा – गतिनिवृत्तौ + किरच् प्रत्ययः (अजिरिशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः – उ०को०, १/५३) धातोः आकारलोपः ।

## गवेषणः

यो गां वाणीमिच्छति सः ।

– ऋ०, १/१३२/३

गो + ✓इषु – इच्छायां अवादेशश्च + ल्युट् प्रत्ययः।

## गह्वरः

गाहते विलोडयतीति गह्वरः गहनं वा ।

– उ०को०, ३/१

✓गाहू – विलोडने + ष्वरच् प्रत्ययः धातोः ह्रस्वादेशश्च (छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वर-कट्वरसंयद्वराः – उ०को०, ३/१) ।

## गह्वरेष्ठा

गह्वरे गहने गभीर आभ्यान्तरे तिष्ठतीति।

– यजु०, ५/८

गह्वरेषु गहनेषु तिष्ठति तत्र सुसाधवे ।

– यजु०, १६/४४

गह्वरे (सप्तम्यां) + ✓ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ।

## गातुः

गीयते शब्द्यते यस्तं यज्ञम् ।

– यजु०, २/२१

गीयते ज्ञायते येन स गातुवेदस्तम् ।

– यजु०, २/२१

गायति षड्जादिस्वरानालापयति स गातुः गाथकः । – उ०को०, १/७३

✓गा – स्तुतौ + तुः प्रत्ययः (कमिमनिजनिगा-भायाहिभ्यश्च – उ०को०, १/७३) ।

## गातुयन्

**यो गातुं पृथिवीमेति सः । – ऋ०, १/५२/८**

गातु + ✓इण् – गतौ + शतृ प्रत्ययः ।

## गातुविदः

**गीयते स्तूयतेऽनया सा गातुः स्तुतिस्तस्या विदो वक्तारः । – यजु०, २/२१**

(प्र०ब०व०) गातु + ✓विद् – ज्ञाने + क्विप् प्रत्ययः तुगागमश्च।

## गात्रं

**गच्छति चेष्टतेऽनेनेति गात्रं अवयवः शरीरं वा । – उ०को०, ४/१६९**

गम् – गतौ + त्रन् प्रत्ययः, धातोः आकारादेशः गमेरा च – उ०को०, ४/१६९) ।

## गाथा

**गीयते या सा गाथा वाग्भेदः श्लोको वा। – उ०को०, २/४**

✓गा – स्तुतौ + थन् प्रत्ययः (उषिकुषिगार्तिभ्यस्थन् – उ०को०, २/४) स्त्रियां टाप् प्रत्ययश्च ।

## गाथान्यः

**यो गाथां नयति तस्य । – ऋ०, १/१९०/१**

(ष०ए०व०) – गाथा + ✓णीञ् – प्रापणे + क्विप् प्रत्ययः ।

## गान्तुः

**गच्छतीति गान्तुः पथिको वा ।**

**– उ०को०, ५/४३**

✓गम् – गतौ + तुन् प्रत्ययः धातोः वृद्धिश्च (क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च – उ०को०, ५/४३))।

## गान्त्रं

**गच्छति येन तत् गान्त्रं शकटं वा ।**

**– उ०को०, ४/१६०**

✓गम् – गतौ + ष्ट्रन् प्रत्ययः धातोः वृद्धिश्च (भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च –उ०को०, ४/१६०) ।

## गायत्री

**यया गायत्रं त्रायते तां नीतिम् । – यजु०, ९/३२**

**या गायन्तं त्रायते सा ।**

**– यजु०, १३/५४, १४/१८**

✓गै – शब्दे + अण् प्रत्ययः-आयादेशत्वात् > गाय + ✓त्रैङ – पालने + कः प्रत्ययः (आतोऽनुपसर्गे कः – अष्टा०, ३/२/३) स्त्रियां ङीप् प्रत्ययश्चेति ।

## गारित्रं

**गीर्य्यते भक्ष्यते तद् गारित्रं ओदनो वा।**

**– उ०को०, ४/१७१**

✓गॄ – शब्दे विज्ञाने च + णित्रन् प्रत्ययः धातोः आकारत्वञ्च (भुवादिगृभ्यो णित्रन् – उ०को०, ४/१७१) ।

## गिरं

**गीर्यते निगल्यते यदेनं तत् ।**

**– यजु०, १५/५**

✓गॄ – निगरणे + क्विप् प्रत्ययः ऋकारान्तस्य धातोरङ्गस्य इकारादेशः (ऋत इद्धातोः – अष्टा०, ७/१/१००) ।

## गिरः

**गृणन्ति ये ते गिरो विद्वांसः ।**

**– ऋ०, १/६/६**

(प्र०ब०व०) – ✓गॄ – शब्दे + क्विप् प्रत्ययः, ऋकारान्तस्य धातोरङ्गस्य इकारादेशः (ऋत इद्धातोः – अष्टा०, ७/१/१००) ।

## गिरिः

**यो गिरति जलादिकं गृणाति महतः शब्दान् वा सः । – ऋ०, १/३७/७**

**ये जलं गिलन्ति शब्दं वा गृणन्ति ते मेघाः। – ऋ०, १/६४/७**

यो गृणाति शब्दयति तम् ।

– ऋ०, ५/५६/४

गिरति गृणाति वा स गिरिः गोत्रमक्षिरोगः पर्वतो मेघो वा । – उ०को०, ४/१४३

✓गॄ + निगरणे शब्दे च + इः प्रत्ययः (कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च – उ०को०, ४/१४३) ऋकारान्तस्य धातोरङ्गस्य इकारादेशश्च (ऋत इद्धातोः – अष्टा०, ७/१/१००) ।

## गिरित्र

गिरीन् विद्योपदेशकान् मेघान् वा त्रायते रक्षति तत्सम्बुद्धौ । – यजु०, १६/३

गिरि + ✓त्रैङ – पालने + डः प्रत्ययः ।

## गिरिचराय

यो गिरिषु पर्वतेषु चरति तस्मै जङ्गलाय।

– यजु०, १६/२२

(च०ए०व०) – गिरि + ✓चर – गतौभक्षणे च + टः प्रत्ययः (चरेष्टः – अष्टा०, ३/२/१६) ।

## गिरिश

यो गिरिषु पर्वतेषु मेघेषु वा शेते तत्सम्बुद्धौ।

– यजु०, १६/४

गिरि + ✓शीङ् – शये + डः प्रत्ययः (गिरौ डश्छन्दसि – अष्टा०वा०, ३/२/१५) ।

## गिरिशन्तः

यो गिरिणा मेघेन सत्योपदेशेन वा शं सुखं तनोति तत्सम्बुद्धौ । – यजु०, १६/३

गिरि + शं + ✓तनु – विस्तारे + डः प्रत्ययः ।

## गिरिष्ठा

यो गिरौ मेघे तिष्ठति । – ऋ०, ३/४८/२

यो गिरौ तिष्ठति ।

– ऋ०, ५/५६/४, १/१५४/२

गिरौ तिष्ठतीति, गिरिष्ठा । – यजु०, ५/२०

यो गिरौ तिष्ठति सः । – यजु०, १८/७१

गिरि + ✓ष्ठा – गतिनिवृत्तौ + क्विप् प्रत्ययः ।

## गिर्वणः

गीर्भिर्वन्यते संभज्यते स गिर्वणः ।

– ऋ०, १/५/७

यो गीर्भिर्वन्यते सम्भज्यते तत्सम्बुद्धौ ।

– ऋ०, १/४५/२

यो गीर्भिर्वेदविद्या संस्कृतिभिर्वाग्भिर्वन्यते सम्भज्यते तत्सम्बुद्धौ । – ऋ०, १/५७/४

यो गीर्भिर्वन्यते याच्यते तत्सम्बुद्धौ ।

– ऋ०, ३/४०/६, ३/४१/४

यो गीर्यते याच्यते तत्सम्बुद्धौ ।

– ऋ०, ३/५१/१०, ६/४५/१३

यो गीर्भिर्वनति संभजति वनुते वा तम् ।

– ऋ०, ६/३४/३

गिरः सुशिक्षितावाचो वनन्ति सम्भजन्ति वा तस्मै । – यजु०, ३४/१६

गिर् + ✓वन् – सम्भक्तौ अथवा ✓वनु – याचने + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन्–उ०को०, ४/१८९)।

## गिर्वाहः

गीर्भिर्वेदस्थवाग्भिः रुह्यते प्राप्यते यस्तत्संबुद्धौ । – ऋ०, १/३०/५

यो गिरो विद्यावाचो वहति तस्मै ।

– ऋ०, १/६१/४

यो गिरा वहति प्राप्यते वा तम् ।

– ऋ०, ४/४४/१

ये गिरो वहन्ति प्रापयन्ति ते ।

– ऋ०, ६/२४/६

गिर + ✓वह – प्रापणे + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) ।

## गीः

**गायन्ति पदार्थान् यया सा । – ऋ०, ५/४३/८**

✓गॄ – शब्दे + क्विप् प्रत्ययः, रकारान्तस्य धातोः पदस्य उपधायाः इको दीर्घत्वं ( र्वोरुपधाया दीर्घ इकः – अष्टा०, ८/२/७६ ) ।

## गुडः

**गवतेऽव्यक्तशब्दं करोतीति गुडः गोल इक्षुपाको वा । – उ०को०, १/११५**

✓गुङ् – अव्यक्ते शब्दे + डः प्रत्ययः ( क्वादिभ्यः कित् – उ०को०, १/११५ ) ।

## गुडेरः

**गुडति रक्षति स गुडेरः रक्षकः । – उ०को०, १/५८**

✓गुड – रक्षायां + एरक् प्रत्ययः ( पतिकठिकुठिगडिगुडिदंशिभ्य एरक् – उ०को०, १/५८ ) ।

## गुधेरः

**गुधति सर्वतो वेष्टयतीति गुधेरः रक्षको वा । – उ०को०, १/६१**

✓गुध – परिवेष्टने + एरक् प्रत्ययः ( मूलेरादयः – उ०को०, १/६१ ) ।

## गुपिलः

**गोपायति रक्षति प्रजा इति गुपिलः राजा वा । – उ०को०, १/५६**

✓गुप – रक्षणे + इलच् प्रत्ययः ( गुपादिभ्यः कित् – उ०को०, १/५६ ) ।

## गुरुः

**गृणात्युपदिशति वेदशास्त्रविद्यामाचारं च स गुरुः आचार्यः पिता वा।– उ०को०, १/२४**

**यो धर्म्यान् शब्दान् गृणात्युपदिशति स गुरुः । – स० प्र० ( प्रथमसमुल्लासः )**

✓गॄ – शब्दे + कुः प्रत्ययः धातोः उकारादेशः ( कृग्रोच्च – उ०को०, १/२४ ) ।

## गुर्विणी

**गर्वति प्राप्नोति गर्वयति मुञ्चति वा सा गुर्विणी गर्भिणी वा । – उ०को०, २/५४**

✓गर्व – दर्पे माने उद्यमने वा + इनन् प्रत्ययः धातोः अतः उत्वं ( गर्वेरत उच्च – उ०को०, २/५४ ) स्त्रियां ङीप् प्रत्ययः ।

## गुल्फः

**गलति भक्षयतीति गुल्फः पाद ग्रन्थिर्वा। – उ०को०, ५/२६**

✓गल – अदने + फक् प्रत्ययः धातोः अकारस्य उत्वं ( कलिगलिभ्यां फगस्योच्च – उ०को०, ५/२६ )।

## गुवाकः

**गुवति पुरीषमुत्सृजतीति गुवाकः पूगीफलं वा । – उ०को०, ४/१५**

✓गु – पुरीषोत्सर्गे + आकः प्रत्ययः ( पिनाकादयश्च – उ०को०, ४/१५ ) ।

## गुहा

**गुह्यन्ते संव्रियन्ते सकला विद्या यया बुद्ध्या तस्याम् । – यजु०, ८/९**

✓गुहे – संवरणे + अङ् प्रत्ययः स्त्रियां ।

## गुहिलः

**गूहते वृक्षैराच्छादितो भवतीति गुहिलं वनं वा । – उ०को०, १/५६**

✓गुहू – संवरणे + इलच् प्रत्ययः ( गुपादिभ्यः कित् – उ०को०, १/५६ ) ।

## गुहेरः

**गूहते येन स गुहेरः लोहघातनो वा । – उ०को०, १/६१**

✓गुहू – संवरणे + एरक् प्रत्ययः निपातनात् (मूलेरादयः – उ०को०, १/६१)।

## गूथः

यो येन वा गवतेऽव्यक्तशब्दं करोति तद् गूथम् अपान मार्गः पुरीषं वा ।

– उ०को०, २/१२

✓गुङ् – अव्यक्ते शब्दे + थक् प्रत्ययः (तिथपृष्ठ-गूथयूथप्रोथाः – उ०को०, २/१२) धातोः उकारस्य दीर्घश्चेति ।

## गृत्सः

यो गृणाति तं मेधाविनम् । – ऋ०, ३/१९/१

यो गृणाति स मेधावी । – ऋ०, ४/५/२

ये गृणन्ति पदार्थगुणान् स्तुवन्ति तेभ्यो विद्वद्भ्यः । – यजु०, १६/२५

गृध्यति अभिकाङ्क्षतीति गृत्सः कामो वा । – उ०को०, ३/६९

✓गृधु – अभिकांक्षायां + सः प्रत्ययः (गृधिपण्योर्दकौ च – उ०को०, ३/६९)।

## गृधुः

गृध्नोत्यभिकाङ्क्षते येन स गृधुः कामो वा । – उ०को०, १/२३

✓गृधु – अभिकांक्षायां + कुः प्रत्ययः (पृ भिदिव्यधिगृ-धिधृषिहृषिभ्यः – उ०को०, १/२३)।

## गृध्रः

गृध्नोत्यभिकाङ्क्षतीति गृध्रः पक्षिविशेषो वा । – उ०को०, २/२४

✓गृधु – अभिकांक्षायां + क्रन् प्रत्ययः (सुसूधाञ्-गृधिभ्यः क्रन् – उ०को०, २/२४)।

## गृहपते

गृह्णन्ति स्थापयन्ति पदार्थान् यस्मिन् ब्रह्माण्डे, शरीरे, निवासार्थे वा गृहे तस्य यः पतिःपालयिता तत्सम्बद्धौ ।

– यजु०, २/२७

✓ग्रह – उपादाने + कः प्रत्ययः (गेहे कः – अष्टा०, ३/१/१४४) ग्रह धातोः सम्प्रसारणं (ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृ-ज्जतीनां ङिति च – अष्टा०, ६/१/१६) > गृह + ✓पा – रक्षणे + डतिः प्रत्ययः (पातेर्डतिः – उ०को०, ४/५७) डित्सामर्थ्यात् धातोः टिलोपत्वात् पतिः ।

## गृहयाय्यः

गर्हयति पदार्थान् गृह्णातीति गृहयाय्यः गृहस्वामी वाः । – उ०को०, ३/९६

✓गृह – ग्रहणे + आय्यः प्रत्ययः (श्रुदक्षिस्पृहिगृहिभ्य आय्यः – उ०को०, ३/९६) आय्य प्रत्यये णेरयादेशः।

## गृहाः

गृह्णन्ति विद्यादिपदार्थान् येषु तान् ।

– यजु०, २/३२

गृह्णन्ति ब्रह्मचर्याश्रमानन्तरं गृहाश्रमं ये मनुष्यास्तत्संबुद्धौ । – यजु०, ३/४१

ये गृह्णन्ति ते गृहस्थादयः । – यजु०, १८/४४ (प्र०ब०व०) – ✓गृह – ग्रहणे अथवा ✓ग्रह – उपादाने + कः प्रत्ययः (गेहे कः – अष्टा०, ३/१/१४४)।

## गेष्णुः

गायति शब्दं करोतीति गेष्णुः गाथको वा । – उ०को०, ३/१६

✓गा – स्तुतौ + इष्णुच् प्रत्ययः (गादाभ्यामिष्णुच् – उ०को०, ३/१६)।

## गोजाः

यो गोषु पृथिव्यादिषु जातः ।

– ऋ०, ४/४०/५

यो गाव इन्द्रियाणि पशून् वा जनयति सः । -- यजु०, १२/१४

गो + ✓जनि – प्रादुर्भावे + डः प्रत्ययः ( अन्येष्वपि दृश्यते – अष्टा०, ३/२/१०१ ) ।

## गोजिते

यो गां जयति तस्मै । – ऋ०, २/२१/१

( च०ए०व० ) – गो + ✓जि – जये + क्विप् प्रत्ययः तुगागमश्च ।

## गोतमः

गच्छतीति गोः स्तोता सोऽतिशयितः सः। – ऋ०, १/६२/१३

गच्छतीति गोः सोऽतिशयितो गोतमस्तस्मै भृशं मार्गे गन्त्रे जनाय । – ऋ०, १/८५/२२

गो + तमप् प्रत्ययः अतिशायने ।

## गोत्रं

गवते शब्द्यते इति गोत्रं नाम वंशो वा गोत्रा पृथिवी । – उ०को०, ४/१६७

✓गुङ् – अव्यक्ते शब्दे + त्रः प्रत्ययः ( गुधृवीपचिवचियमिसदिक्षदिभ्यःस्त्रः – उ०को०, ४/१६७ ) ।

## गोत्रभिद्

यः शत्रूणां गोत्राणि भिनत्ति तम् । – यजु०, १७/३८

यो गोत्रं मेघं भिनत्ति सः ।– यजु०, २०/३८

गोत्र + भिदिर् – विदारणे + क्विप् प्रत्ययः ।

## गोदाः

यो गा वाण्यादीन् ददाति सः । – ऋ०, ३/३०/२१

यो गां धेनुं ददाति सः । – ऋ०, ४/२२/१०

ये गाः सुशिक्षिता वाचो धेनुं वा ददति। – ऋ०, ५/४२/८

गो-✓दा – दाने + क्विप् प्रत्ययः ।

## गोधुक्

यो गां दोग्धि । – ऋ०, १/१६४/२६

गो + ✓दुह – प्रपूरणे + क्विप् प्रत्ययः ( सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गे क्विप् – अष्टा०, ३/२/६१ ) ।

## गोधुमः

गुध्यति वेष्टयतीति गोधूमः अन्नविशेषो वा । – उ०को०, ५/२

✓गुध – परिवेष्टने + ऊमः प्रत्ययः ( गुधेरुमः – अष्टा०, ५/२ ) ।

## गोपीथः

गां वाणीं पृथिवीं वा पातीति गोपीथः पण्डितो राजा वा । – उ०को०, २/९

गो + ✓पा – रक्षणे + थक् प्रत्ययः ( निशीथगोपीथावगाथः – उ०को०, २/९ ) ।

## गोभाजः

ये गां पृथिवीं भजन्ते ते । – यजु०, १२/७१

ये गाः पृथिवीं वाचमिन्द्रियाणि किरणान् वा भजन्ति ते । – यजु०, ३५/४

( प्र०ब०व० ) – गो + ✓भज – सेवायां + ण्विः प्रत्ययः ( भजोण्विः – अष्टा०, ३/२/६२ ) ।

## गोमती

गावो भूयांसः स्तोतारो विद्यन्ते यस्यां सा। – ऋ०, १/८/८

गो + मतुप् प्रत्ययः ततः स्त्रियां ङीप् ।

## गोमृगः

यो गां मार्ष्टि शुन्धति सः । – यजु०, २४/३०

( गवाकृति पशुविशेषः ) गो + ✓मृजूष् – शुद्धौ + घः प्रत्ययः ।

## गोवित्

गौः प्रशस्ता वाक् गावः स्तोतारश्च विद्यन्ते यस्मिन् तत् । – ऋ०, १/९/७

गां भूमिं विन्दति येन तम् ।

– ऋ०, १/८२/४

यो गा वाचो धेनुः पृथिवीं वा विन्दति सः । – यजु०, १७/३७

योऽरीणां गां भूमिं विन्दति तम् ।

– यजु०, १७/३८

गो + √विद्लृ – लाभे सत्तायां + क्विप् प्रत्ययः ।

## गोरोचनं

रोचतेऽसौ रोचना गोरोचनं औषधं वा ।

– उ०को०, २/७८

गो + √रुच – दीप्तावभिप्रीतौ + युच् प्रत्ययः बाहुलकात् ( बहुलमन्यत्रापि – उ०को०, २/७८ ) ।

## गोषणः

यो गाः सुनते याचते तत्संबुद्धौ ।

– ऋ०, ४/३२/२२

गो + √षणु – दाने + कः प्रत्ययः ।

## गोषतमाः

ये गा वाचः सनन्ति सेवन्ते ततोऽतिशयिताः । – ऋ०, ६/३३/५

( प्र०ब०व० ) – गो + √षण – सम्भक्तौ + तमप् प्रत्ययः ।

## गोषादीः

या गाः सादयन्ति हिंसयन्ति ताः पक्षिणीः।

– यजु०, २४/२४

गो + √षद्लृ – विशरणगत्यवसादनेषु + अण् प्रत्ययः स्त्रियां ङीप् प्रत्ययः ।

## गोषुयुधः

ये गोषु युध्यन्ते तान् । – ऋ०, ६/६/५

( द्वि०ब०व० ) गोषु ( सप्तम्यान्त ) + √युध – सम्प्रहारे + कः प्रत्ययः ।

## गोष्ठं

गावस्तिष्ठन्ति यस्मिन् स्थले।

– ऋ०, ६/२८/१

गौर्वाणी तिष्ठति यस्मिन्नध्ययनाध्यापने तं व्यवहारम् । – यजु०, १/२६

गौः पृथिवी तिष्ठति यस्मिन् तदन्तरिक्षम्।

– यजु०, १/२६

गावः पशव इन्द्रियाणि यस्मिंस्तिष्ठन्ति तस्मिन् । – यजु०, ३/२१

गो –√ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ।

## गोहा

यो गां हन्ति । – ऋ०, ७/५६/१७

गो –√हन् – हिंसागत्योः + क्विप् प्रत्ययः ।

## गौः

गच्छतीति गौः पृथिवी । – ऋ०, १/१६४/१७

या गच्छति सा भूमिः । – ऋ०, ३/७/२

या गच्छति सा । – ऋ०, ३/३०/१४

यो गच्छति स भूगोलः । – यजु०, ३/६

गच्छति यो यत्र यया वा सा गौः पशुरिन्द्रियं सुखं किरणो वज्रं चन्द्रमा भूमिर्वाणी जलं वा । – उ०को०, २/६७

√गम् – गतौ + डोः प्रत्ययः गोः णित्वात् वृद्धिः > गौ ।

## गौरः

यो गवि सुशिक्षितायां वाचि रमते सः ।

– ऋ०, ४/५८/२

गायति शब्दं करोतीति गौरः ।

– उ०को०, १/६५

**गवतेऽव्यक्तंशब्दयतीति गौरः श्वेतो रक्त वर्णो वा । – उ०को०, २/२८**

१. √गै – शब्दे + ओरन् प्रत्ययः निपातनात् धातोः आकारादेश ततः वृद्धि एकादेशः (किरोरादयश्च – उ०को०, १/६५) ।

२. √गुङ – अव्यक्ते शब्दे + रन् प्रत्ययः (ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्रेरामालाः – उ०को०, २/२८) धातोः उकारास्य औकारम् ।

## गनासु

**गन्तुं गमनयोग्यासु भूमिषु ।**

**– ऋ०, १/१६१/४**

(स०ब०व०) – √गम् – गतौ + नः प्रत्ययः बाहुलकात् (धापॄवस्यज्यतिभ्यो नः – उ०को०, ३/६) धातोः टिलोपः स्त्रियां टाप् च ।

## ग्लानिः

**ग्लायति यस्मिन् स ग्लानिः दौर्बल्यं दौर्मनस्यं वा । – उ०को०, ४/५१**

√ग्लै – हर्षक्षये + निः प्रत्ययः धातोः एकारस्य आकारत्वं (वहिश्रिश्रुयुर्द्रुग्लाहात्वरिभ्यो नित् – उ०को०, ४/५१) ।

## ग्लौः

**ग्लायति हर्षक्षयं करोतीति ग्लौः चन्द्रमा वा । – उ०को०, २/६४**

√ग्लै + हर्षक्षये + डौ प्रत्ययः (ग्लानुदिभ्यां डौः – उ०को०, २/६४) ।

## ग्रन्थिः

**यं ग्रथ्नाति समुदेति स ग्रन्थिः पर्व ।**

**– उ०को०, ४/१४०**

√ग्रन्थ – बन्धने + इः प्रत्ययः (खनिकष्यज्यसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च – उ०को०, ४/१४०) ।

## ग्रहणिः

**गृह्णातीति ग्रहणिः । – उ०को०, ५/६७**

√ग्रह – उपादाने + अनिः प्रत्ययः (ग्रहेरनिः – उ०को०, ५/६७) ।

## ग्रामः

**ग्रसतेऽत्ति या वा ग्रस्यते स ग्रामः ।**

**– उ०को०, १/१४३**

√ग्रस – अदने + मन् प्रत्ययः धातोः आकारादेशः (ग्रसेरा च – उ०को०, १/१४३) ।

## ग्रामजितः

**ये ग्रामं जयन्ति ते । – ऋ०, ५/५४/८**

(प्र०ब०व०) – ग्राम + √जि – जये + क्विप् प्रत्ययः तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९) ।

## ग्रावग्राभः

**यो ग्राव्णः स्तावकान् गृह्णाति सः ।**

**– ऋ०, १/१६२/५**

**यो ग्रावाणं गृह्णाति सः । – यजु०, २५/२८**

√ग्रा – अर्चनकर्मा + वनिप् प्रत्ययः (आतो मनिन्क्वनिब्वनिपश्च – अष्टा०, ३/२/७४) > ग्रावन् + √ग्रह – उपादने + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१) हकारस्य भकारः छन्दसि ।

## ग्रावहस्तासः

**ग्रावा स्तुतिसमूहो ग्रहणं दानं वा ग्रावाणः पाषाणादयो यज्ञशिल्पविद्यासिद्धिहेतवो हस्तेषु येषां ते । – यजु०, १/१५/७**

(प्र०ब०व०) ग्रावन् + √हन् – हिंसागत्योः + तन् प्रत्ययः (हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६) ।

## ग्रीवा

**निगलति या सा ग्रीवा शरीराङ्गं वा ।**

**– उ०को०, १/१५४**

√गॄ – निगरणे + वन् प्रत्ययः (शेवायह्वजिह्वाग्रीवाऽप्वामीवा – उ०को०, १/१५४) गॄ धातोः ग्री भावः निपातनात् ।

## ग्रीष्मः

**यो रसान् ग्रसते सः । – यजु०, १३/५५**
**ग्रसते शीतं रसादिकं वा स ग्रीष्मः ।**
**– उ०को०, १/१४९**

✓ग्रसु – अदने + मक् प्रत्ययः निपातनम् ग्रस धातोः ग्रीभावः षुगागमश्चेति ( घर्मग्रीष्मौ – उ०को०, १/१४९ )।

## घटिः

**घटतेऽसौ घटिः घटी । – उ०को०, ४/११८**

✓घट् – चेष्टायां + इः प्रत्ययः ( सर्वधातुभ्य इन् – उ०को०, ४/११८ ) ।

## घर्मः

**जिघर्त्ति क्षरति नश्यति दीप्यते वा प्राणिनो जगद्वा येन स घर्मः यज्ञ आतपो ग्रीष्मऋतुः स्वेदो वा । – उ०को०, १/१४९**

✓घृ – क्षरणदीप्त्योः + मक् प्रत्ययः गुणश्च ( घर्मग्रीष्मौ – उ०को०, १/१४९ ) ।

## घर्मस्तुभे

**यो घर्मं यज्ञं स्तोभति स्तौति तस्मै ।**
**– ऋ०, ५/५४/१**

( च०ए०व० ) – ✓घृ – क्षरणदीप्त्योः + मक् प्रत्ययः ( घर्मग्रीष्मौ – उ०को०, १/१४९ ) > घर्म + ✓स्तोभति – अर्चतिकर्मा + क्विप् प्रत्ययः ।

## घातनः

**हन्तीति घातनः मारको वा ।**
**– उ०को०, ५/४२**

✓हन् – हिंसागत्योः + युत् प्रत्ययः आद्यन्तयोः घकारः तकारश्च ( हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे – उ०को०, ५/४२ ) ।

## घासिः

**घसति भक्षयतीति घासिः अग्निर्वा ।**
**– उ०को०, ४/१३०**

✓घस्लृ – अदने + इण् प्रत्ययः घातोः वृद्धिश्च ( जनिघसिभ्यामिण् – उ०को०, ४/१३० ) ।

## घुण्डः

**घोणते भ्राम्यतीति घुण्डः भ्रमरो वा ।**
**– उ०को०, १/११५**

✓घुण – भ्रमणे + डः प्रत्ययः ( क्वादिभ्यः कित् – उ०को०, १/११५ ) ।

## घूर्णिः

**घुरति शब्दयतीति घूर्णिः ।– उ०को०, ४/५२**

✓घुर – भीमार्थशब्दयोः + निः प्रत्ययः बाहुलकात् धातोः वृद्धिश्च ( घृणिपृश्निपार्ष्णिचूर्णिभूर्णयः – उ०को०, ४/५२ ) ।

## घृणा

**जिघर्ति क्षरति चित्तं यया सा घृणा दौमनस्यं वा । – उ०को०, ३/४**

✓घृ – क्षरणदीप्त्योः + नक् प्रत्ययः बाहुलकात् स्त्रियां टाप् च ।

## घृणिः

**जिघर्ति क्षरति दीप्यते वा स घृणिः किरणो वा । – उ०को०, ४/५२**

✓घृ – क्षरणदीप्त्योः + निः प्रत्ययः ( घृणिपृश्निपार्ष्णिचूर्णिभूर्णयः – उ०को०, ४/५२ ) ।

## घृतं

**जिघर्ति सञ्चलति दीप्यते वा तत् घृतं उदकं सर्पिः प्रदीप्तं वा । – उ०को०, ३/८९**

✓घृ – क्षरणदीप्त्योः सेचने च + क्त प्रत्ययः ( अञ्जिघृसिभ्यः क्तः – उ०को०, ३/८९ ) ।

## घृतपृचा

**घृतेन प्रदीपनेनोदकेन वा सम्पृक्ते ।**
**– ऋ०, ६/७०/४**

घृत + ✓पृची – सम्पर्चने + क्विप् प्रत्ययः ।

**घृतप्रयाः**

यो घृतेन प्रीणाति सः । – ऋ०, ३/४३/३

घृत + ✓प्रीञ् – तर्पणे कान्तौ च + अच् प्रत्ययः ।

**घृतनिर्णिक्**

यो घृतमुदकं नितरां नेनेक्ति पुष्णाति सः।

यद्वा घृतस्य सुस्वरूपम् । – ऋ०, २/३५/४

घृत + निर् + ✓णिजिर् – शौचपोषणयोः + क्विप् प्रत्ययः ।

**घृतप्रतीकः**

ये घृतमाज्यं प्रत्येति तम् । – ऋ०, १/१४३/७

यो घृतमुदकं प्रत्याययति सः ।

– यजु०, ३५/१७

घृत + प्रति + ✓इण् – गतौ + कन् प्रत्ययः (इण् भीकापाशाशल्यतिमर्चिभ्यः कन् – उ०को०, ३/४३)।

**घृतप्रुषं**

यो यज्ञसिद्धेन घृतेन प्रुष्णाति स्निह्यति तम् । – ऋ०, १/४५/१

ये घृतमुदकं प्रोषयन्ति पूरयन्ति ते ।

– ऋ०, ६/४४/२०

घृत + ✓प्रुष – स्नेहनसेचनपूरणेषु + क्विप् प्रत्ययः।

**घृतप्वः**

घृतं पुनन्ति यास्ताः । – यजु०, ४/२

(प्र०ब०व०) – घृत + ✓पूञ् – पवने + क्विप् प्रत्ययः ।

**घृतश्रीः**

यो घृतं श्रयति घृतेन शुम्भमानस्तम् ।

– ऋ०, ५/८/३

घृत + ✓श्रिञ् – सेवायां + क्विप् प्रत्ययः धातोः दीर्घत्वञ्चेति ।

**घृतस्नाः**

या घृतमुदकं स्नान्ति शोधयन्ति ताः ।

– ऋ०, २/२६/१

याभिर्घृतमाज्यमुदकं वा स्नान्ति ताः ।

– ऋ०, ४/६/९

घृतमुदकं प्रदीप्तं व्यवहारं स्नान्ति शोधयन्ति ताः । – यजु०, ३४/५४

(प्र०ब०व०) घृत + ✓ष्णा – शौचे + कः प्रत्ययः।

**घृतस्नुः**

यो घृतं स्नाति शुन्धति । – ऋ०, ५/२६/२

यो घृतमुदकं स्नाति । – ऋ०, ५/७७/३

घृत + ✓ष्णा – शौचे + कुः प्रत्ययः ।

**घृतस्नुवः**

घृतमुदकं स्नुवन्ति प्रस्रवन्ति यास्ताः ।

– ऋ०, १/१६/२

(प्र०ब०व०) घृत + ✓स्नु – प्रस्रवणे + क्विप् प्रत्ययः (क्विप् च – अष्टा०, ३/२/७६) ।

**घृताची**

घृतं जलमञ्चति प्रापयतीति तां क्रियाम्।

– ऋ०, १/२/७

या घृतमुदकमञ्चति सा रात्री ।

– ऋ०, १/६७/३

या घृतमुदकमञ्चति प्राप्नोति साः ।

– ऋ०, ३/६/१

या घृतमुदकमञ्चति प्राप्नोति तां रात्रिम्।

– ऋ०, ३/१९/२

या घृतमुदकमञ्चति प्राप्नोति तया रात्र्या।

– ऋ०, ३/२७/१

या घृतमुदकमञ्चति सा । – ऋ०, ५/४३/११

या घृतमुदकमञ्चन्ति ता रात्री ।

– ऋ०, ७/४३/२

घृतमुदकमञ्चत इति घृताची, अग्निर्वा-य्वोर्धारणाकर्षणक्रिये । – यजु०, २/१९

घृतमाज्यमञ्चति प्राप्नोत्यनयाऽऽदा-नक्रियया सा । – यजु०, २/६

या होम क्रिया घृतमुदकमञ्चति प्रापयति सा । – यजु०, २/६

घृतमायुर्निमित्तमञ्चति प्राप्नोत्यनया सुनियमाचरणक्रियया सा । – यजु०, २/६

या घृतमाज्यादिकं जलं वाऽञ्चन्ति प्रापयन्ति ताः । – यजु०, ३/४

घृतमाज्यमुदकं वाञ्चति प्राप्नोति सा दीप्तिः । – यजु०, १५/१८

या घृतमुदकमञ्चन्ति ताः। – यजु०, १७/५९

या घृतमुदकमञ्चति तां रात्रिम् ।

– यजु०, ३३/५७

घृत + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९) नकार लोपः (अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४) अकारलोपश्च (अचः – अष्टा०, ६/४/१३८) च परतः पूर्वपदस्य दीर्घः (च्वौ – अष्टा०, ६/३/१३८) स्त्रियां ङीप् प्रत्ययश्चेति ।

## घृतासुतिः

घृतमासूयते येन सः । – ऋ०, १/१५६/१

घृत + आ + ✓षु – प्रसवैश्वर्ययोः + क्तिन् प्रत्ययः।

## घृष्वये

घर्षन्ति परस्परं सञ्चूर्णयन्ति येन तस्मै ।

– ऋ०, १/३७/४

(च०ए०व०) – ✓घृष-संघर्षे + क्विप् प्रत्ययः (कृविघृष्व्विद्वविस्थविकिकीदिवि – उ०को०, ४/५६) ।

## घृष्विः

घर्षति सिञ्चतीति घृष्विः वाहो वा ।

– उ०को०, ४/५६

✓घृष् – संघर्षे + विन् प्रत्ययः (कृविघृष्विछविस्थ-विकिकीदिवि – उ०को०, ४/५६) ।

## घोरः

यो हन्ति सः । – ऋ०, ७/२८/२

हन्तीति घोरं भयानकं वा। – उ०को०, ५/६४

✓हन् – हिंसागत्योः + अच् प्रत्ययः घातोः घुः आदेशः (हन्तेरच् घुर च – उ०को०, ५/६४) ।

## चकोरः

चकते तृप्यति स चकोरः पक्षिविशेषो वा । – उ०को०, १/६४

✓चक – तृप्तौ प्रतिघाते च + ओरन् प्रत्ययः (कठिचकिभ्यामोरन् – उ०को०, १/६४) ।

## चक्रं

क्रामति रथो येन तत् । – ऋ०, १/१२१/१३

चरति येन तत् । – ऋ०, ५/७३/३

१- ✓कृञ् – करणे + कः प्रत्ययः घञर्थे क विधानमिति द्वित्वात् पूर्वककारस्य चकार > चक्रं।
२- ✓चक – तृप्तौ प्रतिघाते च + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपि-वन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदि-भिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्ह-सिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## चक्रधरः

चक्रं धारयतीति चक्रधरः ।

– उ०को०, २/२२

चक्र + ✓डुधाञ् – धारणपोषणयोः + रक् प्रत्ययः बाहुलकात् (रोदेर्णिलुक् च – उ०को०, २/२२) ।

## चक्रुः

**करोतीति चक्रः कर्त्ता । – उ०को०, १/२२**

✓कृञ् – करणे + कुः प्रत्ययः द्वित्वं च पूर्व ककारस्य चकारः ( कुर्भ्रश्च – उ०को०, १/२२ ) ।

## चक्षुः

**चेष्टे नेनेक्ति नेत्रेन्द्रियम् । – ऋ०, ३/२६/७**

**चष्टे पश्यति येन तत् । – यजु०, ३६/१**

**चक्षते रूपमनुभवन्त्यनेन तत् चक्षुः नेत्रं वा । – उ०को०, २/११९**

✓चक्षिङ् – व्यक्तायां वाचि + उसिः प्रत्ययः शितेःआर्धधातुकः ख्याञादेशाभावश्च ( चक्षेः शिच्च – उ०को०, २/११९ ) ।

## चक्षुर्दाः

**चष्टेऽनेन तद्ददातीति । – यजु०, ४/३**

चक्षुष् + ✓डुदाञ् – दाने + क्विप् प्रत्ययः ।

## चङ्कुरः

**चङ्कति सर्वतो भ्रमति येन स चङ्कुरः रथो वा । – उ०को०, १/३८**

✓चङ्क – भ्रमणे ( सौत्रोधातुः ) + उरच् प्रत्ययः ( मन्दिवाशिमथि चतिचङ् क्यङ्किभ्य उरच् – उ०को०, १/३८ ) ।

## चञ्चरीकः

**चरति गच्छति भक्षयति वा स चञ्चरीकः भ्रमरो वा । – उ०को०, ४/२०**

✓चर – गतिभक्षणयोः + ईकन् प्रत्ययः धातोः द्वित्वं तथा अभ्यासस्य नुमागमश्च ( फर्फरीकादयश्च – उ०को०, ४/२० ) ।

## चटुलः

**चरति वर्षत्यावृणोति वा स चटुलः शोभनो वा । – उ०को०, १/९६**

✓चट – वर्षावरणयोः + उलच् प्रत्ययः बाहुलकात् ( हृषेरुलच् – उ०को०, १/९६ ) ।

## चण्डः

**चणति ददातीति चण्डः हिंसकस्तीव्रो वा । – उ०को०, १/११४**

✓चण – दाने गतौ च + डः प्रत्ययः ( ञमन्ताड्डः – उ०को०, १/११४ ) ।

## चण्डालः

**चण्डति कुप्यतीति चण्डालःमातङ्गो वा। – उ०को०, १/११७**

✓चण्ड – कोपे + आलञ् प्रत्ययः ( पतिचण्डि-भ्यामालञ् – उ०को०, १/११७ ) ।

## चण्डिला

**चमति भक्षयततीति चण्डिला काचिन्नदी वा । – उ०को०, १/५७**

✓चमु – भक्षणे + इलच् प्रत्ययः धातोः डुगागमश्च ( मिथिलादयश्च – उ०को०, १/५७ ) ।

## चतुरक्षः

**य खलु चतस्रः सेना अश्नुते व्याप्नोति स चतुरक्षः । – ऋ०, १/३१/१३**

चतुर् + ✓अशुङ् – व्याप्तौ + सः प्रत्ययः ( अशेर्देवने – उ०को०, ३/६५ ) ।

## चतुर्युगः

**यश्चतुर्षु युज्यते सः । – ऋ०, २/१८/१**

चतुर् + ✓युजिर् – योगे + घञ् प्रत्ययः ।

## चतुरः

**चतते याचते स चतुरः दक्षः कुशलो**

वा। – उ०को०, १/३८

✓चते – याचने + उरच् प्रत्ययः ( मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् – उ०को०, १/३८ ) ।

## चत्वारः

चतते याचतेऽसौ चतुः संख्यावाची वा चत्वारः । – उ०को०, ५/५८

चतु + आरन् प्रत्ययः ( चतेरारन् – उ०को०, ५/५८ )।

## चनः

चायते पूज्यतेऽनेन तत् चनः भक्तम् ।

– उ०को०, ४/२००

✓चायृ – पूजानिशामनयोः + असुन् प्रत्ययः ( नुडागमः मलोपः ह्रस्वश्च – उ०को०, ४/२०० ) ।

## चनोधाः

चनांस्यन्नानि दधतीति । – यजु०, ८/७

चनस् + ✓डुधाञ् – धारणपोषणयोः + क्विप् प्रत्ययः।

## चनोहितः

यश्चनांसि अन्नानि हिनोति प्रापयति सः।

– यजु०, २२/१६

चनस् + ✓हि – गतौ वृद्धौ च + क्तः प्रत्ययः ।

## चन्दनं

चन्दत्याह्लादयतीति चन्दनं सुगन्धिर्वृक्षो वा।

– उ०को०, २/७८

✓चदि – आह्लादने दीप्तौ च + युच् प्रत्ययः बाहुलकात् नुमागमश्च ( बहुलमन्यत्रापि – उ०को०, २/७८ ) ।

## चन्दिरं

चन्दन्त्याह्लादयन्ति येन स चन्दिरं चन्द्रमा हस्ती वा । – उ०को०, १/५१

✓चदि – आह्लादने दीप्तौ च + किरच् प्रत्ययः नुमागमश्च ( इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१ ) ।

## चन्द्रः

चन्दति चन्दयति वा स चन्द्रः ।

– स० प्र० ( प्रथमसमुल्लासः )

चन्दति हर्षयति वा स चन्द्रः कर्पूरश्चन्द्रमा वा । – उ०को०, २/१३

✓चदि – आह्लादने दीप्तौ च + रक् प्रत्ययः ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विवतिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ ) नुमागमश्च।

## चन्द्रमाः

यस्सर्वान् चन्दत्याह्लादयति सः ।

– यजु०, १८/४०

चन्द्रमानन्दं मिमीतेऽसौ चन्द्रमाः सोमो वा । – उ०को०, ४/२२८

चन्द्र + ✓माङ् – माने शब्दे च + असिः प्रत्ययः ( चन्द्रे मो डित् – उ०को०, ४/२२८ ) ।

## चपलं

चोपति मन्दं मन्दं गच्छति स चपलः क्षणिकं शीघ्रं वा । – उ०को०, १/१११

✓चुप – मन्दायां गतौ + कल प्रत्ययः धातोः उकारस्याकारादेशः ( चुपेरच्चोपधायाः – उ०को०, १/१११ ) ।

## चपेटः

चपति सान्त्वयतीति येन स चपेटः ।

– उ०को०, ४/८१

✓चप – सान्त्वने + अटन् प्रत्ययः ( शकादिभ्योऽटन् – उ०को०, ४/८१ ) ।

## चमरः

चमति भक्षयतीति चमरः मृगभेदो वा ।

– उ०को०, ३/१३२

✓चमु – भक्षणे + अरः प्रत्ययः ( अर्त्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् – उ०को०, ३/१३२ ) ।

## चमसः

ये चाम्यन्त्यदन्ति भोगान् येभ्यो मेघेभ्यस्ते।

– ऋ०, १/५४/९

चमति भक्षयति येन स चमसः ।

– उ०को०, ३/११७

✓चमु – अदने + असच् प्रत्ययः (अत्यविचमित-मिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् – उ०को०, ३/११७) ।

## चमूः

चमति भक्षयतीति चमूः शत्रुभक्षिणी सेना वा । – उ०को०, १/८०

✓चमु – भक्षणे + ऊः प्रत्ययः (कृषिचमितनिधनिस-र्जिखर्जिभ्य ऊः स्त्रियाम् – उ०को०, १/८०) ।

## चमूषदः

चमन्त्यदन्ति विनाशयन्ति शत्रुबलानि याभिस्ताश्चम्वः, ये चमूषु सेनासु सीदन्ति ते। – ऋ०, १/१४/४

ये चमूषु सेनासु सीदन्त्यवस्थिता भवन्ति।

– ऋ०, १/५४/९

(प्र०ब०व०) – चमू + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## चम्पा

चमति भक्षयतीति चम्पा नगरी वा ।

– उ०को०, ३/२८

✓चमु – भक्षणे + पः प्रत्ययः बाहुलकात् (खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः – उ०को०, ३/२८) स्त्रियां टाप् प्रत्ययश्च ।

## चम्रीषः

ये चमूभिः शत्रुसेना ईषन्ते हिंसन्ति ते ।

– ऋ०, १/१००/१२

✓चमु – भक्षणे + ✓ईष – गतिहिंसादर्शनेषु + क्विप् प्रत्ययः रेफादेशश्च ।

## चरकः

चरतीति चरकः वैद्यकशास्त्रं गन्ता वा ।

– उ०को०, २/३२

✓चर – गतौभक्षणे च + क्वुन् प्रत्ययः (क्वुन्शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२)।

## चरथं

चर्यते गम्यते भक्ष्यते यस्तम् ।

– ऋ०, १/५८/५

✓चर – गतौ भक्षणे च + अथः प्रत्ययः बाहुलकात् (शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः – उ०को०, ३/११३) ।

## चरमः

चरति गच्छति भक्षयतीति वा स चरमः अन्त्यः पश्चिमो वा । – उ०को०, ५/६९

✓चर – गतौ भक्षणे च + अमच् प्रत्ययः (चरेश्च – उ०को०, ५/६९) ।

## चरिः

चरतीति चरिः पशुर्वा । – उ०को०, ४/१४०

✓चर – गतौ + इः प्रत्ययः (खनिकष्यज्यसिवसिव-निसनिध्वनिग्रन्थिचरिभ्यश्च – उ०को०, ४/१४०)।

## चरित्रं

चरतीति चारित्रं वृत्तान्तं समाचारो वा इत्रच्प्रत्यये चरित्रं सुशीलम् ।

– उ०को०, ४/१७२

✓चर – गतौ + इत्र प्रत्ययः (अर्त्तिलूधूसूखनसहचर इत्रः – अष्टा०, ३/२/१८४) ।

## चरुः

चरति चर्यतेऽग्निना भक्ष्यत इति चरुः यज्ञपाको वा । – उ०को०, १/७

✓चर – गतिभक्षणयोः + उः प्रत्ययः( भृमृपृशीङ्तृ - चरित्सरितनिधनिमिमस्जिभ्य उः – उ०को०, १/७ )।

## चर्पटः

चपति सान्त्वयति येन स चपेटः चर्पटो वा प्रसृताङ्गुलिहस्तो वा ।

– उ०को०, ४/८१

✓चप – सान्त्वने + अटन् प्रत्ययः ( शकादिभ्योऽटन् – उ०को०, ४/८१ ) रेफागमश्चेति ।

## चर्म

चरति गच्छति येन तत् चर्म प्रसिद्धम् ।

– उ०को०, ४/१४५

✓चर – गतौ + मनिन् प्रत्ययः ( सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५ ) ।

## चर्षणीधृतः

यश्चर्षणीन् मनुष्यान्धरति तस्य ।

– ऋ०, ३/३७/४

चर्षणयो मनुष्यास्तान् धरन्ति पोषयन्ति ते । – यजु०, ७/३३

✓कृष – विलेखने + अनिः प्रत्ययः बाहुलकात् ( अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिः – उ०को०, २/१०२ ) कृष धातोः आदौ चकारादेशः > चर्षणि + ✓धृञ् – धारणे + क्विप् प्रत्ययः तुगागमश्चेति ।

## चर्षणीप्राः

यश्चर्षणीन्मनुष्यान् प्रति विद्यया पिपर्त्ति सः । – ऋ०, १/१७७/१

यः चर्षणीन्मनुष्यान्सत्यविद्याशिक्षासुशीलः प्राति प्रपूर्ति सः । – ऋ०, ३/३४/७

यश्चर्षणीन् मनुष्यान् प्राति व्याप्नोति सः।

– ऋ०, ४/२/१३

यश्चर्षणीन्मनुष्यान्प्राति व्याप्नोति तम् ।

– ऋ०, ६/४९/१५

यश्चर्षणीन्मनुष्यान्प्राति व्याप्नोति सः।

– ऋ०, ७/३१/१०

चर्षणीन् मनुष्यान् प्राति सुखैः प्रपूरयति सः । – यजु०, ७/३९

चर्षणिः + प्रा – प्रपूरणे + क्विप् प्रत्ययः ।

## चर्षणीसहां

ये चर्षणीन् मनुष्यसमूहान् सहन्ते तेषाम्।

– यजु०, २८/१

( ष०ब०व० )चर्षणी + ✓षह – मर्षणे + क्विप् प्रत्ययः ।

## चषकः

चषति भक्षयत्यस्मिन्निति चषकःपानपात्रं शालं वा । – उ०को०, २/३२

✓चष – भक्षणे + क्वुन् प्रत्ययः ( क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२ ) ।

## चषालः

चषति भक्षयतीति चषालः यूपकङ्कणं वा । – उ०को०, ४/१०७

✓चष – भक्षणे + आलच् प्रत्ययः ( सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः – उ०को०, ४/१०७ ) ।

## चाटुः

चटति भिनत्तीति चाटुः प्रियं वचो वा।

– उ०को०, १/३

✓चट – भेदने + ञुण् प्रत्ययः धातोः उपधायाः दीर्घत्वं ( दॄसनिजनिचरिचटिरहिभ्यो ञुण् – उ०को०, १/३ ) ।

## चात्वालः

चतते याचतेऽसौ चात्वालः यज्ञकुण्डं दर्भो वा । – उ०को०, १/११६

✓चते – याचने + वालञ् प्रत्ययः धातोः उपधायाः

वृद्धिश्च (स्थाचतिमृजेरालज्वालजालीयचः – उ०को०, १/११६)।

## चारित्रं

**चरतीति चारित्रं वृत्तान्तं समाचारो वा।**
**– उ०को०, ४/१७२**

✓चर – गतौ भक्षणे च + णित्रन् प्रत्ययः धातोः उपधायाः वृद्धिश्च (चरेर्वृत्ते – उ०को०, ४/१७२)।

## चारुः

**चरति चक्षुरादिष्विति चारुः शोभनम् ।**
**– उ०को०, १/३**

✓चर – गतौ भक्षणे च + ञुण् प्रत्ययः (दॄसनिजनिचरिचटिरहिभ्यो ञुण् – उ०को०, १/३) उपधावृद्धिश्च (अत उपधायाः – अष्टा०, ७/२/११६)।

## चिकित्वान्

**केतयति जानातीति चिकित्वान् ।**
**– ऋ०, १/२५/१०**

✓कित् – ज्ञाने + क्वसु प्रत्ययः धातोः द्वित्वमिति।

## चिकित्सा

**यश्चिकित्सति रोगपरीक्षां करोति तत्सम्बुद्धौ । – ऋ०, ६/४७/२०**

✓कित् – निवासे रोगापनयने च + सन् प्रत्ययः स्त्रियां टाप् प्रत्ययः।

## चिकुराः

**चिन्वन्त्येकीकुर्वन्ति यांस्ते चिकुराः ।**
**– उ०को०, १/४१**

✓चि – अव्यक्ते शब्दे एकीकरणे च + उरच् प्रत्ययः निपातनात् धातोः कुगागमः (मद्गुरादयश्च – उ०को०, १/४१)।

## चिक्कणं

**चेतति जानाति येन तत् चिक्कणं स्निग्धं वा । – उ०को०, ४/१७६**

✓चिती – संज्ञाने + कण प्रत्ययः धातोः तकारस्य स्थाने ककारादेशः (चितेः कणः कश्च – उ०को०, ४/१७६)।

## चित्

**चेतयन्ति सञ्जानन्ति ये ते चितः ।**
**– यजु०, १/१८**

**यश्चेतति चेतयति संज्ञापयति सर्वान् सज्जनान् योगिनस्तच्चित्परं ब्रह्म ।**
**– स०प्र० (प्रथमसमुल्लासः)**

✓चिती – संज्ञाने + क्विप् प्रत्ययः।

## चित्पतिः

**चेतयति येन विज्ञानेन तस्य पतिः पालयिताऽधिष्ठातेश्वरो भवान् ।**
**– यजु०, ४/४**

✓चिती – संज्ञाने + ✓पा – रक्षणे + डतिः प्रत्ययः डित्सामर्थ्यात् धातोः उपधालोपः (पातेर्डतिः – उ०को०, ४/५७)।

## चित्रं

**चिन्वन्ति विद्यां यया ताम् ।**
**– ऋ०, २/२१/६**

**चिन्वन्ति यया ताम् । – यजु०, १७/७८**

**चीयते तत् चित्रं चित्रा नक्षत्रं वा ।**
**– उ०को०, ४/१६४**

✓चिञ् – चयने + क्त्रः प्रत्ययः (अमिचिमिशसिभ्यः क्त्रः – उ०को०, ४/१६४)।

## चित्रभानुः

**चित्रं भाति दीप्यतेऽसौ चित्रभानुः सूर्योऽग्निर्वा । – उ०को०, ३/३२**

चित्र + ✓भा – दीप्तौ + नुः प्रत्ययः (दाभाभ्यां नुः – उ०को०, ३/३२)।

## चित्रश्रवस्तमः

**चित्रमद्भुतं श्रवः श्रवणं यस्यः सोऽतिशयितः । – ऋ०, १/१/५**

चित्र + ✓श्रु – श्रवणे + असुन् प्रत्ययः अतिशायने तमप् प्रत्ययः ।

## चीरं

**चिनोतोति चीरं वल्कलं वा ।**

– उ०को०, २/२५

✓चिञ् – चयने + क्रन् प्रत्ययः धातोः उपधायाः दीर्घश्च ( शुसिचिमीनां दीर्घश्च – उ०को०, २/२५ )।

## चीवरं

**चिनोति तृणादिना चीयते वा स चीवरं वस्त्रं मुनिस्थानं वा ।** – उ०को०, ३/१

✓चिञ् – चयने + ष्वरच् प्रत्ययः ( छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः – उ०को०, ३/१ ) धातोः दीर्घादेशश्चेति ।

## चुक्रः

**चकते तृप्यति प्रतिहन्यते वा स चुक्रः अम्लमम्लवेतसमित्यादि ।** – उ०को०, २/१४

✓चक – तृप्तौ प्रतिघाते च + रक् प्रत्ययः, धातोः उपधायाः उत्वं ( चकिरम्योरुच्चोपधायाः – उ०को०, २/१४ ) ।

## चुब्रं

**चुम्बति यो येन वा तत् चुब्रं मुखं वा ।**

– उ०को०, २/२८

✓चुबि – वक्त्रसंयोगे + रन् प्रत्ययः निपातनात् ( ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः – उ०को०, २/२८ ) ।

## चूर्णिः

**चरति गच्छति भक्षयतिं चूर्णयति प्रेरयतीति वा चूर्णिः विरिणं वा ।** – उ०को०, ४/५२

✓चूर्ण – प्रेरणे + निः प्रत्ययः ( घृणिपृश्निपार्ष्णिचूर्णिभूर्णयः – उ०को०, ४/५२ ) ।

## चेतः

**चेतति जानाति येन तत् चेतः चित्तं वा।**

– उ०को०, ४/१८९

✓चिती – संज्ञाने + असुन् प्रत्ययः ( सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९ ) धातोः उपधायाः इकारस्य एकारत्वम् ।

## चेतनं

**चेतति येन तम् ।** – ऋ०, १/१७०/४

✓चिती – संज्ञाने + ल्युट् प्रत्ययः धातोः उपधायाः एकारत्वम् ।

## च्युपः

**च्यवते प्राप्नोति वदति वा येन स च्युपः मुखं वा ।** – उ०को०, ३/२४

✓च्युङ् – गतौ + पः प्रत्ययः ( च्युवः किच्चः – उ०को०, ३/२४ ) ।

## च्यौत्नः

**च्यवते गच्छतीति च्यौत्नं बलं वा ।**

– उ०को०, ४/१०४

✓च्युङ् – गतौ + त्नण् प्रत्ययः धातोः उपधायाः औत्वं ( जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्त्नण्क्निनशकस्यढडटोटयः – उ०को०, ४/१०४ ) ।

## छगलः

**छ्यति छिनत्तीति छगलः छागो वर्करो वा ।** – उ०को०, १/११३

✓छो – छेदने + कल प्रत्ययः धातोः गुगागम अकारश्चेति ( छो गुग्घ्रस्वश्च – उ०को०, १/११३ )।

## छत्रं

**छादयति घर्मादिकमपवारयतीति छत्रं इति प्रसिद्धम् ।** – उ०को०, ४/१५९

✓छद – अपवारणे + ष्ट्रन् प्रत्ययः ( सर्वधातुभ्यः ष्ट्रन् – उ०को०, ४/१५९ ) ।

## छत्वरं

**छदतेऽपवारयतीति छत्वरः गृहं लताच्छादितं स्थानं वा ।** – उ०को०, ३/१

✓छद – अपवारणे + ष्वरच् प्रत्ययः

( छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वर-कट्वरसंयद्वराः – उ०को०, ३/१ ) ।

## छदिः

छादयति येन तत् छदिः छादनं तृणादिछा-दनसाधनं वा । – उ०को०, २/१०८

✓छद – अपवारणे + इसिः प्रत्ययः ( अर्चिशुचिहुसृपि-छादिछर्दिभ्य इसिः – उ०को०, २/१०८ ) ।

## छद्म

छादयतीति छद्म माया वा।–उ०को०,४/१४५

✓छद – संवरणे + मनिन् प्रत्ययः ( सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५ ) मन् प्रत्ययः परतः धातोः उपधायाः ह्रस्वः ( इस्मन्त्रन्क्विषु च – अष्टा०, ६/४/९७ ) ।

## छन्दः

चन्दति हृष्यति येन दीप्यते वा तत् छन्दः।

– उ०को०, ४/२१९

✓चदि – आह्लादने दीप्तौ च + असुन् प्रत्ययः धातोः आदेः छकारादेश्च ( चन्देरादेश्च छः – उ०को०, ४/२१९ ) नुडागमः ( छदिरहो नुद् ह्रस्वश्च – सर० क०भ०, २/१/३३१ ) ।

## छमण्डः

छमति भक्षयतीति छमण्डः मातापितृशून्यो वा । – उ०को०, १/१२९

✓छमु – अदने + अण्डन् प्रत्ययः बाहुलकात् ( अण्डन् कृसृभृवृञः – उ०को० १/१२९ ) ।

## छर्दिः

छर्दति यत्तत् छर्दिः वमनं जठरं व्याधिर्वा।

– उ०को०, २/१०८

✓छर्द – वमने + इसिः प्रत्ययः ( अर्चिशुचिहुसृ-पिछादिछर्दिभ्य इसिः – उ०को०, २/१०८ ) ।

## छलं

छ्यति छिनत्ति पराभिप्रायमिति छलम् ।

– उ०को०, १/१०४

✓छो – छेदने + कल प्रत्ययः बाहुलकात् छोकार धातोः छकारः ( कलस्तृपश्च – उ०को०, १/१०४ )।

## छविः

छ्यति सूक्ष्मं करोतीति छविः दीप्तिर्वा ।

– उ०को०, ४/५६

✓छो – छेदने + क्विन् प्रत्ययः धातोः ओकारस्य अकारः ( कृविघृष्विछविस्थविकिकीदिवि – उ०को०, ४/५६ ) ।

## छागः

छ्यति छिनत्ति रोगान् येन तम् ।

– यजु०, २८/२३

छिनत्तीति छागः वर्करो वा ।

– उ०को०, १/१२४

✓छो – छेदने + गन् प्रत्ययः ( छापूखडिभ्यः कित् – उ०को०, १/१२४ ) ।

## छातः

छ्यति छिनत्तीति छातः दुर्बलो वा ।

– उ०को०, ३/८६

✓छो – छेदने + तन् प्रत्ययः ( हसिमृग्रिण्वामिद-मिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६ ) ।

## छाया

छ्यति प्रकाशमिति छाया प्रकाशावरणमु-त्कोचकप्रतिबिम्बो वा । – उ०को० ४/१०९

✓छो – छेदने + यः प्रत्ययः ( माछाशसिभ्यो यः – उ०को०, ४/१०९ ) स्त्रियां टाप् प्रत्ययश्च ।

## छित्वरं

छिनत्ति यत्तत् । – यजु०, १२/५४

छिनत्तीति छित्वरः धूर्तः शत्रुश्छेदनद्रव्यं वा । – उ०को०, ३/१

✓छिदिर् – द्वैधीकरणे + ष्वरच् प्रत्ययः ( छित्वरछत्व-रधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः – उ०को०, ३/१ ) ।

## छिदकं

**छिनत्ति येन तत् छिदकं वज्रो वा ।**

– उ०को०, २/३७

✓छिदिर् – द्वैधीकरणे + क्वुन् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/३७) ।

## छिदिः

**छिनत्त्यनेन स छिदिः परशुर्वा ।**

– उ०को०, ४/१४३

✓छिदिर् – द्वैधीकरणे + इः प्रत्ययः (कृगृशृपृ-कुटिभिदिछिदिभ्यश्च – उ०को०, ४/१४३) ।

## छिदिरः

**छिनत्ति येन स छिदिरः असिः कुठारो वा ।** – उ०को०, १/५१

✓छिदिर् – द्वैधीकरणे + किरच् प्रत्ययः (इषिमदिमु-दिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरु-चिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१)।

## छिद्रं

**छिद्यते यत्तत् छिद्रं विवरं वा ।**

– उ०को०, २/१३

✓छिदिर् – द्वैधीकरणे + रक् प्रत्ययः (स्फायित-ञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिवन्द्युन्दिश्वितिवृ-त्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिद-सिदम्भिवसिवाशिशीङ्हंसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## छेदिः

**छिनत्तीति छेदिः वर्धकिश्छेत्ता वा ।**

– उ०को०, ४/११९

✓छेद – द्वैधीकरणे + इन् प्रत्ययः (हपिषिरुहिवृतिवि-दिछिदिकीर्त्तिभ्यश्च – उ०को०, ४/११९) ।

## जगत्

**यद् गच्छति तत् ।** – यजु०, १८/५

**गच्छतीति जगत् ।** – उ०को०, २/८४

(१)✓गम् – गतौ + क्विप् प्रत्ययः धातोः द्वित्वं (द्युतिगमिजहातीनां द्वे च वा० – अष्टा०, ३/२/११८) आद्युदात्तगकारस्य जकारः तुगागमश्चेति ।

(२)✓गम् – गतौ + अति प्रत्ययः निपातनात्, शतृवद्भावः धातोः जगादेशश्च (वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च – उ०को०, २/८४) ।

(३) जनि – प्रादुर्भावे > ज > जन्मति, ✓गम्लृ – गतौ > ग > गच्छति, ✓ष्ठा – गतिनिवृत्तौ > त् > तिष्ठतीति > जगत् ।

## जगती

**गच्छति सर्वं जगद्यस्यां सा ।**

– यजु०, १४/१८

✓गम् – गतौ + अतिः प्रत्ययः निपातनात् शतृवद्भाव, धातोः जगादेशः (वर्तमाने पृषद् बृहन्महज्जगच्छतृवच्च – उ०को०, २/८४) स्त्रियां ङीप् प्रत्ययः ।

## जघनं

**हन्ति येन यद् वा हन्यते तत् जघनम् । जोनारु परिभागो वा।**

– उ०को०, ५/३२

✓हन् – हिंसागत्योः + अच् प्रत्ययः धातोर्द्वित्वञ्च (हन्तेः शरीरावयवे द्वे च – उ०को०, ५/३२) हकारस्य घकारः ।

## जघ्नुः

**हन्तीति जघ्नुः हन्ता ।** – उ०को०, १/२२

✓हन् – हिंसागत्योः + कुः प्रत्ययः द्वित्वं च (कुर्भ्रश्च – उ०को०, १/२२) अङ्गस्य उपधालोपश्च (गमहनजनखनघसां लोपः क्ङित्यनङि – अष्टा०, ६/४/९८) ।

## जङ्घा

**जायतेऽसौ जङ्घा जानोरधोभागो वा ।**

– उ०को०, ५/३१

✓हन् – हिंसागत्योः + अच् प्रत्ययः बाहुलकात्, धातोः जङ्घादेशश्च (अच् तस्य जङ्घ च - उ०को०, ५/३१) ततः स्त्रियां टाप् प्रत्ययः ।

## जटा

**जायतेऽसौ जटा दीर्घाः केशा वा ।**

– उ०को०, ५/३०

✓जनि – प्रादुर्भावे + टन् प्रत्ययः धातोः न लोपश्च (जनेष्टन् नलोपश्च – उ०को०, ५/३०) स्त्रियां टाप् प्रत्ययः ।

## जटायुः

**जटापूर्वात् जटायुः पक्षिराजः ।**

– उ०को०, २/११८

जटा + ✓इण – गतौ + उसिः प्रत्ययः (एतेर्णिच्च – उ०को०, २/११८) ।

## जटिः

**जटति सङ्घातं करोति जटिः जटाधारी वा ।** – उ०को०, ४/११८

✓जट – संघाते + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

## जठरं

**जायतेऽस्मादिति जठरं उदरं कठिनं वा ।**

– उ०को०, ५/३८

✓जनि – प्रादुर्भावे + अरः प्रत्ययः धातोः नकारस्य स्थाने ठकारदेशः (जनेररष्ठ च – उ०को०, ५/३८)।

## जतुः

**जायते प्रादुर्भूयतेऽनेनेति जतुः लाक्षा वा।**

– उ०को०, १/१८

✓जनी – प्रादुर्भावे + उः प्रत्ययः धातोः तान्तादेशश्च (फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च – उ०को०, १/१८) ।

## जत्रुः

**जायते तत् जत्रुः स्कन्धसन्धिर्वा ।**

– उ०को०, ४/१०२

✓जनी – प्रादुर्भावे + रुः प्रत्ययः धातोः तान्तादेशश्च (जत्र्वादयश्च – उ०को०, ४/१०२) ।

## जनंसह

**यो जनान् सहते ।** – ऋ०, २/२१/३

✓जनी – प्रादुर्भावे + घञ् प्रत्ययः उपधायाः वृद्धित्वाभावः (जनिवध्योश्च – अष्टा०, ७/३/३५) > जन + ✓षह् – मर्षणे + खच् प्रत्ययः मुमागमश्चेति।

## जनभृतः

**ये जनान् बिभ्रति ते ।** – यजु०, १०/४ (प्र०ब०व०) – जन + ✓भृञ् – भरणे + क्विप् प्रत्ययः ततः तुगागमश्चेति ।

## जनाषाट्

**यो जनान् सहते सः ।** – ऋ०, १/५४/११

जन + ✓षह – मर्षणे + ण्विः प्रत्ययः (छन्दसि सहः – अष्टा०, ३/२/६३), उपधा वृद्धिः, षत्वञ्च (सहे साडः सः – अष्टा० ८/३/५६) ततः पूर्वपदस्य च दीर्घत्वं (अन्येषामपि दृश्यते – अष्टा०, ३/६/१३७)।

## जनिः

**ये जनयन्ति ते पतयः ।** – ऋ०, १/६२/१०

**या जायन्ते ता प्रजाः ।** – ऋ०, १/७२/१

**जायतेऽसौ जनिः जननं वा ।**

– उ०को०, ४/१३०

✓जनी– प्रादुर्भावे + इण् प्रत्ययः (जनिघसिभ्यामिण् – उ०को०, ४/१३०) ।

## जनित्वः

**जायते जनपति वा स जनित्वः मातापितरौ वा ।** – उ०को०, ४/१०४

✓जनी – प्रादुर्भावे + इत्वन् प्रत्ययः (जनिदाच्युसृवृम-दिषमिनमिभृञ्भ्य इत्वन्त्वन्त्लण्णिक्नन्शक्स्यढडटोटचः – उ०को०, ४/१०४) ।

## जनिदां

**या जनिं जन्म ददाति ।** – ऋ०, ४/१७/१६

जनि + ✓डुदाञ् – दाने + क्विप् प्रत्ययः ।

## जनिमा

जायत इति जनिमा जन्म ।

– उ०को०, ४/१४९

जनि + इमनिन् प्रत्ययः ( जनिमृङ्भ्यामिमनिन् – उ०को०, ४/१४९ ) ।

## जनुः

जायते यत्तत् जनुः जनुषी जननं वा ।

– उ०को०, २/११५

✓जनी – प्रादुर्भावे + उसि प्रत्ययः ( जनेरुसिः – उ०को०, २/११५ ) ।

## जन्तुः

जन्यते शरीरादि धारणेन प्रादुर्भवति स जन्तुः जीवः । – उ०को०, १/७३

✓जनी – प्रादुर्भावे + तुः प्रत्ययः ( कमिमनिजनिगाभायाहिभ्यश्च – उ०को०, १/७३ ) ।

## जन्म

जायते तत् जन्म उत्पत्तिर्वा । – उ०को०, ४/१४५

जायते यत्र तत् जन्म उत्पत्तिः ।

– उ०को०, ४/१४५

१- ✓जनी – प्रादुर्भावे + मक् प्रत्ययः बाहुलकात् ( इषियुधीन्धिदसिश्याधूसुभ्यो मक् – उ०को०, १/१४५ )।

२- ✓जनी – प्रादुर्भावे + मनिन् प्रत्ययः ( सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५ )।

## जन्यं

व्यवस्थित विभाषया पत्न्या जाया नित्यमात्वमन्यत्र जन्यं निर्वादो युद्धं वा ।

– उ०को०, ४/१११

✓जनी – प्रादुर्भावे + यक् प्रत्ययः ( जनेर्यक् – उ०को०, ४/१११ ) ।

## जन्युः

जायते प्रादुर्भवतीति जन्युः शरीरी वा ।

– उ०को०, ३/२०

✓जनी – प्रादुर्भावे + युच् प्रत्ययः ( यजिमनिशुन्धिदसिजनिभ्यो युच् – उ०को०, ३/२० ) ।

## जम्भकं

यो जम्भयति नाशयति तम् ।

– यजु०, ३०/१६

✓जभि – नाशने + क्वुन् प्रत्ययः ( क्वुन् बाहुलकात् बहुलमन्यत्रापि – उ०को०, २/३७ ) नुमागमश्चेति ।

## जम्भे

जम्भन्ते गात्राणि विनाम्यन्ते चेष्टयन्ते येन मुखेन तस्मिन् । – ऋ०, १/३७/५

जम्भन्ति गात्राणि विनामयन्ति येन मुखेन तस्मिन् । – यजु०, १५/१५

( स०ए०व० ) ✓जभी – गात्रविनामे + घञ् प्रत्ययः नुमागमश्चेति ( रधिजभोरचि – अष्टा०, ७/१/६१ )।

## जम्बः

जमति भक्षयतीति जम्बः पङ्को वा ।

– उ०को०, ४/९५

✓जमु – अदने + वन् प्रत्ययः निपातनात् ( उल्वादयश्च – उ०को०, ४/९५ ) ।

## जम्बूः

जमन्ति भक्षयन्ति यां सा जम्बूः वृक्षविशेषजातिर्वा । – उ०को०, १/९३

✓जमु – अदने+ ऊः प्रत्ययः ( अन्दूदृम्फूजम्बूकम्बूकफेलूकर्कन्धूदिधिषूः – उ०को०, १/९३ ) ।

## जम्बूकः

जम्बू इव कायति इति जम्बूकः ।

– उ०को०, ४/४१

जम्बू + ऊकः प्रत्ययः निपातनात् ( उलूकदयश्च – उ०को०, ४/४१ ) ।

## जयन्तः

जयतीति जयन्तः जयशीलः ।

– उ०को०, ३/१२८

√जि – जये + झच् प्रत्ययः (तॄभूवहिवसिभासिसधिगडिमण्डिजिनन्दिभ्यश्च – उ०को०, ३/१२८) प्रत्ययादि झकारस्यान्तादेशः (झोऽन्तः – अष्टा०, ७/१/३) अन्तः परतो णेरयादेशः (अयामन्ताल्वाय्येत्न्विष्णुषु – अष्टा०, ६/४/५५)।

## जरठः

जीर्यत्यवस्थाहीनो भवतीति जरठः पाण्डुरङ्गो वा। – उ०को०, १/१००

√जॄ– वयोहानौ + अठः प्रत्ययः बाहुलकात् (कमेरठः – उ०को०, १/१००)।

## जरन्तः

जीर्यति स जरन्तः महिषो वा।

– उ०को०, ३/१२६

√जॄ – वयोहानौ + झच् प्रत्ययः (जॄविशिभ्यां झच् – उ०को०, ३/१२६) प्रत्ययादि झकारस्यान्तादेशः (झोऽन्तः – अष्टा०, ७/१/३)।

## जरसानः

जीर्यति वयसा हीनो भवतीति जरसानः वृद्धो जनो वा। – उ०को०, २/८६

√जॄ – वयोहानौ + असानच् प्रत्ययः (छन्दस्यसानच् शुजृभ्याम् – उ०को०, २/८६)।

## जरायुः

जरां जीर्णतामेतीति जरायुः गर्भावरणं वा। – उ०को०, १/४

√जॄ – वयोहानौ + अङ् प्रत्ययः (षिद्भिदादिभ्योऽङ् – अष्टा०, ३/३/१०४) ऋवर्णान्तानां दृशेश्च अङि परतः गुणः (ऋदृशोऽङि गुणः – अष्टा०, ७/४/१६) स्त्रियां टाप् प्रत्ययः > जरा + √इण – गतौ + ञुण् प्रत्ययः (किंजरयोः श्रिणः – उ०को०, १/४)।

## जरूथः

जीर्यति वयोहीनो भवति स जरूथः मांसं वा। – उ०को०, २/६

√जॄ – वयोहानौ + ऊथन् प्रत्ययः (जॄवृञ्भ्यामूथन् – उ०को०, २/६)।

## जर्णः

जीर्यतीति जर्णः चन्द्रमा वृद्धो वा।

– उ०को०, ३/१०

√जॄ – वयोहानौ + नः प्रत्ययः (कृवृजृसिद्रूपन्यनिस्वपिभ्यो नित् – उ०को०, ३/१०)।

## जर्त्तुः

जायते यत् इति जर्तुः उपस्थेन्द्रियं हस्ती वा। – उ०को०, ५/४६

√जनी – प्रादुर्भावे + तुः प्रत्ययः धातोः रकारादेशः (जनेस्तुरश्च – उ०को०, ५/४६)।

## जलं

जलति घातयति दुष्टान् संघातयति अव्यक्तपरमाण्वादीन् तद् ब्रह्म जलम्। यद्वा यज्जनयति लाति सकलं जगद् तद्ब्रह्म जलम्। – स० प्र० (प्र०समुल्लास)

१- √जल – घातने + अच् प्रत्ययः।

२- √जनी – प्रादुर्भावे + √ला – आदाने + कः प्रत्ययः।

## जसुरिः

जस्यति मुञ्छति जासयति हिनस्ति वेति जसुरिः वेति जसुरिः वज्रं वा।

– उ०को०, २/७३

√जसु – मोक्षणे ताड़ने च + उरिन् प्रत्ययः (जसिसहोरुरिन् – उ०को०, २/७३)।

## जहकः

जहाति त्यजति हानिं करोतीति जहकः त्यागी कालो वा। – उ०को०, २/३४

√ओहाक् – त्यागे + क्वुन् प्रत्ययः द्वित्वञ्च (जहातेर्द्वे च – उ०को०, २/३४) हकारस्य जकारत्वञ्चेति।

## जह्नुः

जहाति दोषानिति जह्नुः कश्चिद्राजर्षिर्वा।

– उ०को०, ३/३६

✓ओहाक् – त्यागे + नु: प्रत्यय:, द्वित्वं धातो: अन्त्यलोपश्च ( जहातेर्द्वेऽन्त्यलोपश्च – उ०को०, ३/३६ ) ।

## जा:

यो जनयति सुखानि स: ।

– ऋ०, १/१४४/८

✓जनी – प्रादुर्भावे + ड: प्रत्यय: ( अन्येष्वपि दृष्यते – अष्टा०, ३/२/१०१ ) ।

## जागृवि:

यो नित्यं धर्म्ये पुरुषार्थे जागर्ति स: ।

– ऋ०, १/३१/९

जागर्तीति जागृवि: नृपतिर्वा ।

– उ०को०, ४/५४

✓जागृ – निद्राक्षये + क्विन् प्रत्यय: ( जॄशॄस्तृ-जागृभ्य: क्विन् – उ०को०, ४/५४ ) ।

## जातवेद:

यो जातेषु पदार्थेषु विद्यते स: ।

– ऋ०, १/४५/३

वेत्ति जातान् सर्वान् पदार्थान् विन्दति जातेषु पदार्थेषु विद्यते वा ।

– ऋ०, १/५९/५

यो जातानि विन्दति वेत्ति वा स: ।

– ऋ०, १/७८/५

यो विद्वान् जातं सर्वं वेत्ति तस्मै जातेषु कार्येषु विद्यमानाय वा । – ऋ०, १/९४/१

यो जातं सर्वं वेत्ति विन्दति जातेषु विद्यमानोऽस्ति तस्मै । – ऋ०, १/१००/१

यो जातेषु पदार्थेषु विद्यते । – ऋ०, ३/१/२०

यो जातेषु पदार्थेष्वजात: सन् विद्यते स:।

– ऋ०, ३/१/२१

यो जातेषु सर्वेषु स्वव्याप्त्या विद्यतेऽथवा जातान् सर्वान् पदार्थान् वेत्ति तम् ।

– ऋ०, ३/३/८

यथा जातानां सर्वेषां पदार्थानां वेत्ता जगदीश्वर: । – ऋ०, ३/५/४

जाता: वेदा: यस्माज्जगदीश्वराज्जातान् वेदान् यो जातान् वेद तत्सम्बुद्धौ ।

– ऋ०, ३/६/६

यो जातेषु विद्यते जातान् सर्वान् वेत्ति वा । – ऋ०, ६/४/२

यो जातानि वेद । – ऋ०, ६/१२/४

यो जातान्त्सर्वान् वेत्ति स: ।

– ऋ०, ६/१५/१३

यो जातं सर्वं वेत्ति तत्सम्बुद्धौ ।

– ऋ०, ७/५/७

यो जातेषु पदार्थेष्वभिव्याप्य विद्यते स:।

– ऋ०, ७/१२/२

जातानि भूतानि सर्वाणि वेद, जातान् मूर्तिमत: पदार्थान् विन्दत इति वा तम् ।

– यजु०, ७/४१

यो जातान् वेत्ति विन्दते वा, जाता वेदसो वेदा: पदार्था वा यस्मात् तम् ।

– यजु०, ८/४१

यो जातेषु विद्यते स: सूर्य्य: । – यजु०, ११/१७

यो जातेषु विद्यते स: । – यजु०, १३/३४

यो जातेषु विद्यते स: । – यजु०, १८/६६

जातेषु विद्यमानं इति जातवेदस: अग्निर्वा जातवेदा: । – उ०को०, ४/२२७

जाता ऋग्वेदादयश्चत्वारो वेदा सर्वज्ञा-नप्रदा यस्मात्, तथा जातानि प्रकृत्यादीनि भूतान्यसंख्यातानि विन्दति, यद्वा जातं

**सकलं जगद्वेत्ति जानाति यः स जातवेदाः।**

– *ऋ० भा० भू० (सन्ध्योपासनम्)*

✓जनी – प्रादुर्भावे + क्त प्रत्ययः धातोः आकारादेशश्च (जनसनखनां सञ्झलोः – अष्टा०, ६/४/४२) > जात + ✓विद् – ज्ञाने सत्तायां लाभे च + असिः प्रत्ययः पूर्वपदप्रकृतिस्वरत्वं (गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वञ्च – उ०को०, ४/२२७)।

## जातुभर्मा

**यो जातान् जन्तून् बिभर्ति सः।**

– ऋ०, १/१०३/३

✓जनी – प्रादुर्भावे + ड प्रत्ययः (अन्येष्वपि दृश्यते – अष्टा०, ३/२/१०१) > जा + ✓तुर्व – हिंसायां + क्विप् प्रत्ययः रकारवकारलोपः (राल्लोपः – अष्टा०, ६/४/२१) > जातु + ✓भृञ् – भरणे + मनिन् प्रत्ययः।

## जानु

**जायन्तेऽस्मात्तत् जानु जङ्घाया उपरिभागो वा। – उ०को०, १/३**

✓जनि – प्रादुर्भावे + ञुण् प्रत्ययः (दृसनिजनिचरिचटिरहिभ्यो ञुण् – उ०को०, १/३) धातोः वृद्धिश्च (जनिवध्योश्च – अष्टा०, ७/३/३५)।

## जामाता

**जायां कन्यां माति मिमीते मार्जयति वा जामाता। – उ०को०, २/९५**

✓जनि – प्रादुर्भावे + ड प्रत्ययः > जा + ✓माङ् – माने + तृच् प्रत्ययः (नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ – उ०को०, २/९५)।

## जाया

**जायन्ते यस्या अपत्यानि सा।**

– ऋ०, ३/५३/६

**या जायते वा सा जाया पत्नी।**

– उ०को०, ४/१११

✓जनि – प्रादुर्भावे + यक् प्रत्ययः (जनेर्यक् – उ०को०, ४/१११) धातोः आकारादेशः (ये विभाषा – अष्टा०, ६/४/४३)।

## जायुः

**जयत्यभिभवति तिरस्करोति शत्रूनिति जायुः शूरः वा, जयति रोगानिति जायुरोषधं वैद्यो वा। – उ०को०, १/१**

✓जि – जये + उण् प्रत्ययः (कृवापाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१) अजन्तस्याङ्गस्य वृद्धिश्च (अचो ञ्णिति – अष्टा०, ७/२/११५)।

## जिगत्नुः

**गमयति शरीराणीति जिगत्नुः प्राणो वा।**

– उ०को०, ३/३१

✓गम् – गतौ + क्नुः प्रत्ययः सन्वद्भावत्वात् द्वित्वं गकारस्य जकारः अजन्तस्याङ्गस्य इकारश्च (गमेः सन्वच्च – उ०को०, ३/३१)।

## जित्वा

**जयतीति जित्वा जयशीलः।**

– उ०को०, ४/११४

✓जि – जये + क्वनिप् प्रत्ययः तुगागमश्चेति (शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् – उ०को०, ४/११४)।

## जिनः

**जयतीति जिनः अति वृद्धो जयशीलो नास्तिकभेदो वा। – उ०को०, ३/२**

✓जि – जये + नक् प्रत्ययः (इणसिञ्जिदीङुष्यविभ्यो नक् – उ०को०, ३/२)।

## जिव्रिः

**यो जीर्वति येन वा स जिव्रिः कालः पक्षी वा। – उ०को०, ५/४९**

✓जृष्-वयोहानौ + क्रिन् प्रत्ययः रेफस्य वकारादेशः

(जीर्यतेः क्रिन् रश्च वः – उ०को०, ५/४९) तथा (हलि च – अष्टा०, ८/२/७७) सूत्रेण दीर्घः प्राप्तः तस्य अयावः (उणादयोऽव्युत्पन्नानि प्रातिपदिकानीतिजिव्रिः – अष्टा०, ८/२/७८)।

## जिह्मः

जहाति त्यजतीति जिह्मः कुटिलो मन्दो वा । – उ०को०, १/१४१

✓ओहाक् – त्यागे + मन् प्रत्ययः सन्वद्भावत्वात् द्वित्वं आकारलोपश्च (जहातेः सन्वदाकारलोपश्च – उ०को०, १/१४१) ।

## जिह्वा

जिहीते विजानाति रसमनया सा ।

– यजु०, १/३०

जोहवीति यया तां वाचम् । – यजु०, १३/१५

जुहोति गृह्णाति यया सा। – यजु०, १९/८८

जुहोति शब्दमन्नं वा यया सा जिह्वा ।

– यजु०, २०/६

जयति यया सा जिह्वा इन्द्रियं वा ।

– उ०को०, १/१५४

१- ✓हु - दानादानयोः + वन् प्रत्ययः, धातोः द्वित्वं अभ्यासस्य इकारः, ततः स्त्रियां टाप् प्रत्ययः।
२- ✓जि – जये + वन् प्रत्ययः निपातनात् (शेवायह्वजिह्वाग्रीवाऽप्वामीवाः – उ०को०, १/१५४) धातोः हुगागमश्च ।

## जीमूतः

यो जयति येन वा स जीमूतः मेघः पर्वतो वा । – उ०को०, ३/९१

✓जि – जये + क्तः प्रत्ययः मूडागमः धातोः दीर्घश्चेति (जेर्मूट् चोदात्तः – उ०को०, ३/९१) ।

## जीरः

जवति सूक्ष्मो भवतीति जीरः अणुः खड्गो वणिग्द्रव्यं वा । – उ०को०, २/२३

✓जु – वेगितायां गतौ + रक् प्रत्ययः धातोः ईकारान्तादेशः (जोरी च – उ०को०, २/२३) ।

## जीरदानुः

ये जीवन्ति ते । – यजु०, १९/४६

जीवति प्राणान् धारयतीति जीरदानुः ।

– उ०को०, २/२३

✓जीव – प्राणधारणे + रदानुक् प्रत्ययः बाहुलकात् धातोः व लोपः ऊठनिषेधश्चेति (जोरी च – उ०को० २/२३) ।

## जीराश्वं

जीरान् जीवान् प्राणधारकानश्नुते येन तम् । – ऋ०, १/११९/१

जीर > जीव + अश्वं (व्याख्यातम्) ।

## जीर्विः

जीर्य्यतीति जीर्विः पशुर्वा ।

– उ०को०, ४/५४

✓जॄ – वयोहानौ + क्विन् प्रत्ययः (जॄशॄस्तॄ- जागृभ्यः क्विन् – उ०को०, ४/५४) ।

## जीवः

जीवति प्राणं धारयति प्राणधारणेन समर्थो भवति यस्मिन्नायुषि तस्मै । – यजु०, २/३२

✓जीव – प्राणधारणे + अच् प्रत्ययः ।

## जीवगृभः

यो जीवं गृह्णाति तस्य व्याधेः । – यजु०, १२/८५

जीव + ✓ग्रह – उपादाने + क्विप् प्रत्ययः हकारस्य भकारश्चेति ।

## जीवथः

जीवतीति जीवथः आयुष्मान् ।

– उ०को०, ३/११३

✓जीव – प्राणाधारणे + अथः प्रत्ययः (शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः – उ०को० ३/११३) ।

## जीवन्तः

**यो जीवति स जीवन्तः औषधं वा ।**

– उ०को०, ३/१२७

✓जीव – प्राणधारणे + झच् प्रत्ययः (रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि – उ०को० ३/१२७), प्रत्ययादि झकारस्य अन्तादेशः (झोऽन्तः – अष्टा०, ७/१/३) ।

## जीवदानुं

**या जीवेभ्यो जीवनार्थं वस्तु ददाति ताम्।**

– यजु० १/२८

जीव + ✓डुदाञ् – दाने + नुः प्रत्ययः (दाभाभ्यां नुः – उ०को० ३/३२) ।

## जीवयाजं

**जीवान् याजयति धर्मं च संगमयति तम्।**

– ऋ०, १/३१/१५

जीव + ✓यज – देवपूजासङ्गतिकरणदानेषु + घञ् प्रत्ययः ।

## जीवातुः

**येन जीवन्ति यज्जोवयति वा ।**

– यजु०, ८४/६

**जीव्यते येन यो वा जीवति स जीवातुः जीवनमौषधं वा ।** – उ०को०, १/७८

✓जीव – प्राणधारणे + आतुः प्रत्ययः (जीवेरातुः – उ०को०, १/७८) ।

## जुष्टतमं

**धार्मिकैर्भक्तजनैः शिल्पिभिश्च यो जुष्यते स जुष्टः । अतिशयेन जुष्टतमम् ।**

– यजु०, १/८

✓जुषी – प्रीतिसेवनयोः + क्त प्रत्ययः, अतिशायने तमप् प्रत्ययः तकारस्य टकारश्च (ष्टुना ष्टुः – अष्टा०, ८/४/४१) ।

## जुष्टयः

**जुष्यन्ते यास्ताः ।** – ऋ०, १/१०/१२

**जुष्यन्ते प्रीयन्ते यास्ताः ।** – यजु०, ५/२१

(प्र०ब०व०) – ✓जुषी – प्रीतिसेवनयोः + क्तिन् प्रत्ययः स्त्रियाम् ।

## जुहुराणः

**हुर्च्छति कुटिलो भवतीति जुहुराणः चन्द्रमा वा ।** – उ०को०, २/९१

✓हुर्च्छी – कौटिल्ये + आनच् प्रत्ययः सन्वद्भावत्वात् द्वित्वं, सन् लुक् धातोः छलोपश्च (हुर्च्छेः सनो लुक् छलोपश्च – उ०को०, २/९१) > हुहुर + आनच् प्रत्ययः, पूर्व हकारस्य जकारश्चेति ।

## जुहूः

**जुहोति गृह्णाति ददाति वा यया तया ।**

– ऋ०, १/११/५

**जुहोति गृह्णाति ददाति वा यया ।**

– ऋ०, ६/११/२

**जुहोति ददाति हविरादत्ते सुखं चानया सा ।** – यजु०, २/६

**जुहोति ददात्यत्ति वा यया सा जुहूः स्रुग्भेदो वा ।** – उ०को०, २/६०

✓हु – दानादानयोः + क्विप् प्रत्ययः श्लुवद्भावत्वात् द्वित्वं, जकारत्वं दीर्घत्वञ्चेति (हुवः श्लुवच्च – उ०को०, २/६०) ।

## जूः

**जवति शीघ्रं गच्छतीति जूः शशोऽश्वो वृषभः आकाशं विद्य. वा ।**

– उ०को०, २/५७

✓जू (सौत्रधातुः) – गतौ + क्विप् प्रत्ययः दीर्घादेशश्च (क्विप् वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च – उ०को०, २/५७) ।

## जूर्णिः

ज्वरति रोगी भवतीति जूर्णिः स्त्रीरोगो वा । – उ०को०, ४/४८

✓ज्वर – रोगे + निः प्रत्ययः ऊठादेशश्च (वीज्याज्वरिभ्यो निः – उ०को०, ४/४८) ।

## जूतिभिः

जूयते प्राप्यतेऽर्थो याभिस्ताभिर्युद्धक्रियाभिः । – ऋ०, १/११६/२

(तृ०ब०व०) – ✓जू (सौत्रधातुः) – गतौ + क्तिन् प्रत्ययः स्त्रियां, निपातनात् (ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च – अष्टा०, ३/३/९७) ।

## जैवातृकः

यो ज्रीवति पूर्णावस्थापर्यन्तं स जैवातृकः आयुष्मान् निशाकरो वा । – उ०को०, १/७९

✓जीव – प्राणधारणे + आतृकन् प्रत्ययः, वृद्धिश्चेति (आतृकन् वृद्धिश्च – उ०को०, १/७९) ।

## जोषं

जुष्यते प्रीत्या सेव्यते तम् । – यजु०, २/१७

(द्वि०ए०व०)✓जुषी – प्रीतिसेवनयोः + घञ् प्रत्ययः।

## ज्याकारं

यो ज्यां प्रत्यञ्चां करोति तम् ।

– यजु०, ३०/७

१- ✓जि – जये + यक् प्रत्ययः निपातनात् (अघ्न्यादयश्च – उ०को०, ४/११२) स्त्रियां टाप् प्रत्ययः > ज्या + ✓डुकृञ् – करणे + अण् प्रत्ययः।
२- ✓ज्या – वयोहानौ + क्विप् प्रत्ययः + ✓डुकृञ् – करणे + अण् प्रत्ययः ।

## ज्यानिः

जिनाति वयोहीनो भवतीति ज्यानिः क्षतिर्वा । – उ०को०, ४/४८

✓ज्या – वयोहानौ + निः प्रत्ययः (वीज्याज्वरिभ्यो निः – उ०को०, ४/४८) ।

## ज्येष्ठराजं

यो ज्येष्ठेषु राजते तम् । – ऋ०, २/२३/१

(द्वि०ए०व०) – वृद्ध शब्दात् प्रशस्ये ईष्ठन् प्रत्ययः, वृद्ध शब्दस्य च ज्य इत्ययमादेशोऽजाद्योः प्रत्यययोः परतः (वृद्धस्य च – अष्टा०, ५/३/६२) > ज्येष्ठ + ✓राजृ – दीप्तौ + क्विप् प्रत्ययः ।

## ज्योतिः

द्योतते प्रकाशते तत् ज्योतिः अग्निः सूर्यादिकं वा । – उ०को०, २/११०

✓द्युत् – दीप्तौ + इसिन् प्रत्ययः धातोः अदिः दकारस्य जकारः (द्युतेरिसिन्नादेश्च जः – उ०को०, २/११०) ।

## ज्योतिष्कृत्

यो ज्योतिः प्रकाशात्मकं सूर्यादिलोकं करोति सः । – ऋ०, १/५०/४

यो ज्योतींषि करोति सः । – ऋ०, ३३/३६

ज्योतिः + ✓डुकृञ् – करणे + क्विप् प्रत्ययः, तुगागमश्च ।

## ज्ञानं

यज्जानाति चराऽचरं जगत्तज्ज्ञानम् ।

– स० प्र० (प्रथमसमुल्लासः)

✓ज्ञा – अवबोधने + ल्युट् प्रत्ययः ।

## ज्ञासः

जानन्ति ये तान् विदुषः । – ऋ०, १/१०९/१

(द्वि०ब०व०) – ✓ज्ञा – अवबोधने + कः प्रत्ययः (इगुपधज्ञाप्रीकिरः कः – अष्टा०, ३/१/१३५) ।

## ज्रयः

ज्रयन्त्यभिभवन्त्यायुर्येन तत् । – ऋ०, १/९५/९

✓ज्रि – वयोहानौ गतौ अभिभवे च + अच् प्रत्ययः (एरच् – अष्टा०, ३/३/५६) ।

## तकिलः

या तङ्कति कृच्छ्रेण जीवति सा तकिला औषधिर्वा । – उ०को०, १/५७

✓तकि – कृच्छ्रजीवने + इलच् प्रत्ययः निपातनात् (मिथिलादयश्च – उ०को०, १/५७) ।

## तक्रं

तनक्ति सङ्कोचयतीति तक्रं मथितं दधि वा । – उ०को०, २/१३

✓तञ्चू – सङ्कोचने + रक् प्रत्ययः (स्फायितञ्चि-वञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विति-वृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दि-दहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## तक्षकः

तक्षति तनूकरोतीति तक्षकः वर्धकिः शिल्पी । – उ०को०, २/३२

✓तक्षू – तनूकरणे + क्वुन् प्रत्ययः (क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२) ।

## तक्षा

ये तक्ष्णुवन्ति तनूकुर्वन्ति तेभ्यः ।

– यजु०, १६/२७

तक्षति तनूकरोति स तक्षा वर्धकिर्वा ।

– उ०को०, १/१५६

✓तक्षू – तनूकरणे + कनिन् प्रत्ययः (कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः– उ०को०, १/१५६)

## तडाका

ताडयत्याहन्तीति तडाका प्रभा वा ।

– उ०को०, ४/१५

✓तड – आघाते + आकन् प्रत्ययः (पिनाकादयश्च – उ०को०, ४/१५) स्त्रियां टाप् प्रत्ययः ।

## तडिः

ताडयतीति तडिः पीडकः ।

– उ०को०, ४/११८

✓तड – आघाते ताडने वा + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

## तडित्

ताडयति पीडयतीति तडित् विद्युद्वा ।

– उ०को०, १/९८

✓तड – आघाते ताडने वा + इतिः प्रत्ययः, प्रत्ययस्य णेर्लुक् (ताडेर्णिलुक् च – उ०को०, १/९८) ।

## तण्डुलः

तण्डति ताडयति ताड्यते वा स तण्डुलः ।

– उ०को०, ४/१०७

✓तड – ताडने + उलच् प्रत्ययः (सानसिवर्णसि-पर्णसितण्डुलाङ्कशचषालेल्वलपल्वलधिष्ण्यशल्याः – उ०को०, ४/१०७) नुमागमश्चेति ।

## तण्डुला

व्रियन्ते लुठ्यन्ते तन्यन्ते ताडयन्ते वा ते तण्डुलाः । – उ०को०, ५/९

✓वृञ्लुठितनिताडिधातुभ्यः + उलच् प्रत्ययः तथा वृञादीनां धातूनां स्थाने तण्डादेशः (वृञ्लुठितनिताडिभ्य उलच् तण्डश्च – उ०को०, ५/९) ।

## ततं

तनोतीति ततं वीणादिकं वाद्यं वा ।

– उ०को०, ३/८८

✓तनु – विस्तारे + तन् प्रत्ययः किद्भावत्वादनुनासिक लोपः गुणाभावश्चेति (तनिमृङ्भ्यां किच्च – उ०को०, ३/८८) ।

## ततुरिः

दुःखात् सर्वान् सन्तारकः ।

– ऋ०, १/१४५/३

✓तॄ-प्लवनसंतरणयोः + किन् प्रत्ययः (आदृगमहनजनः किकिनौ लिट् च – अष्टा०, ३/२/१७१) द्वित्वं

अभ्यासकार्यश्च छन्दसि ततः ऋकारान्तस्य धातोरङ्गस्य बहुलमुकारादेशः (बहुलं छन्दसि – अष्टा० ७/१/१०३), रपरादेशश्च (उरण रपरः – अष्टा०, १/२/५)।

## तनुः

तन्वते सुखानि कर्माणि च यासु ताभिः।

– यजु०, २/२४

तन्यते कर्माण्यनेनेति तनुः शरीरं स्वल्पं वा। – उ०को०, १/७

तनोति कार्याण्यनेन तत् तनुः शरीरं वा।

– उ०को०, २/११७

√तनु – विस्तारे + उः प्रत्ययः (भृमृशीङ्तॄचरित्सरित-निधनिमिमस्जिभ्य उः - उ०को०, १/७)।

## तनूः

तनोति कार्याणि येन सा तनूः शरीरं वा।

– उ०को०, १/८०

√तनु – विस्तारे + ऊः प्रत्ययः स्त्रियां (कृषिचमित-निधनिसर्जिखर्जिभ्य ऊः स्त्रियाम् – उ०को०, १/८०)।

## तनूकृत्

यस्तनूषु पृथिव्यादिविस्तृतेषु लोकेषु विद्यां करोति सः। – ऋ०, १/३१/९

तनू + √डुकृञ् – करणे + क्विप् प्रत्ययः तुगागमश्च।

## तनूनपात्

तनूनां शरीरौषध्यादीनामूनानि न्यूनान्यु-पाङ्गानि पाति रक्षति सः। – ऋ०, १/१३/२

यस्तनूं शरीरं न पातयति तत्।

– ऋ०, १/१४२/२

यस्तनूनि शरीराणि न पातयति सः।

– ऋ०, १/१८८/२

तस्य तनूर्व्याप्तिर्न पतति।

– ऋ०, ३/२९/११

यस्तनूं न पातयति। – यजु०, २०/३६

यस्तनूं न पातयति सः। – यजु०, २१/१३

यस्तन्वा ऊनं पाति सः। – यजु०, २१/३०

यस्तनुषु शरीरेषु न पतति सः।

– यजु०, २७/१२

यस्तनूर्विस्तृतान् पदार्थान् न पातयति तत्सम्बुद्धौ। – यजु०, २९/२६

१- तनू+न +√पा– रक्षणे +क्विप् प्रत्ययः तुगागमश्च।
२- √तनू + न+ √पत-गतौ + क्विप् प्रत्ययः, नञः निपातनात् प्रकृतिभावः (नभ्राण्नपान्नवेदानासत्या नमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या – अष्टा०, ६/३/७५)।

## तनूनप्त्रे

तनूर्देहान् नयन्ति प्राप्नुवन्ति येन तस्मै।

– यजु०, ५/५

(च०ए०व०)–तनू +√णीञ्-प्रापणे + तृच् प्रत्ययः।

## तनूपाः

यस्तनूः सर्वपदार्थ देहान् पाति रक्षति स जगदीश्वरः पालनहेतुर्भौतिको वा।

– यजु०, ३/१७

यस्तनूः पाति। – यजु०, २१/१३

तनू + √पा – रक्षणे + क्विप् प्रत्ययः।

## तनूरुचं

तन्वो रोचन्ते यस्मै तम्। – ऋ०, २/१/९

(द्वि०ए०व०) – तनू + √रुच – दीप्तौ + क्विप् प्रत्ययः।

## तन्तुः

तनोति विस्तृणोतीति तन्तुः सूत्रं वा।

– उ०को०, १/६९

√तनु – विस्तारे + तुन् प्रत्ययः (सितनिगमिमसिस-च्यविधाञ्क्रुशिभ्यस्तुन् – उ०को०, १/६९)।

## तन्त्री

तन्त्रयति कुटुम्बं धरतीति तन्त्रीः वीणा वा । – उ०को०, ३/१५८

✓तन्त्रि – कुटुम्बधारणे + ईः प्रत्ययः ( अवितृस्तृतन्त्रिभ्य ईः – उ०को०, ३/१५८ ) ।

## तन्द्रिः

तन्दति क्लिश्नातीति तन्द्रिः मोहो वा ।

– उ०को०, ४/६६

✓तन्दि ( सौत्रोधातुः )-क्लेशने + क्रिन् प्रत्ययः ( वङ्क्र्यादयश्च – उ०को०, ४/६६ ) ।

## तन्यतुः

तनोति विस्तृणोतीति तन्यतुः वायुर्रात्रिर्वा।

– उ०को०, ४/२

✓तनु – विस्तारे + यतुच् प्रत्ययः ( ऋतन्यञ्जिवन्यञ्र्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्णुजिष्ठजिसन्स्यनिथिन्नुल्यसासानुकः – उ०को०, ४/२ ) ।

## तपः

तपति दुःखी भवति तप्यते समर्थो वा भवति येन तत् तपः घर्मसेवनं माघमासो वा । – उ०को०, ४/१८९

✓तप – सन्तापे + असुन् प्रत्ययः ( सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९ ) ।

## तपुः

तपत्यस्मिन् सूर्य्यस्तस्य दिनस्य मध्ये ।

– ऋ०, ३/३९/३

तपति दुःखयतीति तपुः सूर्योऽग्निः शत्रुर्वा।

– उ०को०, २/११७

✓तप – सन्तापे + उसिः प्रत्ययः ( अर्त्तिपृवपियजितनिधनितविभ्यो नित् – उ०को०, २/११७ ) ।

## तमः

ताम्यति काङ्क्षति येन तत् तमः गुणः क्लेशो रात्रिरन्धकारो वा ।

– उ०को०, ४/१८९

✓तमु – काङ्क्षायां + असुन् प्रत्ययः ( सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९ ) ।

## तमालः

ताम्यन्ति काङ्क्षन्ति यं स तमालः वृक्षभेदो वा । – उ०को०, १/११८

✓तमु – काङ्क्षायां + कालन् प्रत्ययः ( तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् – उ०को०, १/११८ ) ।

## तरः

तरति येन बलेन तत् । – ऋ०, १/३३/१२

यस्तरति सः । – ऋ०, १/११०/७

तरन्ति यैस्तानि तरांसि नौकादीनि तैः ।

– ऋ०, २/३९/३

✓तॄ – प्लवनसंतरणयोः + असुन् प्रत्ययः ( सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९ ) ।

## तरङ्गः

तरति प्लवत्यनेन स तरङ्गः जलोर्मिर्वस्त्रभङ्गो वा । – उ०को०, १/१२०

✓तॄ– प्लवनसंतरणयोः + अङ्गच् प्रत्ययः ( तरत्यादिभ्यश्च – उ०को०, १/१२० ) ।

## तरणिः

तरति येन वा सा वा तरणिः सूर्यः कुमारी नौकौषधिभेदो वा । – उ०को०, २/१०२

✓तॄ – प्लवनसंतरणयोः + अनिः प्रत्ययः ( अर्तिसृधृम्यभ्यश्यवितृभ्योऽनिः – उ०को०, २/१०२ ) ।

## तरण्डः

तरति येन स तरण्डः जलतरणसाधनं वा। – उ०को०, १/१२९

✓तॄ – प्लवनसंतरणयोः + अण्डन् प्रत्ययः बाहुलकात् (अण्डन् कृसृभृवृञः – उ०को०, १/१२९)।

## तरद्द्वेषाः

तरन्ति द्वेषान् येषु ते। – ऋ०, १/१००/३

(प्र०ब०व०)–तरद्+ ✓द्विष–अप्रीतौ + घञ् प्रत्ययः।

## तरन्तः

यस्तरति येन यत्र वा स तरन्तः समुद्रस्तरन्ती नौका वा। – उ०को०, ३/१२८

✓तॄ – प्लवनसंतरणयोः + झच् प्रत्ययः (तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिश्च – उ०को०, ३/१२८) झच् प्रत्ययस्यान्तादेशश्च (झकारस्यान्तादेशः – अष्टा०, ७/१/३)।

## तरसं

तरतीति तरसं मांसं वा।

– उ०को०, ३/११७

✓तॄ – प्लवनसंतरणयोः + असच् प्रत्ययः (अत्यविचमितमिनमिरभिलभिनभितपिपतिपनि-पणिमहिभ्योऽसच् – उ०को०, ३/११७)।

## तरसानः

तरति येन सः तरसानः नौका वा।

– उ०को०, २/८६

✓तॄ – प्लवनसंतरणयोः + असानच् प्रत्ययः बाहुलकात् (छन्दस्यसानच् शुजॄभ्याम् – उ०को०, २/८६)।

## तरिः

तरति येन स तरिः वस्त्रादिस्थापनभाण्डं वा। – उ०को०, ४/१३९

✓तॄ – प्लवनसंतरणयोः + इः प्रत्ययः (अच इः – उ०को०, ४/१३९)।

## तरीः

तरति यया सा तरीः नौका वस्त्रादिरक्षकं भाण्डं वा। – उ०को०, ३/१५८

✓तॄ – प्लवनसंतरणयोः + ईः प्रत्ययः (अवितॄस्तृतन्त्रिभ्य ईः – उ०को०, ३/१५८)।

## तरीषः

तरति येन स तरीषः नौका वा।

– उ०को०, ४/२६

✓तॄ –प्लवनसंतरणयोः+ईषन् प्रत्ययः (कॄतॄभ्यामीषन् – उ०को०, ४/२६)।

## तरुः

यस्तरति येन वा स तरुः वृक्षो वा।

– उ०को०, १/७

✓तॄ – प्लवनसंतरणयोः + उः प्रत्ययः (भृमृशीङ्-तॄचरित्सरितनिधनिमिमस्जिभ्य उः – उ०को०, १/७)।

## तरुणः

तरतीति तरुणः युवा वृक्षभेदो वा।

– उ०को०, ३/५४

✓तॄ – प्लवनसंतरणयोः + उनन् प्रत्ययः (त्रोरश्च लो वा – उ०को०, ३/५४)।

## तरुतारं

शब्दान् संतारकं प्लावकं वा ताराख्यं व्यवहारम्। – ऋ०, १/११९/१०

(द्वि०ए०व०) – ✓तॄ – प्लवनसंतरणयोः + तृच् प्रत्ययः निपातनात् उडागमश्च (ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरुतृवरुतृवरुतृवरुत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च – अष्टा०, ७/२/३४)।

## तरुषसा

तरन्ति शत्रुबलानि येन तत्तरुषस्तेन।

– ऋ०, १/१२९/१०

(तृ०ए०व०) – ✓तॄ – प्लवनसंतरणयोः + उसिः प्रत्ययः (जनेरुसिः – उ०को०, २/११५)।

## तर्कारः

तर्कयति भाषतेऽसौ तर्कारः।

उ०को०, ३/१३९

✓तर्क – भाषार्थः + आरन् प्रत्ययः (तुषारादयश्च – उ०को०, ३/१३९)।

## तर्कुः

कृन्तति छिनत्ति वस्त्रादिकमनेन स तर्कुः कर्तनी वा। – उ०को०, १/१६

✓कृती – छेदने + उः प्रत्ययः धातोः आद्यन्तविपर्ययश्च (कृतेराद्यन्तविपर्ययश्च – उ०को०, १/१६)।

## तर्दूः

तरति येन यया वा स तर्दूः दारुहस्तः पुरुषो यष्टिर्वा। – उ०को०, १/८९

✓तॄ – प्लवनसंतरणयोः + ऊः प्रत्ययः दुडागमश्च (त्रो दुट् च – उ०को०, १/८९)।

## तर्म

तरतीति तर्म यूपाग्रं वा।

– उ०को०, ४/१४५

✓तॄ – प्लवनसंतरणयोः + मनिन् प्रत्ययः (सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५)।

## तर्य्यः

यस्तीर्यते तरितुं योग्यः। – ऋ०, ५/४४/१२

✓तॄ – प्लवनसंतरणयोः + ण्यत् प्रत्ययः।

## तर्षः

तरति येन यत्र वा स तर्षः समुद्रो वा।

– उ०को०, ३/६२

✓तॄ – प्लवनसंतरणयोः + सः प्रत्ययः (वृतॄवदिवचिवसिहनिकमिकषिभ्यः सः– उ०को०, ३/६२)।

## तलवं

यो हस्तादि तलानि वाति हिनस्ति तम्।

– यजु०, ३०/२०

तल (हस्तपृष्ठभागः)+ ✓वा –गतिगन्धनयोः+कः प्रत्ययः।

## तलिनं

तालयति प्रतितिष्ठतीति तलिनं विरलं पृथग्भूतं स्वल्पं स्वच्छं वा।– उ०को०, २/५३

✓तल – प्रतिष्ठायां + इनन् प्रत्ययः (तलिपुलिभ्यां च – उ०को०, २/५३)।

## तलुनः

तरतीति तलुनः युवा वृक्षभेदो वा।

– उ०को०, ३/५४

✓तॄ – प्लवनसंतरणयोः+उनन् प्रत्ययः, धातोः रकारस्य लकारः (त्रो रश्च लो वा– उ०को०, ३/५४)।

## तल्पं

तलयति प्रतिष्ठां करोतीति तल्पं शय्या स्त्रियो वा। – उ०को०, ३/२८

✓तल – प्रतिष्ठायां + प प्रत्ययः (खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः – उ०को०, ३/२८)।

## तविषी:

तवतीति तविषी नदी बलं सेना भूमिर्वा।

– उ०को०, १/४८

✓तव (सौत्रोधातुः) – वेगितायां गतौ वृद्ध्यर्थे वा + टिषच् प्रत्ययः (तवेर्णिद्वा – उ०को०, १/४८) स्त्रियां ङीप् प्रत्ययः।

## तष्टान्

तक्षन्ति तीक्ष्णीकुर्वन्ति यैर्विद्यास्तान्।

– ऋ०, १/६७/२

(द्वि०ब०व०) – ✓तक्षू – तनूकरणे त्वचने च + क्त प्रत्ययः।

## तसरः

तनोतीति तसरः सूत्रवेष्टनो वा।

– उ०को०, ३/७५

✓तनु – विस्तारे अथवा ✓तसु – उपक्षये + क्सरन् प्रत्ययः (तन्यृषिभ्यां क्सरन् – उ०को०, ३/७५)।

## तातः

तनोति कार्याणीति तातः पिता वा ।

– उ०को०, ३/९०

✓तनु – विस्तारे + तन् प्रत्ययः धातोः दीर्घश्च (दुतनिभ्यां दीर्घश्च – उ०को०, ३/९०) ।

## तामरसं

अम्यते प्राप्यते तत् तामरसं कमलं वा ।

– उ०को०, ३/११७

✓अम – गत्यादिषु + असच् प्रत्ययः बाहुलकात् प्रत्ययस्य णित्वात् वृद्धिः धातोश्च तुडागमः (अत्यविचमितमिनमिरभिलभिनभितपिपतिपनि-पणिमहिभ्योऽसच् – उ०को०, ३/११७) ।

## ताम्बूलं

ताम्यति काङ्क्षति यत्तत् ताम्बूलं इति प्रसिद्धम् । – उ०को०, ४/९०

✓तमु – काङ्क्षायां + उलच् प्रत्ययः धातोः वुगागमः वृद्धिश्च( खर्जिपिञ्जादिभ्य उरोलचौ–उ०को०, ४/९०)।

## ताम्रं

यस्ताम्यति ग्लायति तस्मै । – यजु०, १६/३९

ताम्यति काङ्क्षतीति ताम्रं धातुभेदो रक्तवर्णो वा । – उ०को०, २/१६

✓तमु – काङ्क्षायां + रक् प्रत्ययः, धातोः वृद्धिश्च (अमितम्योर्दीर्घश्च – उ०को०, २/१६) ।

## तालुः

तरन्ति निःसरन्ति वर्णा यत इति तालुः मुखैकदेशः । – उ०को०, १/५

✓तॄ – प्लवनसंतरणयोः + ञुण् प्रत्ययः, तॄ धातोः रेफस्य लत्वं वृद्धिश्च( त्रो रश्च लः– उ०को०, १/५)।

## ताविषी

तवतीति ताविषी नदी बलं सेना भूमिर्वा।

– उ०को०, १/४८

✓तव (सौत्रोधातुः) – वेगितायां गतौ वृद्ध्यर्थे वा + टिषच् प्रत्ययः धातोः वृद्धिःणित्वाद्विकल्पकेन (तवेर्णिद्वा – उ०को०, १/४८) स्त्रियां डीप् प्रत्ययः।

## तिग्मं

तेजते छिनत्तीति तिग्मं तीक्ष्णम् ।

– उ०को०, १/१४६

✓तिज – निशाने + मक् प्रत्ययः कवर्गादेशश्च (युजिरुचितिजां कुश्च – उ०को०, १/१४६) ।

## तिजिलः

तिज्यते सह्यते सर्वैः स तिजिलः चन्द्रमा वा । – उ०को०, १/५६

✓तिज – निशाने + इलच् प्रत्ययः, कित्वाद् गुणनिषे-धार्थञ्च (गुपादिभ्यः कित् – उ०को०, १/५६) ।

## तितउः

तनोति विस्तृणोति येन तत् तितउः चालनी पेषशोधकपात्रम् ।

-उ०को०, ५/५२

✓तनु – विस्तारे + डउः प्रत्ययः सन्वद्भावत्वाद् द्वित्वं (तनोतेर्डउः सन्वच्च – उ०को०, ५/५२) अभ्यासस्य इत्वञ्च (सन्यतः – अष्टा०, ७/४/७९)।

## तिन्तिडीकः

तिम्यत्यार्द्रीकरोतीति तिन्तिडीकः वृक्षजातिर्वा । – उ०को०, ४/२०

✓तिम – आर्द्रीभावे + इकन् प्रत्ययः, धातोः मकारस्य डकारः द्वित्वं अभ्यासस्य नुडागमश्चेति (फर्फरीका-दयश्च – उ०को०, ४/२०) ।

## तित्तिरिः

तरति प्लवतेऽसौ तित्तिरः पक्षिभेदो वा ।

– उ०को०, ४/१४३

✓तॄ –प्लवनसंतरणयोः+ इः प्रत्ययः बाहुलकात् (कृगॄशॄपॄकुटिभिदिछिदिभ्यश्च– उ० को०,४/१४३) कित्वाद् सन्वद्कार्यं तथा चाभ्यासस्य तुगागमश्चेति।

## तिथः

तेजते सह्यतेऽसौ तिथः अग्निः कामो वा। – उ०को०, २/१२

✓तिज – निशाने + थक् प्रत्ययः ( तिथपृष्ठगूथयूथप्रोथाः – उ०को०, २/१२ ) ।

## तिमिः

ताम्यत्याकाङ्क्षतीति तिमिः मत्स्यभेदो वा।

– उ०को०, ४/१२२

✓तमु – काङ्क्षायां + इन् प्रत्ययः धातोःइत्वञ्च ( क्रमितमिशतिस्तम्भामत इच्च – उ०को०, ४/१२२ )।

## तिमिरं

तेमत्यार्द्रीभवत्यस्मिन् तत् तिमिरं नेत्ररोगो वा । – उ०को०, १/५१

✓तिम – आर्द्रीभावे + किरच् प्रत्ययः ( इषिमदिमुदिक्षिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिगन्धिशुषिभ्यः किरच् – उ०को०, १/५१ )।

## तिरश्चा

येन तिरोऽञ्चति तेन । – यजु०, १२/२३

( तृ०ए०व० ) – तिरस् + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः ( ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९ ) ।

## तिरीटं

तरतीति तिरीटं शिरोवेष्टनं लोध्रो वा ।

– उ०को०, ४/१८५

✓तॄ – प्लवनसंतरणयोः + कीटन् प्रत्ययः धातोः इत्वञ्च ( कृतॄकृपिभ्यः कीटन् – उ०को०, ४/१८५ ) ।

## तीक्ष्णं

तितिक्षते तत् तीक्ष्णं तीव्रम् ।

– उ०को०, ३/१८

✓तिज – निशाने + क्स्नः प्रत्ययः धातोः दीर्घश्च ( तिजेर्दीर्घश्च – उ०को०, ३/१८ ) ।

## तीर्थं

तरति येन तस्मिन्नर्थे । – ऋ०, १/४६/८

तरन्ति येन तस्मिन् । – ऋ०, १/१६९/६

यानि वेदाचार्य्यसत्यभाषणब्रह्मचर्यादिसुनियमादीन्यविद्यादुःखेभ्यस्तारयन्ति यद्वा यैः समुद्रादिभ्यस्तारयन्ति तानि ।

– यजु०, १६/६१

तरन्ति यैस्तीर्यन्ते वा येभ्यः ।

– यजु०, ३०/१६

तरन्ति येन यत्र वा तत् तीर्थं गुरुर्यज्ञः पुरुषार्थो मन्त्री जलाशयो वा ।

– उ०को०, २/७

✓तॄ – प्लवनसंतरणयोः + थक् प्रत्ययः ( पातॄतुदिवचिरिचिसिचिभ्यस्थक् – उ०को०, २/७ ), धातोः इत्वं ( ऋत इद्धातोः – अष्टा०, ७/२/१०० ) तथा दीर्घश्चेति ( हलि च – अष्टा०, ८/३/७७ )।

## तीवरः

तीरयति कर्म्मसमाप्तिं करोतीति तीवरः जातिविशेषो वा । – उ०को०, ३/१

✓तीर – कर्मसमाप्तौ + ष्वरच् प्रत्ययः निपातनात् ( छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः – उ०को०, ३/१ ) धातोः रेफलोपः गुणाभावश्चेति ।

## तीव्रं

तितिक्षते येन तत् तीक्ष्णं वा ।

– उ०को०, २/२८

✓तिज – निशाने + रन् प्रत्ययः बाहुलकात् ( ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः – उ०को०, २/२८ ) धातोः जस्य बो दीर्घत्वञ्चेति ।

## तुजा

तोजति हिनस्ति दुःखानि येन तेन ।

– ऋ०, १/५६/३

(तृ०ए०व०) – ✓तुज – हिंसायां + क्विप् प्रत्ययः।

## तुण्डिलः

तुण्डति तोडति पृथक् करोति स तुण्डिलः उच्चनाभिर्जना वा । – उ०को०, १/५४

✓तुण्ड – तोडने + इलच् प्रत्ययः (सलिकल्य-निमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् – उ०को०, १/५४) ।

## तुत्थः

यो येन वा तुदति व्यथां प्राप्नोति, स तुत्थः अग्निरञ्जनं तुत्था नीलि ओषधि-गौवडवा सूक्ष्मैला वा । – उ०को०, २/७

✓तुद – व्यथने + थक् प्रत्ययः (पातॄतुदिवचि-रिचिसिचिभ्यस्थक् – उ०को०, २/७) ।

## तुन्दः

तुदति व्यथतीति तुन्दः स्थूलमुदरं वा ।

– उ०को०, ४/९८

✓तुद – व्यथने + दन् प्रत्ययः निपातनात् धातोर्नुमागमः (अब्दादयश्च – उ०को०, ४/९८) ।

## तुराषाट्

यस्तुरा त्वरितान् शीघ्रकारिणः सहते सः।

– ऋ०, ३/४८/४

तुरान् हिंसकान् शत्रून्सहते ।

– ऋ०, ५/४०/४

यस्तुरान् हिंसकान्त्सहते । – ऋ०, ६/३२/५

तुरान् त्वरितान् शत्रून् सहते। – यजु०, १०/२२

तुरान् हिंसकान् सहते । – यजु०, २०/४६

✓तुर – त्वरणे + कः प्रत्ययः (इगुपधज्ञाप्रीकिरः कः – अष्टा०, ३/१/१३५) > तुर + ✓षह – मर्षणे + ण्विः प्रत्ययः (छन्दसि सहः – अष्टा०, ३/२/६३), षत्वं दीर्घत्वञ्च (सह साडः सः – अष्टा०, ८/३/५६) ततः पूर्वपदस्य च दीर्घत्वं (अन्येषामपि दृश्यते – अष्टा०, ६/३/१३७) ।

## तुरीपं

यस्तुरः सद्यः आप्नोति तम्। – यजु०, २७/२०

✓तुर् – त्वरणे + ✓आप्लृ – व्याप्तौ + कः प्रत्ययः, धातोराकारस्य ईकारादेशः छन्दसि ।

## तुरीयः

तूर्णमाप्नोति सः । – यजु०, २१/२०

(तूर्णस्य तुर् भावः छन्दसि)✓तुर् – त्वरणे + छः प्रत्ययः, प्रत्ययस्य ईयादेशः (आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् – अष्टा०, ७/१/२) धातोराकारस्य ईकारादेशः छन्दसि ।

## तुर्यवाट्

तुर्यान् चतुरो वेदान् वहति येन सः ।

– यजु०, १४/१०

यस्तुर्यं चतुर्थं वर्षं वहति प्राप्नोति स वृषभादिः । – यजु०, १८/२६

यस्तुर्य्यं चतुर्थं वहति प्राप्नोति सः ।

– यजु०, २१/१६

ये तुर्यं चतुर्थं वहन्ति ते । – यजु०, २४/१२

यस्तुर्यं चतुर्गुणं भारं वहति तम् ।– यजु०, २८/२८

चतुर् – यत् प्रत्ययः (चतुरश्छयतावाद्यक्षरलोपश्च – अष्टा०वा०, ५/२/५१) आद्यक्षर लोपश्चेति > तुर्य + ✓वह – प्रापणे + ण्विः प्रत्ययः (वहश्च – अष्टा०, ३/२/६४), धातोः दीर्घत्वञ्चेति विकल्पे हकारस्य टकारश्चापि ।

## तुर्वणिः

यस्तुरः शीघ्रकरान् वनति संभजति सः।

– ऋ०, १/६१/११

तुर् + ✓वन – संभक्तौ + इन् प्रत्ययः ( सर्वधातुभ्य इन् – उ०को०, ४/११८ ) ।

## तुर्वशः

**तूर्वन्तीति तुरस्तेषां वशा वशं कर्तारो मनुष्यास्तेषु । – ऋ०, १/१०८/८**

**यस्तूर्णकारी वशंगतस्तं मनुष्यम् ।**

– ऋ०, १/१७४/९

तुर् + ✓वश – कान्तौ + अप् प्रत्ययः ( वशिरण्योरुपसंख्यानम् – अष्टा०वा०, ३/३/५८ ) ।

## तुविष्वणः

**ये तुवींसि बलानि वन्वते याचन्ते ते ।**

– ऋ०, ४/६/१०

तुविष् + ✓वन – सम्भक्तौ + असुन् प्रत्ययः ।

## तुविष्वणिः

**यस्तुविषो बहून् पदार्थान् वनति सम्भजति सः । – ऋ०, १/५८/४**

तुविष् – ( बहुनाम ) + ✓वन – सम्भक्तौ + इन् प्रत्ययः ( सर्वधातुभ्य इन् – उ०को०, ४/११८ ) ।

## तुषारः

**यस्तुष्यति येन वा तत् तुषारः हिमं वा ।**

– उ०को०, ३/१३९

✓तुष – प्रीतौ + आरन् प्रत्ययः ( तुषारादयश्च – उ०को०, ३/१३९ ) ।

## तुहिनं

**तोहति गच्छति याचते वा तत् तुहिनं हिमं वा । – उ०को०, २/५२**

✓तुहि – गतौ याचने अर्दने च + इनच् प्रत्ययः, गुणे कृते ह्रस्वः ( वेपितुह्योर्ह्रस्वश्च – उ०को०, २/५२ )।

## तूस्तं

**तोसति शब्दयतीति तूस्तं पापं जटा वा।**

– उ०को०, ३/८३

✓तूष – तुष्टौ + तन् प्रत्ययः बाहुलकात् ( हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६ ) ।

## तूणवध्मं

**यस्तूणवं धमति तम् । – यजु०, ३०/१९**

( द्वि०ए०व० ) – ✓तूण – पूरणे + क्वन् प्रत्ययः ( अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् – उ०को०, १/१५१ ) > तूणव + ✓ध्मा – शब्दाग्निसंयोगयोः + कः प्रत्ययः ।

## तूर्णिः

**त्वरति सम्यग्भ्रमतीति तूर्णिः मनो वा ।**

– उ०को०, ४/५१

✓ञित्विरा – सम्भ्रमे + निः प्रत्ययः ( वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् – उ०को०, ४/५१ ) धातोः वकारस्य स्थाने ऊठादेशः ( ज्वरत्वरस्रिव्यविमवामुपधायाश्च – अष्टा०, ६/४/२० ) ।

## तूलिः

**तूलते निष्कर्षतीति तुलिः कूर्चिका दध्यादिना सह पक्वः क्षीरविकारो वा ।**

– उ०को०, ४/१२०

✓तूल – निष्कर्षे + इन् प्रत्ययः ( इगुपधात् कित् – उ०को०, ४/१२० ) ।

## तोतः

**तुवन्ति जानन्ति प्राप्नुवन्ति हिंसन्ति वा येन सः । – यजु०, ४/२२**

✓तु – गतिवृद्धिहिंसासु + तन् प्रत्ययः ( हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६ ) धातोः ओकारत्वञ्चेति ।

## तृणं

**तृह्यते हन्यते तत् तृणं प्रसिद्धमेव ।**

– उ०को०, ५/८

✓तृह – हिंसायां + क्न प्रत्ययः हकारस्य लोपश्च ( तृहे क्नो हलोपश्च – उ०को०, ५/८ ) ।

## तृणस्कन्दस्य

यस्तृणानि स्कन्दति गच्छति गमयति वा तस्य । – ऋ०, १/१७२/३

( ष०ए०व० ) – तृण + ✓स्कन्दिर् – गतिशोषणयोः + अण् प्रत्ययः ।

## तृपत्

तृप्नोति प्रीणयतीति तृपत् क्षत्रं वा ।

– उ०को०, २/८५

✓तृप – प्रीणने + अतिः प्रत्ययः निपातनात् ( संश्चत्तृपद्वेहत् – उ०को०, २/८५ ) ।

## तृपला

तृप्यति यया सा तृपला लता वा । तृफधातोरपि कलप्रत्ययस्तेन तृफला इत्यपि सिद्धम् । – उ०को०, १/१०४

✓तृप – प्रीणने + कल प्रत्ययः ( कलस्तृपश्च – उ०को०, १/१०४ ) स्त्रियां टाप् प्रत्ययश्च ।

## तृप्रः

यस्तृप्यति येन वा स तृप्रः पुरोडाशो वा।

– उ०को०, २/१३

✓तृप – प्रीणने + रक् प्रत्ययः ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ ) ।

## तृषितः

यस्तृष्यति पिपासति सः । – ऋ०, १/१६/५

✓ञितृष – पिपासायां + क्त प्रत्ययः ।

## तृषुच्यवसः

तृषु क्षिप्रं ये च्यवन्ते गच्छन्ति ।

– ऋ०, ६/६६/१०

( प्र०ब०व० ) – तृषु – क्षिप्रनाम + ✓च्युङ् – गतौ + असुन् प्रत्ययः ।

## तृष्णा

तृष्यति काङ्क्षति पिपासति वा यया सा तृष्णा लिप्सा पिपासा वा ।

– उ०को०, ३/१२

✓ञितृष – पिपासायां + न प्रत्ययः ( तृषिशुषिरसिभ्यः कित् – उ०को०, ३/१२ ) स्त्रियां टाप् प्रत्ययः ।

## तृष्णजे

यः तृष्णाति तस्मै । – ऋ०, ५/५७/१

( च०ए०व० ) – ✓ञितृष – पिपासायां + नजिङ् प्रत्ययः ( स्वपितृषोर्नजिङ् – अष्टा०, ३/२/१७२ )।

## त्रपुः

अग्निं प्राप्य यत्रपते लज्जितमिव भवतीति तत् त्रपुः सीसकं रंगं वा ।

– उ०को०, १/१०

✓त्रपुष् – लज्जायां + उः प्रत्ययः ( शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१० )।

## त्रसदस्युः

यो दस्युःयस्त्रस्यति तम् । – ऋ०, १/११२/१४

त्रस्यन्ति दस्यवो यस्मात्सः । – ऋ०, ४/३८/१

त्रस्यन्ति दस्यवो यस्मात्तम्। – ऋ०, ४/४२/९

त्रस्यन्ति दस्यवो यस्मात्सः। – ऋ०, ५/२७/३

✓त्रसी – उद्वेगे + क्विप् प्रत्ययः > त्रस + ✓दसु – उपक्षये + युच् प्रत्ययः ( यजिमनिशुन्धिदसिजनिभ्यो युच् – उ०को०, ३/२० ) ।

## त्रसरेणुः

रिणति गच्छति हिनस्ति हन्यते वा स रेणुः धूलिः, सुरेणुः स्वर्णरजः ।

– उ०को०, ३/३८

त्रस + ✓रि – गतौ हिंसायाञ्च + णुः प्रत्ययः ( अजिवृरीभ्यो निच्च – उ०को०, ३/३८ ) ।

## त्रिधातवः

दधति सर्वान् विषयानिति धातवस्त्रयो

धातवो येषान्ते जीवः । – यजु०, २१/३७
(प्र०ब०व०) – त्रि + √डुधाञ् – धारणपोषणयोः + तुन् प्रत्ययः (सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् – उ०को०, १/६९) ।

## त्रिपिष्टपं

विशन्ति यत्रेति विष्टपं भुवनं वा । त्रि विष्टपः सुखविशेषभोगो वा ।
– उ०को०, ३/१४५

त्रि + √विश – प्रवेशने + कपन् प्रत्ययः, धातोर्वकारस्य पत्वं प्रत्ययस्य तुडागमश्चेति (विटपविष्टपविशिपोलपाः – उ०को०, ३/१४५)।

## त्रिरश्रिं

त्रिभिर्वाङ्मनः शरीरैर्योऽश्यते प्राप्यते तम्।
– ऋ०, १/१५२/२

त्रि + √अशूङ् – व्याप्तौ + क्रिन् प्रत्ययः (अदिशदिभूशुभिभ्यः क्रिन् – उ०को०, ४/६६)।

## त्रिवृत्

यस्त्रिषु स्थलजलान्तरिक्षेषु पूर्णगत्या गमनाय वर्त्तते तेन । – ऋ०, १/३४/१२
शीते चोष्णे द्वयोर्मध्ये च वर्त्तते सः ।
– यजु०, १४/२३

यत् त्रिभिः सत्त्वरजस्तमोगुणैः सह वर्त्तते तस्याव्यक्तस्य वेत्ता । – यजु०, १५/९
यस्त्रिषु कालेषु वर्त्तते तेन ।
– यजु०, २१/२३

यस्त्रिधा वर्त्तते । – यजु०, २५/१०
त्रि + √वृतु – वर्तने + क्विप् प्रत्ययः (क्विप् च – अष्टा०, ३/२/७६) ।

## त्रिषधस्थः

त्रिषु समानस्थानेषु कर्मोपासनाज्ञानेषु वा तिष्ठति । – ऋ०, ४/५०/१
त्रिषु भूम्यन्तरिक्षसूर्यलोकेषु त्रिविधेषु समानस्थानेषु वर्तमानः । – ऋ०, ६/१२/२
त्रिषु समानस्थानेषु या तिष्ठति सा ।
– ऋ०, ६/६१/१२

त्रि + सह + √ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः (सुपिस्थः – अष्टा०, ३/२/४), आकारलोपः (आतो लोप इटि च – अष्टा०, ६/४/६४), सहस्य सध इत्ययमादेशः (सध मादस्थयोश्छन्दसि – अष्टा०, ६/३/९६) ।

## त्रिष्टुप्

त्रीणि कर्मोपासनाज्ञानानि स्तुवन्ति यया सा । – यजु०, १४/१०
यया त्रिणि सुखानि स्तोभति सा ।
– यजु०, १४/१८

त्रि + √ष्टुभु – स्तम्भने + क्विप् प्रत्ययः ।

## त्रिष्ठिनं

ये त्रिषु जलस्थलान्तरिक्षेषु तिष्ठन्ति ते त्रिष्ठा वहवस्त्रिष्ठा विद्यन्ते यस्य तम् ।
– यजु०, ३०/१४

(द्वि०ए०व०) – त्रि + √ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ।

## त्रैतनः

यस्त्रीणि शरीरात्ममनोजानि सुखानि तनोति स एव । – ऋ०, १/१५८/५
त्रि + √तनु – विस्तारे + क्विप् प्रत्ययः, ततः स्वार्थेऽण् प्रत्ययश्चेति ।

## त्रोत्रं

त्रायते येन तत् त्रोत्रं प्रहारो वा ।
– उ०को०, ४/१७३

✓त्रैङ् – पालने + उत्र प्रत्ययः ( आशित्रादिभ्य इत्रोत्रौ – उ०को०, ४/१७३ ) ।

## त्र्यविं

या त्रिधाऽवति नाम् । – यजु०, २८/२४

( द्वि०ए०व० ) – त्रि + ✓अव – रक्षणगत्यादिषु + इन् प्रत्ययः ( सर्वधातुभ्य इन् – उ०को०, ४/११८ )।

## त्यद्

त्यजति क्लेशादिहीनो भवतीति त्यद् ।

– उ०को०, १/१३२

✓त्यज् – हानौ + अदिः प्रत्ययः ( त्यजितनियजिभ्यो डित् – उ०को०, १/१३२ ) ।

## त्वक्

त्वचति संवृणोत्यनया सा । – यजु०, १/११

यस्त्वचति संवृणोति सः । – यजु०, ४/३०

तनोति विस्तृता भवतीति त्वक् शरीरावरणं चर्म्म वल्कलं वा । – उ०को०, २/६३

१- ✓त्वच् – संवरणे + क्विप् प्रत्ययः।

२- ✓तनु – विस्तारे + चिक् प्रत्ययः धातोः अनः 'व' आदेशश्च ( तनोतेरनश्च वः – उ०को०, २/६३ )।

## त्वष्टा

त्वक्षति तनूकरोति दुःखानि प्रलये सर्वान् पदार्थान् छिनत्ति वा स जगदीश्वरः ।

– यजु०, २/२४

त्विष्यतेऽसौ त्वष्टा सूर्यो वा ।– उ०को०, २/९५

✓त्विष् – दीप्तौ + तृन् प्रत्ययः निपातनात् ( नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ – उ०को० २/९५ ) ।

## त्वाष्ट्रं

तूर्णं यः सकला विद्या अश्नुते तस्येदं विज्ञानम्। – ऋ०, १/११७/२२

त्वष्टा + अण् प्रत्ययः ।

## त्वेषः

त्विषन्ति दीप्यन्ते यास्ताः। – ऋ०, १/३७/२७

यस्त्वेषति प्रदीप्तो भवति सः ।

– ऋ०, १/१००/१३

✓त्विष् – दीप्तौ + अच् प्रत्ययः ।

## त्वेषसन्दृक्

त्वेषं दीप्तिं पश्यन्ति ते सम्यक् दर्शयितारः।

– ऋ०, १/८५/८

ये त्वेषं संपश्यन्ति । – ऋ०, ५/५७/५

यस्त्वेषं न्यायप्रकाशं सम्पश्यति दर्शयति वा । – ऋ०, ६/२२/९

त्वेष + सम् + ✓दृशिर् – प्रेक्षणे + क्विन् प्रत्ययः।

## त्सरुः

त्सरति कुटिलं गच्छतीति त्सरुः खड्ग-मुष्टिर्वा । – उ०को०, १/७

✓त्सर – छद्मगतौ + डः प्रत्ययः भृमृशीङ्तृ- चरित्सरितनिधनिमिमस्जिभ्य उः – उ०को०, १/७ )।

## दक्षाय्यः

दक्षयति वर्द्धते दक्षाय्यः गृध्रो वा ।

– उ०को०, ३/९६

✓दक्ष – वृद्धौ + आय्यः प्रत्ययः ( श्रुदक्षिस्पृहिगृहिभ्य आय्यः – उ०को०, ३/९६ ) ।

## दक्षिणः

दक्षते वर्धते शीघ्रकारी भवति वा स दक्षिणः। सरलो वामभागः परतन्त्रीऽ-नुवर्त्तनञ्च । – उ०को०, २/५०

✓दक्ष – वृद्धौ शीघ्रार्थे गतौ शासने च + इनन् प्रत्ययः ( द्रुदक्षिभ्यामिनन् – उ०को०, २/५० ) ।

## दक्षिणसत्

ये दक्षिणस्यां दिशि सीदन्ति तेभ्यः ।

– यजु०, ९/३५

यो दक्षिणे देशे सीदति सः ।

– यजु०, ३८/१०

दक्षिण + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## दक्षिणाः

दक्षन्ते प्राप्नुवन्ति विज्ञानं विजयं च यया सा । – यजु०, ४/१९

दक्षन्ते दीयन्ते सुपात्रेभ्यस्ताः ।

– यजु०, १८/४२

स्त्रियां दक्षिणा दानं प्रतिष्ठा वा ।

– उ०को०, २/५०

✓दक्ष-वृद्धौ शीघ्रार्थे गतौ शासने च + इनन् प्रत्ययः > दक्षिण + टाप् प्रत्ययः स्त्रियाम् ।

## दक्षिणावाट्

या दक्षिणां दिशं वहति सा ।

– ऋ०, ३/६/१

दक्षिणा + ✓वह – प्रापणे + ण्विः प्रत्ययः ( वहश्च – अष्टा०, ३/२/६४ ) ।

## दक्षिणावृतः

या दक्षिणां वृण्वन्ति । – ऋ०, १/१४४/१

( प्र०ब०व० ) – दक्षिणा + ✓वृञ् – वरणे + क्विप् प्रत्ययः तुगागमश्च ।

## दण्डः

दाम्यन्त्युपशाम्यन्त्यनेन स दण्डः यष्टिभेदो वा । – उ०को०, १/११४

✓दमु – उपशमे + डः प्रत्ययः ( जमन्ताड्डः – उ०को०, १/११४ ) ।

## दण्डधरः

दण्डं धारयतीति दण्डधरः राजा ।

– उ०को०, २/२२

दण्ड + ✓धृ – धारणे + अच् प्रत्ययः ।

## दद्रुः

दरिद्राति दुर्गतिं करोतीति दद्रुः कुष्ठभेदो वा । – उ०को०, १/९०

✓दरिद्रा – दुर्गतौ + उः प्रत्ययः धातोः 'रि' 'आ' इत्यनयोर्लोपः ( दरिद्रातेर्यालोपश्च – उ०को०, १/९० ) ।

## दधिक्राः

यो धारकान् क्रामति तमश्वम् ।

– ऋ०, ३/२०/१

यो भूम्यादीन् दधीन्धर्त्रीन् पदार्थान् क्रामति तम् । – ऋ०, ३/२०/५

यो धारकैः सह क्रामति । – ऋ०, ४/३८/९

यो दधिभिर्धर्तृभिः क्रम्यते गम्यते सः ।

– ऋ०, ४/३८/१०

पृथिव्यादि धारकाणां क्रमितारं ।

– ऋ०, ७/४४/२

अश्व इव धारकान् क्रामयिता गमयिता।

– ऋ०, ७/४४/५

यो दधीन् धारकान् क्राम्यति स दधिक्रा अश्वः । – यजु०, ९/१४

यो दधीन् पोषकान्धारकान् वा क्राम्यति तस्य । – यजु०, २३/३२

✓डुधाञ् – धारणपोषणयोः + किन् प्रत्ययः ( आदृगमहनजनः किकिनौ लिट् च – अष्टा०, ३/२/१७१ ), द्वित्वं, आकारलोपत्वञ्चेति > दधि + ✓क्रमु – पादविक्षेपे + विट् प्रत्ययः ( जनसनखनक्रमगमो विट् – अष्टा०, ३/२/६७ ) धातोः आकारादेशः ( विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१ ) ।

## दधिषाय्यः

दधिस्यति समापयतीति दधिषाय्यः घृतम्।
– उ०को०, ३/९७

दधि + ✓षो – अन्तकर्मणि + आय्यः प्रत्ययः (दधिषाय्यः उ०को०, ३/९७)।

## दध्यङ्

दधति यैस्ते दधयः सद्गुणास्तानञ्जति प्रापयति वा सः। – ऋ०, १/८०/१६

ये दधीन् वाय्वादीनञ्चन्ति तान्।
– ऋ०, १/८४/१३

दधीन् विद्याधर्मधारकानञ्चति प्राप्नोति सः। – ऋ०, १/११६/१२

दधीन् विद्याधर्मधरानश्चति पूजयति तस्मै।
– ऋ०, १/११७/२२

विद्याधर्मधारकानञ्चति विज्ञापयति तस्य सकाशात्। – ऋ०, १/११९/९

दधीन् धारकानञ्चति। – ऋ०, १/१३९/९

यो धारकान् विदुषोऽञ्चति प्राप्नोति।
– ऋ०, ६/१६/१४

यो दधीन् सुखधारकानग्न्यादिपदार्थानञ्चति सः। – यजु०, ११/३३

दधि + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९)।

## दध्याशिरः

दधति पुष्णन्तीति दधयस्ते समन्तात् शीर्यन्ते येषु ते। – ऋ०, १/५/५

ये दध्ना अश्यन्ते ते। – ऋ०, १/१३७/२

ये दधत्यश्नन्ति ते। – ऋ०, ७/३२/४

१- दधि + आङ् + ✓शॄ – हिंसायां + क्विप् प्रत्ययः, धातोः इत्वञ्च (ऋत इद्धतोः – अष्टा०, ७/१/१००) ततः रपरत्वञ्च (उरण्रपरः – अष्टा०, १/१/५१)।

२- दधि + आङ् + ✓अश – भोजने + किरच् प्रत्ययः (अशेर्नित् – उ०को०, १/५२)।

## दन्तः

येन दंशति सः। – ऋ०, ६/७५/११

दाम्यत्युपशाम्यति यो येन वा स दन्तः दशनो वा। – उ०को०, ३/८६

✓दमु – उपशमने + तन् प्रत्ययः (हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६)।

## दभः

दभ्नाति हिनस्ति येन सः। – ऋ०, ५/१९/४

✓दम्भु – दम्भने + कः प्रत्ययः।

## दभ्रः

यो दभ्नोति दम्भं करोति स दभ्रः क्षुद्रो जनः समुद्रो वा। – उ०को०, २/१३

✓दम्भु – दम्भने + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३)।

## दमं

दाम्यन्त्युपशाम्यन्ति दुःखानि यस्मिंस्तस्मिन् परमानन्दे पदे। – ऋ०, १/१/८

दाम्यन्त्युपशाम्यन्ति जना यस्मिन् गृहे संसारे वा तस्मिन्। – ऋ०, १/६१/९

दाम्यन्ति जना यस्मिन् गृहे तस्मिन्।
– ऋ०, २/१/२

यो दमयति तम्। – ऋ०, ६/३/७

दाम्यन्त्युपशाम्यन्ति यस्मिंस्तस्मिन् स्वस्थाने, परमोत्कृष्टे प्राप्तुमर्हे पदे। – यजु०, ३/२३

✓दमु – उपशमने + घञ् प्रत्ययः (हलश्च – अष्टा०, ३/३/१२१)।

## दमथः

दाम्यतीति दमथः दमो वा ।

– उ०को०, ३/११३

✓दमु – उपशमने + अथः प्रत्ययः ( शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः – उ०को०, ३/११३ ) ।

## दमुनाः

दाम्यति येन सः । – ऋ०, १/६०/४

दमनशीलः । – ऋ०, ६/१९/३

दाम्यत्युपशमयतीति दमुनाः अग्निर्वा ।

– उ०को०, ४/२३५

✓दमु – उपशमने + उनसिः प्रत्ययः ( दमेरुनसि – उ०को०, ४/२३५ ) दमूनाः पक्षे ( अन्येषामपि दृश्यते – अष्टा०, ६/३/१३७ ) अनेन सूत्रेण दीर्घः ।

## दया ( दयालुः )

दयते ददाति जानाति गच्छति रक्षति हिनस्ति यया सा दया, बह्वी दया विद्यते यस्य स दयालुः परमेश्वरः ।

– स० प्र० ( प्रथमसमुल्लासः )

✓दय – दानगतिहिंसारक्षणदानेषु + टाप् ( स्त्रियां ) प्रत्ययः > दया + आलुच् प्रत्ययः ( हृदयादालुजन्यतरस्याम् – अष्टा०वा०, ५/२/१२२, कृपाहृदयादालुच् – हैम०व्या०, ७/२/४२ ), अथवा निद्रातन्द्राश्रद्धादयाहृदयादालुच् – चान्द्र व्या०, ४/२/१५७ ) ।

## दरत्

दीर्यतेऽसौ दरत् हृदयं कूलं वा ।

– उ०को०, १/१३०

✓दॄ – विदारणे + अदि प्रत्ययः ( शॄदॄभसोऽदिः – उ०को०, १/१३० ) ।

## दरथः

दृणातीति दरथः दिक्षु प्रसरणं गर्त्तो वा।

– उ०को०, ३/११३

✓दॄ – विदारणे + अथः प्रत्ययः ( शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः – उ०को०, ३/११३ ) ।

## दरसानः

दृणाति तमो विदारयतीति दरसानः प्रकाशो वा । – उ०को०, २/८६

✓दॄ – विदारणे + असानच् प्रत्ययः बाहुलकात् ( छन्दस्यसानच् शुजॄभ्याम् – उ०को०, २/८६ ) ।

## दरिद्रः

यो दरिद्राति तत्सम्बुद्धौ । – यजु०, १६/४७

✓दरिद्रा – दुर्गतौ + अच् प्रत्ययः ।

## दर्दरीकं

दृणातीति दर्दरीकं वादित्रं वा ।

– उ०को०, ४/२०

✓दॄ – विदारणे + ईकन् प्रत्ययः अभ्यासस्य द्वित्वं ( फर्फरीकादयश्च – उ०को०, ४/२० ) ।

## दर्दुरः

दृणाति विदारयत्युष्णमिति दर्दुरः मेघो मण्डूको वाद्यभेदः पर्वतभेदो वा ।

– उ०को०, १/४०

✓दॄ – विदारणे + उरच् प्रत्ययः निपातनात्, उरचि 'दॄ' धातोर्द्विर्वचनमभ्यासस्य रुगागमो धातोः टिलोपश्च ( मकुरदर्दुरौ – उ०को०, १/४० ) ।

## दर्द्रूः

दरिद्राति दुर्गतिं करोतीति दर्द्रूः कुष्ठभेदो वा । – उ०को०, १/९०

✓दरिद्रा – दुर्गतौ + ऊः प्रत्ययः, 'इ', 'आ' इत्येतयोर्वर्णयोर्लोपः ( दरिद्रातेर्यालोपश्च – उ०को०, १/९० ) ।

## दर्भः

दृणाति विदारयतीति दर्भः कुशो वा ।

– उ०को०, ३/१५१

√दॄ – विदारणे + भः प्रत्ययः (दृदलिभ्यां भः – उ०को०, ३/१५१)।

## दर्वः

दृणाति विदारयति प्राणिन इति दर्वः हिंसको जनो वा। – उ०को०, १/१५५

√दॄ – विदारणे + कृगॄशॄदॄभ्यो वः – उ०को०, ३/१५१।

## दर्विः

दृणाति विदारयति येन सः दर्विः परिवेषणपात्रं वा। – उ०को०, ३/८४

दृणाति यया सा दर्विः सूपचालनपात्रं वा। – उ०को०, ४/५३

√दॄ – विदारणे + विन् प्रत्ययः (उल्मुकदर्विहोमिनः- उ०को०, ३/८४)।

## दर्शतः

पश्यति येन स दर्शतः चन्द्रः सूर्यो वा।
– उ०को०, ३/११०

√दृशिर् – प्रेक्षणे + अतच् प्रत्ययः (भृमृदृशियजिपर्विपच्यमितमिनमिहर्य्यिभ्योऽतच् – उ०को०, ३/११०)।

## दलपः

दालयति विदारयतीति दलपः प्रहारो वा।
– उ०को०, ३/१४२

√दल – विदारणे + कपन् प्रत्ययः (उषिकुटिदलिकचिखजिभ्यः कपन् – उ०को०, ३/१४२)।

## दल्भः

दलते विशीर्णो भवतीति दल्भः ऋषिश्चक्रं वा। – उ०को०, ३/१५१

√दल – विशरणे विदारणे च + भः प्रत्ययः (दृदलिभ्यां भः – उ०को०, ३/१५१)।

## दल्मिः

दलति येन विदृणातीति दल्मिः सूर्यकिरण उत्तमायुधं वा। – उ०को०, ४/४७

√दल – विशरणे विदारणे च + मिः प्रत्ययः (दल्मिः – उ०को०, ४/४७)।

## दशग्वाः

ये रश्मयो दश दिशो गच्छन्ति।
– ऋ०, १/६२/४

ये दशभिरिन्द्रियैः सिद्धिं गच्छन्ति ते।
– ऋ०, २/३४/१२

(बहुवचनान्त) दश + √ग्वा-गमने + क्विप् प्रत्ययः।

## दशन्

दशतीति दशन् संख्याविशेषो वा।
– उ०को०, १/१५६

√दश् – दशने + कनिन् प्रत्ययः बाहुलकात् (कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः-उ० को०, १/१५६)।

## दशद्युं

दशसु दिक्षु द्योतते तम्। – ऋ०, १/३३/१४

दश + √दिवु – क्रीडाविजिगीषाद्युतिकान्त्यादिषु + क्विप् प्रत्ययः, ऊठादेशश्च (छ्वोः शूडनुनासिके च – अष्टा०, ६/४/१९)।

## दशभुजिः

या दशभिरिन्द्रयैर्भुज्यते सा।
– ऋ०, १/५२/११

दश + √भुज – पालनाभ्यवहारयोः + इन् प्रत्ययः बाहुलकात् (सर्वधातुभ्य इन् – उ०को०, ४/११८)।

## दशस्य

दाशति ददति येन तद्दशस्तदात्मानमिच्छ।
– ऋ०, ६/११/१३

√दाशृ – दाने + असुन् प्रत्ययः छान्दसः ह्रस्वत्वे-दशस्। ततः आचारे क्यच् प्रत्ययः।

## दशेरः

दशति दंष्ट्राभ्यामिति दशेरः हिंसको जीवो

**वा । – उ०को०, १/५८**

✓दंश – दंशने + एरक् प्रत्ययः ( पतिकठिकुठिगडिगुडिदंशिभ्य एरक् – उ०को०, १/५८ ) ।

## दस्रः

**दस्यति रोगानुपक्षयतीति दस्रः वैद्यश्चोरो वा । – उ०को०, २/१३**

✓दसु – उपक्षये + रक् प्रत्ययः ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ ) ।

## दस्मः

**दस्यत्युपक्षयति दुःखयति वा स दस्मः यजमानो वा । – उ०को०, १/१४५**

✓दसु – उपक्षये + मक् प्रत्ययः ( इषियुधीन्धिदसिश्याधूसूभ्यो मक् – उ०को०, १/१४५ ) ।

## दस्युः

**दस्यति नाशयति परपदार्थानिति दस्युः तस्करो वा । – उ०को०, ३/२०**

✓दसु – उपक्षये + युच् प्रत्ययः ( यजिमनिशुन्धिदशिजनिभ्यो युच् – उ०को०, ३/२० ) ।

## दस्युघ्ना

**या दस्यून्हन्ति सा । – ऋ०, ४/१६/१०**

दस्यु +✓हन् – हिंसागत्योः + क प्रत्ययः ( घञर्थे क विधानं स्थास्ना पाव्यधिहनियुध्यर्थम् – अष्टा०वा०, ३/३/५८ ) उपधालोपः ( गमहनजनखनघसां लोपः क्ङित्यनङि – अष्टा०, ६/४/९८ ) कुत्वञ्च ( होहन्तेर्ञ्णिन्नेषु–अष्टा०, ७/३/५४ ) स्त्रियां टाप् च।

## दस्युहा

**दुष्टानां चौराणां हन्ता ।**

**– ऋ०, १/१००/१२**

दस्यु + ✓हन् – हिंसागत्योः + क्विप् प्रत्ययः ।

## दंष्ट्रा

**दशति यया स दंष्ट्रा दन्तो वा इत्यादि ।**

**– उ०को०, ४/१५९**

✓दशि – दंशनदर्शनयोः + ष्ट्रन् प्रत्ययः ( सर्वधातुभ्यः ष्ट्रन् – उ०को०, ४/१५९ ) ।

## दंसः

**दंसयति भाषयत्यनया क्रियया सा ।**

**– ऋ०, १/२९/२**

**दंसः कर्म आचष्टे दंसयत्यनया सा दंसना।**

**– ऋ०, १/३०/१६**

**दंसयन्ति पश्यन्ति विद्याः सुखानि च येन कर्मणा तत् । – ऋ०, १/६२/६**

✓दसि – दर्शनदंशनयोः + असुन् प्रत्ययः नुमागमश्च।

## दह्रः

**दहति भस्मीकरोतीति दह्रः दावाग्निर्वा ।**

**– उ०को०, २/१३**

✓दह् – भस्मीकरणे + रक् प्रत्ययः ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ ) ।

## दाकः

**ददातीति दाकः यजमानो वा ।**

**– उ०को०, ३/४०**

✓डुदाञ् – दाने + कः प्रत्ययः ( कृदाधारार्चिकलिभ्यः कः – उ०को०, ३/४० ) ।

## दातिवारः

**यो दातिं दानं वृणोति सः। – ऋ०, १/१६७/८**

**ये दातिं लवनं छेदनं वृण्वन्ति ।**

**– ऋ०, ३/५१/९**

**यो दातिं दानं वृणेति तम् ।**

– ऋ०, ५/५८/२

√डुदाञ् – दाने अथवा √दाप् – लवने + क्तिन् प्रत्ययः > दाति + √वृञ् – वरणे + अण् प्रत्ययः ।

## दात्रं

**दाति लुनाति तत् दात्रं धान्यादिछेदनसाधनं वा । – उ०को०, ४/१७०**

√दाप् – लवने + त्रन् प्रत्ययः ( दादिभ्यश्छन्दसि – उ०को०, ४/१७० ) ।

## दात्वः

**यो ददाति यत्र वा स दात्वः यज्ञकर्म वा।**

– उ०को०, ४/१०४

√डुदाञ् – दाने + त्वन् प्रत्ययः ( जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्त्लण्क्निन्शक्स्यढडटोटचः – उ०को०, ४/१०४ ) ।

## दानं

**दीयते येन तस्मिन् । – ऋ०, २/१३/७**

**यद्दीयते तत् । – ऋ०, ७/१८/२२**

**दीयमानम् । – यजु०, ३/३४**

√डुदाञ् – दाने + ल्युट् प्रत्ययः ।

## दानुः

**ददाति या सा । - ऋ०, १/३२/९**

**ददातीति दानुः, दानशीलो बुद्ध्यादिविचक्षणो वा । उ० को० ३/३२**

√डुदाञ् – दाने + नुः प्रत्ययः ( दाभाभ्यां नुः – उ०को०, ३/३२ ) ।

## दामन्

**यः सुखानि ददाति तस्मिन् गृहाश्रमे ।**

– ऋ०, १/५६/५

**यो ददाति तम् । – यजु०, ३३/५४**

**ददातीति दाम स्रग्वा । – उ०को०, ४/१४५**

√डुदाञ् – दाने + मनिन् प्रत्ययः ( सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५ ) ।

## दारु

**दीर्यते भिद्यते इति दारु काष्ठं वा ।**

– उ०को०, १/३

√दॄ – विदारणे + ञुण् प्रत्ययः ( दॄसनिजनिचरिचटिरहिभ्यो ञुण् – उ०को०, १/३ ) ।

## दारूणं

**दारयति यत् येन वा तत् दारूणं भीषणं वा । – उ०को०, ३/५३**

√दॄ – विदारणे + उनन् प्रत्ययः ( कृवृदारिभ्य उनन् – उ०को०, ३/५३ ) ।

## दार्व्याहारं

**यो दारूणि काष्ठान्याहरति तम् ।**

– यजु०, ३०/१२

दारु + आङ् + √हृञ् – हरणे + अण् प्रत्ययः ।

## दाशः

**दाशत्यस्मै तम् । – यजु०, ३०/१६**

**दशति मत्स्यादिकमिति दाशः धीवरः ।**

– उ०को०, ५/११

१- √दाशृ – दाने + अच् प्रत्ययः।

२- √दंश – दंशने + टन् प्रत्ययः नकारस्य आत्वञ्च ( दंशेश्च – उ०को०, ५/११ ) ।

## दाशराज्ञे

**यो दाशति सुखं ददाति राजा तस्मै ।**

– ऋ०, ७/३३/३

( च०ए०व० ) – दाश + √राजृ – दीप्तौ + कनिन् प्रत्ययः ( कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः – उ०को०, १/१५६ ) ।

## दासः

**दंसयति दशति पश्यति वा स दृप्रः, दासः सेवकः शूद्रो वा । – उ०को०, ५/१०**

√दंसि – दर्शनदंशनयोः + टः प्रत्ययः धातोः

नकारस्याकारादेशश्च (दंसेष्टटनौ न आ च – उ०को०, ५/१०) ।

## दासपत्नीः

ये दस्यत्युपक्षिणवन्ति शत्रून् ते दासास्तेषां पत्निरिव वर्तमानाः किरणाः ।

– ऋ०, ३/१२/१६

दास + ✓पत्लृ – गतौ + ङीप् प्रत्ययः नुमागमत्वात् पत्नी अथवा पतिशब्दस्य नकारादेशः स्त्रियां ङीप् प्रत्ययः (पत्युर्नो यज्ञसंयोगे – अष्टा०, ४/१/३३)।

## दासवेशाय

दासाः सेवकाः विशन्ति यस्मिँस्तस्मै ।

– ऋ०, २/१३/८

(च०ए०व०) – दास + ✓विश – प्रवेशने + घञ् प्रत्ययः ।

## दिक्

ये दिशन्त्युत्स्रजन्ति सदाचारं तानाप्तान् ।

– ऋ०, १/३१/१४

दिशन्ति यया सा दिक् तद्वत् । – यजु०, १५/१२

✓दिश – अतिसर्जने + क्विन् प्रत्ययः निपातनात् (ऋत्विग्दधृग्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९) ।

## दित्यवाट्

दितिभिः खण्डनैर्निर्वृत्तान् यवादीन् वहति।

– यजु०, १४/१०

दितौ खण्डितायां क्रियायां भवा दित्यास्तान् यो वहति पृथक् करोति सः।

– यजु०, १८/२६

दितये हितं वहति । – यजु०, २१/१३

दितौ खण्डने भवा दित्या न दित्या अदित्यास्तान् ये वहन्ति प्रापयन्ति ते दित्यवाहः । – यजु०, २४/१२

यो दित्यान् खण्डितान् वहति गमयति तम् । – यजु०, २८/२५

✓दो – अवखण्डने + यत् प्रत्ययः > दित्य + ✓वह – प्रापणे + ण्विः प्रत्ययः (वहश्च – अष्टा०, ३/२/६५) ।

## दिधिषूः

दिधिं धैर्यमिन्द्रियदौर्बल्यात् स्यति त्यजतीति दिधिषूः पुनर्भूर्वा । – उ०को०, १/९३

दिधि+ ✓षोऽन्तःकर्मणि + कूः प्रत्ययः निपातनात् (अन्दूदृम्फूजम्बूकम्बूकफेलूकर्कन्धूदिधिषूः – उ०को०, १/९३) ।

## दिनं

अन्धकारं द्यत्यवखण्डयतीति दिनं दिवसं वा । – उ०को०, २/४९

✓दो – अवखण्डने + इनच् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/४९) ।

## दिवसं

दिव्यति प्रकाशते सूर्यो यत्र तद् दिवसं दिवसः वा । – उ०को०, ३/१२१

✓दिवु – क्रीडाविजिगीषाव्यवहारद्युत्यादिषु + असच् प्रत्ययः (दिवः कित् – उ०को०, ३/१२१) ।

## दिवा

दीव्यन्ति यस्मिन् सः दिवा दिवसो वा ।

– उ०को०, १/१५६

दिव्यति दिवा दिनं वा । – उ०को०, ४/१७५

✓दिवु – क्रीडाविजिगीषादिषु +आ प्रत्ययः (आः समिण्निकषिभ्याम् – उ०को०४/१७५) ।

## दिवि

द्योतनात्मके ब्रह्मणि सूर्यादिप्रकाशे वा ।

– ऋ०, १/६/१

द्योतनात्मके सूर्य प्रकाशयुक्तेऽन्तरिक्ष इव

न्यायप्रकाशे । – ऋ०, १/५१/१२

द्योतनात्मके व्यवहारे । – यजु०, ८/३

(स०ए०व०) – ✓दिवु – क्रीडाविजिगीषादिषु + क्विप् प्रत्ययः ।

## दिविस्पृशः

दिवि स्पृशति येन तम् । – ऋ०, ४/४६/४

यो दिवि प्रकाशे स्पृशति तेन । – ऋ०, ५/११/१

ये दिवि स्पृशन्ति । – ऋ०, ७/१६/३

दिवि प्रकाशे स्पृशति येन तेन । – यजु०, १५/२७

दिवि (स.ए.व.) + ✓स्पृश - संस्पर्शने + क्विप् प्रत्ययः।

## दीदिवः

यो दीव्यति शुभैर्गुणैर्द्रव्याणि प्रकाशयति सः । – ऋ०, १/१२/५

स्वसामर्थ्येन देदीप्यमान दीप्तिमान् वा । – ऋ०, १/१२/१०

ये दीदयन्ति ते दीदयः प्रकाशास्ते बहवो विद्यन्ते यस्मिन् तत्सम्बुद्धौ । – यजु०, १५/४८

दीव्यतीति दीदिविः सुखमन्नं वा । – उ०को०, ४/५५

✓दिवु – क्रीडाविजिगीषादिषु + क्विन् प्रत्ययः, द्वित्वं अभ्यासस्य दीर्घत्वञ्च (दिवो द्वे दीर्घश्चाभ्यासस्य – उ०को०, ४/५५) ।

## दीनः

दीयते क्षीणोभवतीति दीनः दुःखी वा । – उ०को०, ३/२

✓दीङ् – क्षये + नक् प्रत्ययः (इण्सिञ्जिदीङुष्यविभ्यो नक् – उ०को०, ३/२) ।

## दीनारः

दीयते क्षयति येन वा स दीनारः सुवर्णाभरणं वा । – उ०को०, ३/१४०

✓दीङ् – क्षये + आरन् प्रत्ययः नुडागमश्च (दीङो नुट च – उ०को०, ३/१४०) ।

## दीर्घश्रुत्

यो दीर्घेण शृणोति सोऽतिशयितस्तम् । – ऋ०, ५/३८/२

यो दीर्घं कालं शृणोति । – ऋ०, ७/१६/८

✓द्राघृ – आयामे + अच् प्रत्ययः, 'द्रा' स्थाने दीरादेशः > दीर्घ + ✓श्रु – श्रवणे + क्विप् प्रत्ययः, तुगागमश्चेति (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९) ।

## दुकूलं

दुनोत्युपतापयतीति दुकूलं स्त्रिया अधोवस्त्रम् । – उ०को०, ४/९०

✓टुदु – उपतापे + ऊलः प्रत्ययः धातोः कुगागमः (खर्जिपिञ्जादिभ्य ऊरोलचौ – उ०को०, ४/९०)।

## दुधिता

दुर्हितानि दूरे सन्ति सुखकारकाणि । – ऋ०, २/१६/४

दु < दुर् + ✓डुधाञ् – धारणपोषणयोः + क्त प्रत्ययः, हिरादेशः (दधातेर्हिः – अष्टा०, ७/४/४२), हकारस्य धकारः, स्त्रियां टाप् प्रत्ययः ।

## दुध्रकृतः

ये दुध्राणि धारकाणि बलादीनि कुर्वन्ति ते । – ऋ०, १/६४/११

(प्र०ब०व०) दु < दुर् + ✓धृञ् – धारणे + कः प्रत्ययः अथवा ✓दुह –प्रपूरणे + रक् प्रत्यय(स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) हकारस्य धकारत्वात् > दुध्रः + ✓डुकृञ् – करणे + क्विप् प्रत्ययः तुगागमश्च ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९) ।

## दुरः

दूर्वन्ति सर्वाणि दुःखानि यैस्तान् विद्याप्रवेशस्थान् द्वारान् । – ऋ०, १/७२/८

✓दुर्वी – हिंसार्थे + क्विप् प्रत्ययः वकारलोपश्च (राल्लोपः – अष्टा०, ६/४/२१) ।

## दुरोणसत्

यो दुर्गान् दुःखेन गन्तुं योग्यान् हन्ति ।

– ऋ०, ४/१८/२

यो दुरोणे गृहे सीदति । – ऋ०, ४/४०/५

यो दुरोणे गृहे सीदति सः ।

– यजु०, १०/२४

यो दुरोणे सर्वर्त्तुसुखप्रापके गृहे सीदति सः । – यजु०, १२/१४

दुरोण + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## दुर्गहाणि

यानि दुर्गाणि दुःखेन गन्तुं योग्यानि घ्नन्ति तानि धर्म्याणि कर्माणि। – ऋ०, ६/२२/७

(प्र०ब०व०) – दुर् + ✓गम्लृ – गतौ + डः प्रत्ययः > दुर्ग + ✓हन् – हिंसागत्योः + क्विप् प्रत्ययः ।

## दुर्गा

दुःखेन गन्तुं योग्यानि स्थानानि ।

– ऋ०, १/९९/१

येषु दुःखेन गन्तुं योग्यानि दुर्गाणि तानि।

– ऋ०, १/४१/३

दुर् + ✓गम्लृ – गतौ + डः प्रत्ययः (सुदुरोरधिकरणे – अष्टा०वा०, ३/२/४८) ।

## दुर्वर्त्तुः

यो दुःखेन वर्त्तते तस्य । – ऋ०, ४/३८/८

(ष०ए०व०) – दुर् + ✓वृतु – वर्तने + तुः प्रत्ययः।

## दुष्कृतं

यो दुष्टं कर्म करोति तम् ।

– ऋ०, ६/१६/३२

दुस् + ✓डुकृञ् – करणे + क्विप् प्रत्ययः तुगागमश्चेति ।

## दुष्टरं

शत्रुभिर्दुःखेन तरितुमुल्लङ्घयितुं योग्यं ।

– ऋ०, ३/३६/१०

दुःखेन तरितुं योग्यम् । – ऋ०, ५/३८/२

दुस् + ✓तॄ – प्लवनसंतरणयोः + अप् प्रत्ययः ।

## दुष्ठुः

निन्दितस्तिष्ठतीति दुष्ठुः अविनीतः ।

– उ०को०, १/२५

दुस् + ✓ष्ठा – गतिनिवृत्तौ + कुः प्रत्ययः (अपदुःसुषुस्थः – उ०को०, १/२५) ।

## दुहिता

दुहिता दूरे हिता पुत्री वा । – ऋ०, १/९२/५

दूरे हितायाः कन्यायाः । – ऋ०, ३/३१/१

दोग्धि कार्याणि प्रपूरयतीति दुहिता पुत्री वा । – उ०को०, २/९५

✓दुह – प्रपूरणे + तृच् प्रत्ययः निपातनात् (नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ – उ०को०, २/९५) इडागमश्चेति ।

## दूतः

यो दावयति देशान्तरं पदार्थान् गमयत्युपतापयति वा तम् । – ऋ०, १/१२/१

दवति प्रापयति सुखज्ञाने येन तम् ।

– ऋ०, १/१२/८

यो दूनोत्युपतापयति सर्वान् पदार्थानितस्ततो भ्रमणेन दुष्टान् वा तम् । – ऋ०, १/३६/३

यो दुनोत्युपतप्य भिनत्ति दुष्टान् शत्रून् सः । – ऋ०, १/३६/५

यो दुनोति पदार्थान् देशान्तरं प्रापयति तम् । – ऋ०, १/४४/३

यो दुनोति शत्रून् भेत्तुं जानाति सः ।

– ऋ०, १/४४/९

यो दुनोति तम् । – ऋ०, १/१६१/३

यो दुनोति परितापयति शत्रुस्वान्तानि सः।

– ऋ०, १/१८८/१

यो दुनोति दुष्टाँस्तत्सम्बुद्धौ ।

– ऋ०, २/६/६

यो दुनोति परितापयति सः ।

– ऋ०, ३/५/२

यो दुनोति दुष्टान्परितापयति सः ।

– ऋ०, ४/१/८

यो दुनोति शत्रूँस्तम् । – ऋ०, ५/३/८

यो दुनोति समाचारं दूरं गमयत्यागमयति।

– ऋ०, ५/२६/६

यो दुनोति परितापयति सः ।

– ऋ०, ६/८/४

यो दुःखानि दुनोति दूरीकरोति तम् ।

– ऋ०, ६/१५/८

यो दोषान् दुनोति दूरीकरोति धर्म्मार्थ-मोक्षान् प्रापयति वा । – ऋ०, ६/१५/९

यो दुनोति तापयति दुष्टान्सः ।

– यजु०, २९/२५

दवति गच्छति दुनोत्युपतपति वा स दूतः।

– उ०को०, ३/९०

✓दु – गतौ उपतापे च + क्तः प्रत्ययःदीर्घत्वञ्च (दुवनिभ्यां दीर्घश्च – उ०को०, ३/९०) ।

## दूतिः

दूयते परितापयतीति दूतिः दूती वा ।

– उ०को०, ४/१८०

✓दु – गतौ उपतापे च + तिः प्रत्ययः बाहुलकात् (वसेस्तिः – उ०को०, ४/१८०) ।

## दूरं

दुःखेनेयते प्राप्यते तद् दूरं विप्रकृष्टं वा।

– उ०को०, २/२०

दुर् + ✓इण् – गतौ + रक् प्रत्ययः (स्फायितञ्चिव-ञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजि-नीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिद-म्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३), धातोः लोपश्च (दुरीणो लोपश्च – उ०को०, २/२०), रेफ लोपः (रोरि: – अष्टा०, ८/३/१४) पूर्वस्य दीर्घश्च (ढ्रलोपे पूर्वस्य दीर्घोऽणः – अष्टा०, ६/३/१११) ।

## दूर-आदिशं

दूरे य आदिश्यते तम् । – ऋ०, १/१३९/१०

दूरे + आ + ✓दिश – अतिसर्जने + कः प्रत्ययः ।

## दूरङ्गमं

यद्दूरं गच्छति गमयति वाऽनेकपदार्थान् गृह्णाति तत् । – यजु०, ३४/१

दूरं + ✓गम्लृ – गतौ + खच् प्रत्ययः (गमश्च – अष्टा०, ३/२/४७) ।

## दूरेदृश्

ये दूरे दृश्यन्ते पश्यन्ति वा ।

– ऋ०, ५/५९/२

यो दूरे स्थितान् दर्शयति तस्मै ।

– यजु०, ४/३५

दूर + ✓दृशिर् – प्रेक्षणे + क्विप् प्रत्ययः ।

## दूषिका

दूषायतीति दूषिका नेत्रमलं वा ।

– उ०को०, ४/१६

✓दुष – वैकृत्ये + ईकन् प्रत्ययः (कषिदूषिभ्यामीकन् – उ०को०, ४/१६) ।

## दृतिः

यो दृणाति तं दृतिरिव जलेन पूर्णम् ।

– ऋ०, ५/८३/७

दीर्यतेऽसौ दृतिः चर्ममयं पात्रं वा ।

– उ०को०, ४/१८४

✓दृ॰ – विदारणे + तिः प्रत्ययः धातोः ह्रस्वश्च (दृणातेर्ह्रस्वः – उ०को०, ४/१८४) ।

## दृप्रः

दृप्यति हृष्यति मुह्यति वा दृप्रः बलवान् वा । – उ०को०, २/१३

✓दृप – हर्षमोदनयोः + रक् प्रत्ययः (स्फायितञ्चि-वञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृ-त्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहि-दसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## दृम्फूः

दृम्फत्युत्कृष्टं क्लेशं ददातीति दृम्फूः सर्पजातिर्वा । – उ०को०, १/९३

✓दृम्फ – उत्क्लेशे + कूः प्रत्ययः निपातनात् (अन्दूदृम्फूजम्बूकम्बूकफेलूकर्कन्धूदिधिषूः – उ०को०, १/९३) ।

## दृवा

यः शत्रून् दृणाति । – यजु०, १०/८

✓दृ – विदारणे + क्वनिप् प्रत्ययः ।

## दृशानः

पश्यतीति दृशानः सूर्यो वा ।

– उ०को०, २/९०

✓दृशिर् – प्रेक्षणे + आनच् प्रत्ययः (युधिबुधिदृशः किच्च – उ०को०, २/९०) ।

## दृशुः

दृशि इति पाठान्तरे दृशुः दर्शकः ।

– उ०को०, १/२३

✓दृशिर् – प्रेक्षणे + कुः प्रत्ययः (पृ॰भिदिव्य-धिगृधिधृषिहृषिभ्यः – उ०को० १/२३) ।

## दृषत्

दीर्यतेऽसौ दृषत् पाषाणो वा ।

– उ०को०, १/१३१

✓दृ॰ – विदारणे + अदि प्रत्ययः धातोः ह्रस्वः षुगागमश्चेति (दृणातेः षुग्घ्रस्वश्च – उ०को० १/१३१) ।

## देव

दातारं हर्षकरं विजेतारं द्योतकं वा ।

– ऋ०, १/१/१

सर्वेषां सुखानां दाता सर्वविद्या द्योतकः।

– यजु०, १/१

दिव्यसुखगुणानां दातः । – यजु०, २/१२

यो दीव्यति क्रीडति स देवः ।

– स० प्र० (*प्रथमसमुल्लासः*)

✓दिवु – क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदम-दस्वप्नकान्तिगतिषु + अच् प्रत्ययः ।

## देवकामः

यो देवान् कामयते सः ।

– ऋ०, २/३/९, ३/४/९

यो देवान् विदुषः कामयते सः ।

– ऋ०, ४/२५/१

यो देवान् विदुषः कामयते तम् ।

– यजु०, २९/९

देव + ✓कमु – कान्तौ + अण् प्रत्ययः ।

## देवगोपाः

यो देवान् विदुषः गोपयति ।

– ऋ०, ६/६८/७

देव + ✓गुपू – रक्षणे + अण् प्रत्ययः ।

## देवजामिः

यो देवैस्सह जमति सः । – ऋ०, ७/२३/२

देव + √जमु – अदने + इञ् प्रत्ययः बाहुलकात् ( वसिवपियजिराजिव्रजिसदिहनिवाशिशिवादिवारिभ्य इञ् – उ०को०, ४/१२५ ) ।

## देवटः

देवते व्यवहरतीति देवटः शिल्पी वा ।

– उ०को०, ४/८१

देव + अटन् प्रत्ययः ( शकादिभ्योऽटन् – उ०को०, ४/८१ ) ।

## देवनिदः

ये देवान्निन्दन्ति तान् । – ऋ०, १/१५२/२

ये देवान् विदुषो दिव्यगुणान्वा निन्दन्ति तान् । – ऋ०, २/२३/८

ये देवान्विदुषो निन्दन्ति तान् ।

– ऋ०, ६/६१/३

( द्वि०ब०व० ) – देव + √निदि – कुत्सायां + क्विप् प्रत्ययः ।

## देवपानं

देवाः पिबन्ति येन तत् । – ऋ०, ४/३५/५

देव + √पा – पाने + ल्युट् प्रत्ययः ।

## देवयजनं

देवा यजन्ति यस्मिन् तस्मात् ।– यजु०, १/२६

देवैर्यदिज्यते येन वा देवानां यजतं देव यजनं तत् । – यजु०, १/३१

देवा विद्वांसो यजन्ति यस्मिन् तस्मिन् ।

– यजु०, ३७/३

देवयजनं >देव + √यज – देवपूजासङ्गतिकरणसादानेषु + ल्युट् प्रत्ययः ( करणाधिकरणयोश्च – अष्टा०, ३/३/११७ ) ।

## देवयजनि

देवा यजन्ति यस्यां तस्याम् ।

– यजु०, १/२५, ३/५

देव + √यज – देवपूजासङ्गतिकरणदानेषु + अनिः प्रत्ययः बाहुलकात् ( अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः – उ०को०, २/१०२ ) ।

## देवयजं

देवान् विदुषो दिव्यगुणान् यजति संगतान् करोति येन यज्ञेन स देवयट् तम् ।

– यजु०, १/१७

( द्वि०ए०व० ) – देव + √यज – देवपूजासङ्गतिकरणदानेषु + विच् प्रत्ययः ( अन्येभ्योऽपि दृश्यन्ते – अष्टा०, ३/२/७५ ) ।

## देवया

ये देवान् दिव्यान् गुणान् यान्ति ते ।

– ऋ०, १/१६८/१

देवान् दिव्यगुणान् विदुषो वा याति प्राप्नोति येन सः । – ऋ०, १/१७७/४

या देवान् विदुषो यान्ति । – ऋ०, ५/७६/१

ये देवान् दिव्यगुणान् विदुषो यान्ति ।

– ऋ०, ५/७७/२

देवान् विदुषो दिव्यगुणान् वा यौति प्राप्नोति प्रापयतीति वा तम् ।

– यजु०, १/१२

देवा विद्वांसो यान्ति यैर्धर्मै । – यजु०, १/१८

देवा विद्वांसो यान्ति तेषु तैः ।

– यजु०, ११/११

देवा विद्वांसो यान्ति गच्छन्ति येषु तान् ।

– यजु०, २९/२

देव + √या – प्रापणे + क्विप् प्रत्ययः ।

## देवयुः

देवान् विदूषो याति स देवयुः धार्मिकः ।

– उ०को०, १/३७

देव + √या – प्रापणे + कुः प्रत्ययः (मृगय्वादयश्च – उ०को०, १/३७)।

## देवरः

**दीव्यति क्रीडादिकं करोतीति देवरः विधवाया द्वितीयः पतिः, पत्युः कनिष्ठभ्राता। – उ०को०, ३/१३२**

√दिवु – क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमस्वप्नकान्तिगतिषु + अरः प्रत्ययः (अर्त्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् – उ०को० ३/१३२)।

## देवलः

**दीव्यत्यधर्मिणो विजिगीषतीति देवलः धार्मिकः। – उ०को०, १/१०६**

देव+कल प्रत्ययः (वृषादिभ्यश्चित्–उ०को०, १/१०६)।

## देववाताः

**ये देवैर्विद्वद्भिः सह वान्ति।– ऋ०, ३/२०/२**

(प्र०ब०व०) – देव + √वा – गतिगन्धनयोः + क्तः प्रत्ययः।

## देववीतमः

**यो देवान् दिव्यान् गुणान् विदुषो वेति व्याप्नोति सोऽतिशयितः। – यजु०, ३८/१७**

देव + √वी – गतिव्याप्तिप्रजनकान्त्यसनखादनेषु + क्विप् प्रत्ययः + अतिशायने तमप् प्रत्ययश्च।

## देववीतये

**देवानां विदुषां दिव्यगुणानां वा वीतिर्ज्ञानं प्रापणं प्रजनं व्याप्तिः प्रकाशः, अन्येभ्यः उपदेशनं विविधभोगो वा यस्यां तस्यै। – यजु०, १/१५**

(च०ए०व०) – देव + √वी – गतिव्याप्ति प्रजनकान्त्यसनखादनेषु + क्तिन् प्रत्ययः स्त्रियाम्।

## देवव्यचाः

**यो देवान् पृथिव्यादीन् व्यचति व्याप्नोति सः। – ऋ०, ३/४/४**

देव + √व्यच् – व्याजीकरणे + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९)।

## देवश्रवः

**यो देवेभ्यो विद्वद्भ्यः शृणोति तत्सम्बुद्धौ। – ऋ०, ३/२३/३**

**देवान् यः शृणोति सः। – ऋ०, ३/२३/२**

देव + √श्रु – श्रवणे + असुन् प्रत्ययः।

## देवश्रीः

**श्रीयते या सा श्रीर्देवेषु विद्यते यस्य सः। – यजु०, १७/५६**

देव + √श्रिञ् – सेवायां + क्विप् प्रत्ययः धातोर्दीर्घश्च (क्विप् वाचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं च – उ०को०, २/५८)।

## देवश्रुतः

**या देवान् शृण्वन्ति ताः। – यजु०, ६/३०**

**यो देवान् विदुषः शृणोति सः। – यजु०, ३७/१८**

देव + √श्रु – श्रवणे + क्विप् प्रत्ययः तुगागमश्च।

## देवहूः

**देवान् विदुष आह्वयति सः। – यजु०, १७/६२**

देव + √ह्वेञ् – स्पर्द्धायां शब्दे च + क्विप् प्रत्ययः सम्प्रसारणञ्च।

## देवहूतमान्

**ये देवैः विद्वद्भिर्हूयन्ते स्तुवन्ते तेऽतिराचितास्तान्। – यजु०, ३३/४**

(द्वि०ब०व०)– देव + √ह्वेञ् – स्पर्द्धायां शब्दे च + क्विप् प्रत्ययः सम्प्रसारणं, अतिशायने तमप् प्रत्ययः।

## देवहूतिः

देवा विद्वांस आह्वयन्ति यया सा ।

– ऋ०, ६/६५/५

देव + ✓ह्वेञ् – स्पर्द्धायां शब्दे च + क्विप् प्रत्ययः स्त्रियाम् ।

## देवाः

दिव्यगुणयुक्ताः । – यजु०, १/१२

दीव्यन्ति प्रकाशन्ते सत्कर्मानुष्ठानेन ये तेभ्यो धर्म्मिष्ठेभ्यो विद्वद्भ्यः ।

– यजु०, ६/११

दिव्यसुखप्रदाः । – यजु०, १५/१३

दीव्यति क्रीडादिकं करोतीति देवा पत्युः कनीयान् भ्राता वा । – उ०को०, २/९९

देव + ऋ प्रत्ययः (दिवे ऋ – उ०को०, २/९९)।

## देवाच्या

या देवानञ्चति तया । – ऋ०, १/१२७/१

(तृ०ए०व०) – देव + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः, न लोपः (अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४), अकार लोपः (अचः अष्टा०, ६/४/१३८), पूर्वपदस्य दीर्घश्चेति (चौ – अष्टा०, ६/३/१३८) स्त्रियां ङीप् प्रत्ययश्चेति।

## देवावी

यो देवानवति सः । – ऋ०, ३/२९/८

ये दीव्यन्ति विद्यादि गुणैः प्रकाशन्ते तत्संबुद्धौ । – यजु०, ४/५

यो देवानवति स देवावीस्तम् ।– यजु०, ७/२३

देवान् दिव्यान् विदुषो गुणान् वाऽवन्ति येन स देवावीस्तम् । – यजु०, १२/८

देव + ✓अव – रक्षणगत्यादिषु + ईः प्रत्ययः (अवितृस्तृतन्त्रिभ्य ईः – उ०को०, ३/१५८) ।

## देविलः

देवते प्रकाशयति धर्ममिति देविलः धार्मिको वा । – उ०को०, १/५६

✓दिवु – क्रीडाविजिगीषादिषु + इलच् प्रत्ययः (गुपादिभ्यः कित् – उ०को०, १/५६) ।

## देष्णुः

ददातीति देष्णुः दानशीलो वा ।

– उ०को०, ३/१६

✓डुदाञ् – दाने + इष्णुच् प्रत्ययः (गादाभ्यामिष्णुच् – उ०को०, ३/१६) ।

## दो

दाम्यत्युपशाम्यति यो येन वा स दोः दोषौ, दोषः, बाहूर्वा । – उ०को०, २/६९

✓दमु – उपशये + डोसिः प्रत्ययः (दमेर्डोसिः – उ०को०, २/६९) ।

## दोषा

दुष्यतीति दोषा रात्रिर्वा ।– उ०को०, ४/१७५

✓दुष – वैकृत्ये + आः प्रत्ययः बाहुलकात् (आः समिणुनिकषिभ्याम् – उ०को०, ४/१७५) ।

## द्रप्साः

दृप्यन्ति संहृष्यन्ते बलानि सैन्यानि वा यैस्ते।

– ऋ०, १/१४/४

✓दृप – हर्षमोहनयोः + सः प्रत्ययः (वृतृवदिवचिवसिहनिकमिकषिभ्यः सः – उ०को०, ३/६२) ।

## द्रवरः

यो द्रवे रमते द्रवान् ददाति वा ।

– ऋ०, ४/४०/२

✓द्रु – गतौ + वन् प्रत्ययः निपातनात् (सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे – उ०को०, १/१५३) > द्रव + ✓रमु – क्रीडायां, ✓रा – दाने वा + डः प्रत्ययः (अन्येष्वपि दृश्यते – अष्टा०, ३/२/१०१) ।

## द्रविणं

द्रवन्ति भूतानि यस्मिन् तद्धनम् ।

– यजु०, ८/१७

**द्रवति गच्छति द्रयते प्राप्यते वा तद् द्रविणं सुवर्णं पराक्रमो वा । – उ०को०, २/५०**

✓द्रु – गतौ + इनन् प्रत्ययः (द्रुदक्षिभ्यामिनन् – उ०को०, २/५१) गुण अवादेशश्चेति ।

## द्रविणोदः

**द्रविणांसि विद्याबलराज्यधनानि ददातीति स परमेश्वरो भौतिको वा ।**

**– यजु०, १/१५/७**

**विद्यादेर्धनस्य दाता तत्संबुद्धौ ।**

**– ऋ०, १/१५/१०**

**यो द्रविणांसि ददाति सः । – ऋ०, १/९६/८**

**यो द्रविणं ददाति सः । – ऋ०, २/३६/४**

**यो द्रविणो ददाति तत्सम्बुद्धौ ।**

**– ऋ०, २/३७/१**

**ये द्रविणं बलं ददति ते । – यजु०, १२/२**

**ददातीति दाः, द्रविणस्यात्मशुद्धिकरस्य यो द्रविणो धनं यशो वा ददाति सः ।**

**– यजु०, २६/२२**

द्रविणस् + ✓डुदाञ् – दाने + कः प्रत्ययः (आतोऽनुपसर्गे कः – अष्टा०, ३/२/३), पूर्वपदस्य छान्दस सुगागमश्चेति (सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः - (अष्टा०वा० ७/१/५१)

## द्रुः

**यं द्रवन्ति कार्यार्थं प्राणिनः आप्नुवन्तीति स द्रुः वृक्षः शाखा वा। – उ०को०, १/३५**

✓द्रु – गतौ + कु प्रत्ययः बाहुलकात् (शते च – उ०को०, १/३५) ।

## द्रुपदेषु

**द्रूणां वृक्षादीनां पदानि फलादि प्राप्तिनिमित्तानि येषु तेषु । – ऋ०, १/२४/१३**

(स०ब०व०) – ✓दृ॰ – विदारणे + कुः प्रत्ययः (शते च – उ०को०, १/३५) > द्रु + ✓पद – गतौ + कः प्रत्ययः घञर्थे क विधानम् ।

## द्रुमः

**द्रुवः शाखा अस्मिन् सन्तीति द्रुमः वृक्षः।**

**– उ०को०, १/३५**

✓द्रु – गतौ + मः प्रत्ययः (द्युद्रुभ्यां मः – अष्टा०, ५/२/१०८) ।

## द्रुषद्वा

**यो द्रुषद्द्रवीभूतादिषु पदार्थेषु सीदति ।**

**– ऋ०, ६/३/५**

द्रु + ✓षद्लृ – विशरणगत्यवसादनेषु + वनिप् प्रत्ययः ।

## द्रुहन्तरः

**द्रुहं तरति येन सः । – ऋ०, १/१२७/३**

✓द्रुह – जिघांसायां + क्विप् प्रत्ययः + ✓तॄ – प्लवनसंतरणयोः + अप् प्रत्ययः ।

## द्रुहिणः

**द्रुह्यति जिघांसतीति द्रुहिणः ब्रह्मा वा ।**

**– उ०को०, २/४९**

✓द्रुह – जिघांसायां + इनच् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/४९) ।

## द्रापिः

**यो द्रः कुत्साया गतेः पाति रक्षति तत्संबुद्धौ। – यजु०, १६/४७**

✓द्रा – कुत्सायांगतौ + क्विप् प्रत्ययः > द्रा + ✓पा – रक्षणे + इन् प्रत्ययः ।

## द्रुह्युः

**यो द्रोग्धि तम् । – ऋ०, ७/१८/१२**

**ये दुष्टानधार्मिकान् द्रुह्यन्ति जिघांसन्ति ।**

**– ऋ०, ७/१८/१४**

(प्र०ब०व०) – √द्रुह – जिघांसायां + क्युः प्रत्ययः (छन्दसि परेच्छायां – अष्टा०, ३/१/८) > द्रुह्य + उ प्रत्ययः (क्याच्छन्दसि – अष्टा०, ३/२/१७०)।

## द्रूः

द्रूयते प्राप्यते दुःखमनया सा द्रूः हिरण्यं वा। – उ०को०, २/५७

√द्रु – गतौ + क्विप् प्रत्ययः दीर्घश्चेति (क्विप् वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च – उ०को०, २/५७)।

## द्रोणः

द्रवन्ति येन विमानादियानेन तत्।

– ऋ०, ६/४४/२०

द्रवति गच्छतीति द्रोणः कृष्णकाको मानविशेषोऽर्जुनगुरुर्वा। – उ०को०, ३/१०

√द्रु – गतौ + नः प्रत्ययः, (कृवृजृसिद्रूपन्यनिस्वपिभ्यो नित् – उ०को०, ३/१०)।

## द्रोणिः

द्रवन्ति गच्छन्ति यत्र स द्रोणिः सेचनी देशविशेषो वा। – उ०को०, ४/५१

√द्रु – गतौ + निः प्रत्ययः (वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् – उ०को०, ४/५१)।

## द्युक्षं

दिवि प्रकाशे क्षियन्ति निवासयन्ति ते।

– ऋ०, ३/४०/५

द्यौर्नीतिः प्रकाशः क्षियति निवसति यस्मिंस्तत्। – यजु०, ३/३१

द्यु + √क्षि – निवासगत्योः + डः प्रत्ययः।

## द्युतद्यामा

द्युतद्दीप्यमानमग्निं यान्ति तम्।

– यजु०, ३३/५५

√द्युत् – दीप्तौ + शतृ प्रत्ययः द्युतत् + √या प्रापणे + मनिन् प्रत्ययः।

## द्युतं

कारणस्थां दीप्तिम्। – यजु०, ३/१६

√द्युत – दीप्तौ + क्विप् प्रत्ययः।

## द्युम्नासाहं

द्युम्नानि धनानि सहन्ते येन। – ऋ०, १/१२१/८

√द्युत – दीप्तौ + नक् प्रत्ययः धातोर्मकारश्चान्तादेशः > द्युम्न + √षह – मर्षणे + ण्विः प्रत्ययः (छन्दसि सहः – अष्टा०, ३/२/६३)।

## द्युवा

द्यौत्यभिगच्छतीति द्युवा सूर्यो वा।

– उ०को०, १/१५६

√द्यु – अभिगमने + कनिन् प्रत्ययः (कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः – उ०को० १/१५६)।

## द्योतनः

द्योततेऽसौ द्योतनः प्रदीपो वा।

– उ०को०, २/७८

√द्युत – दीप्तौ + युच् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/७८)।

## द्यौः

द्योतन्ते लोका अस्यां वा यया द्योतते सा द्यौः अन्तरिक्षो वा। – उ०को०, २/६७

√द्युत – दीप्तौ + डौः प्रत्ययः बाहुलकात् (गमेर्डोः – उ०को०, २/६७)।

## द्यौत्रं

दीव्यति द्योतते प्रकाशते तद् द्यौत्रम्।

– उ०को०, ४/१६१

√दिवु – क्रीडाविजिगीषादिषु + ष्ट्रन प्रत्ययः, धातोः द्युत् च (दिवेर्द्युच्च – उ०को०, ४/१६१)।

## द्वरः

यो द्वरत्यावृणोति। – ऋ०, १/५२/३

√द्वृ – संहारे, आवरणे च + अच् प्रत्ययः।

## द्वाः

द्वारयति संवृणोति यया सा द्वाः द्वारौ ।

– उ०को०, २/५७

✓द्वृ – संहारे आवरणे च + क्विप् प्रत्ययः बाहुलकात् धातोः दीर्घश्चेति ।

## द्विबर्हाः

या द्वाभ्यां रात्रिदिनाभ्यां ब्रंहयति बर्धयति।

– ऋ०, ५/८०/४

द्वि + ✓बृह – बृद्धौ + असुन् प्रत्ययः ( सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९ ) ।

## द्विषः

ये धर्मं द्विषन्ति तान् । – ऋ०, १/९७/७

ये द्विषन्ति तान् । – ऋ०, ६/४५/६

द्विषन्त्यप्रीणयन्ति याभ्यः शत्रुसेनाभ्यो दुःखक्रियाभ्यो वा ताः । – यजु०, ४/२९

( द्वि०ब०व० ) – ✓द्विष – अप्रीतौ + क्विप् प्रत्ययः ।

## द्वेषः

द्विषन्ति ये शत्रवस्ते । – ऋ०, १/४८/८

ये द्विषन्ति ते । – ऋ०, ५/२०/२

ये द्विषन्ति तान् । – यजु०, ३८/२०

( प्र०ब०व० ) – ✓द्विष – अप्रीतौ + घञ् प्रत्ययः।

## धर्णिः

यो धरति सः । – ऋ०, १/१२७/७

✓धृञ् – धारणे + निः प्रत्ययः बाहुलकात् ( वीज्याज्वरिभ्यो निः – उ०को०, ४/४९ ) ।

## धनं

यद्धिनोति वर्धयति तत् । – यजु०, १२/८२

दधाति यत्तत् इति धनं वसुर्वा ।

– उ०को०, २/८१

✓डुधाञ् – धारणपोषणयोः + क्युः प्रत्ययः बाहुलकात् ( कृपॄवृजिमन्दिनियधाञः क्युः – उ०को०, २/८१ )।

## धनजित्

यो धनेन जयति तस्मै । – ऋ०, २/२१/१

धनं जयत्युत्कर्षति येन तम्। – यजु०, ११/८

धन + ✓जि – जये + क्विप् प्रत्ययः, तुगागमश्च ( ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९ )।

## धनञ्जयं

यो धनं जयति तम् । – ऋ०, ३/४२/६

यः शत्रुभ्यो धनं जयति तम् ।

– यजु०, ११/३४

धन + ✓जि – जये + खच् प्रत्ययः ( सञ्ज्ञायां मृतॄतृजिधारिसहितपिदमः – अष्टा०, ३/२/४६ ) पूर्वपदस्य मुमागमश्च ( अरुर्द्विषदजन्तस्य मुम् – अष्टा०, ६/३/६६ ) ततः गुणः अयादेशश्च ।

## धनदाः

यो धनं ददाति । – ऋ०, ६/१९/४५

यो धनं ददाति सः । – ऋ०, ७/३२/१७

धन + ✓डुदाज – दाने + क्विप् प्रत्ययः ।

## धनसां

यो धनानि सनोति विभजति तम् ।

– ऋ०, १/११२/७

धनानि सनन्ति संभजन्ति यया ताम् ।

– ऋ०, १/११२/१०

धन + ✓षण – सम्भक्तौ + विट् प्रत्ययः ( जनसनखनक्रमगमो विट् – अष्टा०, ३/२/६७ ) आत्वञ्च ( विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१ ) ।

## धनस्पृत्

यो धनं स्पृणोति सेवते सः ।

– ऋ०, ३/४६/२

धन + ✓स्पृ – प्रीतिपालनयोः + क्विप् प्रत्ययः तुगागमश्चेति ।

## धनुः

धन्यते धनं प्राप्यतेऽनेनेति धनुः शास्त्रं शस्त्रं वा । – उ०को०, १/७

दिधन्ति धनादिकं प्राप्नोति येन तत् धनुः वाणक्षेपणं वा । – उ०को०, २/११७

✓धन – धान्ये, गत्यर्थे च + उः अथवा उसिः प्रत्ययः (भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः – उ०को०, १/७) अथवा (अर्त्तिपृवपियजितनिधनितपिभ्यो नित् – उ०को०, २/११७) ।

## धनुष्कारं

यो धनुरादीनि करोति तम् ।

– यजु०, ३०/७

धनुः + ✓डुकृञ् – करणे + अण् प्रत्ययः ।

## धनूः

दधाति धनमर्जयति स धनूः शस्त्रं वा ।

– उ०को०, १/८०

✓धन – धान्ये गत्यर्थे च + ऊः प्रत्ययः (कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः स्त्रियाम् – उ०को०, १/८०) ।

## धन्वं

दधाति धान्यहेतुर्भवतीति धन्वं धनुर्वा ।

– उ०को०, ४/९५

✓धन – धान्ये गत्यर्थे च + वन् प्रत्ययः निपातनात् (उल्बादयश्च – उ०को०, ४/९५) ।

## धन्वा

धन्वति गच्छतीति धन्वा वाणक्षेपणं वा।

– उ०को०, १/१५६

✓धवि – गत्यर्थे + कनिन् प्रत्ययः (कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः – उ०को०, १/१५६) धातोः नुगागमश्चेति ।

## धन्वचरः

यो धन्वन्यन्तरिक्षे चरति। – ऋ०, ५/३६/७

धन्व + ✓चर – गतौ + टः प्रत्ययः (चरेष्टः – अष्टा०, ३/२/१६) ।

## धमकः

धमति शब्दं करोतीति अग्निं वा संयुनक्ति स धमकः कर्मकारो वा ।

– उ०को०, २/३५

✓ध्मा – शब्दाग्निसंयोगयोः + क्वुन् प्रत्ययः, धातोर्धमादेशश्च (ध्मो धम च – उ०को०, २/३५)।

## धमनिः

धमति प्रापयति रसादिकमिति धमनिः नाडी वा । – उ०को०, २/१०२

✓ध्मा – शब्दाग्निसंयोगयोः प्रापणे च 'ध्मा' धातोः धमादेशः ततः अनिः प्रत्ययः (अर्तिसृधृधम्यभ्यश्यवितृभ्योऽनिः – उ०को०, २/१०२) ।

## धरणिः

धरति सर्वमिति धरणिः पृथिवी वा ।

– उ०को०, २/१०२

✓धृञ् – धारणे + अनिः प्रत्ययः (अर्तिसृधृधम्यश्यवितृभ्योऽनिः – उ०को०, २/१०२) ।

## धरित्री

धरतीति धरित्री पृथिवी वा ।

– उ०को०, ४/१७३

✓धृञ् – धारणे + इत्र प्रत्ययः (अशित्रादिभ्य इत्रोत्रौ – उ०को०, ४/१७३) ।

## धरिमा

ध्रियते इति धरिमा रूपं वा ।

– उ०को०, ४/१४८

✓धृञ् – धारणे + इमनिच् प्रत्ययः (हृभृधृसृस्तृशृभ्य इमनिच् – उ०को०, ४/१४८) ।

## धरुणं

धरति सर्वलोकान् यत्तत् तेजश्च ।

– यजु०, १/१८

✓धृञ् – धारणे + उनन् प्रत्ययः (अर्त्तेश्च – उ०को०, ३/५९) ।

## धर्त्रं

धरतीति धर्त्रं गृहं वा । – उ०को०, ४/१६७

✓धृञ् – धारणे त्रः प्रत्ययः ( गुधृवीपचिवचियमिसदिक्षदिभ्य स्त्रः – उ०को०, ४/१६७ ) ।

## धर्मः

ध्रियते सुखप्राप्तये सेव्यते स धर्मः पक्षपातरहितो न्यायः सत्याचारो वा ।

– उ०को०, १/१४०

✓धृञ् – धारणे + मन् प्रत्ययः ( अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४० )।

## धर्मराजः

यो धर्म्मे राजते स धर्मराजः ।

*स० प्र० ( प्रथमसमुल्लासः )*

धर्म + ✓राजृ – दीप्तौ + कनिन् प्रत्ययः ( कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः–उ०को०, १/१५६ )।

## धर्षणिः

कृषतीति धर्षणिः पुंश्चली स्त्री वा ।

– उ०को०, २/१०४

✓कृष – विलेखने + अनिः प्रत्ययः कृषेरादेः धकारादेशश्च ( कृषेरादेश्च ध – उ०को०, २/१०४ )।

## धवलः

धावति गच्छति शुद्धो भवति वा स धवलः श्वेतः शुद्धो वा । – उ०को०, १/१०६

✓धावु – गतिशुद्ध्योः + कल प्रत्ययः, धातोः ह्रस्वत्वं बाहुलकाच्च ( वृषादिभ्यश्चित् – उ०को०, १/१०६ )।

## धवाणकः

धूनोतीति धवाणकः वायुर्वा ।

– उ०को०, ३/८३

✓धूञ् – कम्पने + आणकः प्रत्ययः ( आणको लूधूशिङ्घिधाञ्भ्यः – उ०को०, ३/८३ ) ।

## धाकः

दधातीति धाकः आधारोऽनड्वान् वा ।

– उ०को०, ३/४०

✓डुधाञ् – धारणपोषणयोः + कः प्रत्ययः ( कॄदाधारार्चिकलिभ्यः कः – उ०को०, ३/४० ) ।

## धाणकः

दधाति धीयते वा स धाणकः व्यवहारयोग्यं द्रव्यभागो वा । – उ०को०, ३/८३

✓डुधाञ् – धारणपोषणयोः + आणकः प्रत्ययः ( आणको लूधूशिङ्धिधाञ्भ्यः – उ०को०, ३/८३ )।

## धातकी

दधातीति धातकं स्त्रियां धातकी पुष्पभेदः।

– उ०को०, ३/१४८

✓डुधाञ् – धारणपोषणयोः + तकन् प्रत्ययः बाहुलकात् ( इष्यशिभ्यां तकन् – उ०को०, ३/१४८ ), स्त्रियां ङीप् च ।

## धाता

दधाति सकलं जगत् पोषयति वा स धातेश्वरः। – *ऋ० भा० भू० सन्ध्योपासनम्*

दधाति इति धाता ईश्वरो वा ।

– उ०को०, २/९४

✓डुधाञ् – धारणपोषणयोः + तृन् प्रत्ययः बाहुलकात् ( बहुलमन्यत्रापि – उ०को०, २/९४ ) ।

## धातुः

दधाति धरति पोषति वा स धातुः अश्मनो विकारः सुवर्णादि शरीरस्थवातादि वा।

– उ०को०, १/६९

✓डुधाञ् – धारणपोषणयोः + तुन् प्रत्ययः ( सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् – उ०को० १/६९ )।

## धानाः

धीयन्ते यासु ता दीप्तयः । – ऋ०, १/१६/२

दधातीति धानाः अग्निपक्वा यवा वा ।

– उ०को०, ३/६

✓डुधाञ् – धारणपोषणयोः + नः प्रत्ययः ( धापॄवस्यज्यविभ्यो नः – उ०को०, ३/६ ) नित्यं स्त्रीलिङ्गो बहुवचनान्तश्चोऽयं शब्दः ।

## धान्यं

दधाति पुष्णाति लोकमिति धान्यं व्रीहिर्वा।

– उ०को०, ५/४८

✓डुधाञ् – धारणपोषणयोः + यत् प्रत्ययः, नुडागमश्चेति ( दधातेर्यन्नुट् च – उ०को०, ५/४८ )।

## धाम

दधति सर्वाणि वस्तूनि येषु तैः सह ।

– ऋ०, १/२२/१६

दधाति प्राप्नोति विद्यादिसुखं यस्मिंस्तत्।

– ऋ०, १/५७/३

धीयन्ते पदार्था यस्मिंस्तत् ।

– ऋ०, १/९१/३

दधति वस्तूनि सुखानि च यस्मिन् तस्मै।

– यजु०, १/३०

धीयन्ते सर्वे पदार्था यस्मिन् तत् ।

– यजु०, १/३१

दधति येषु तानि धामानि । – यजु०, ३/८

दधति सुखानि यस्मिंस्तत् । – यजु०, १७/१४

दधाति यद्यत्र वेति धाम स्थानं तेजो वा।

– उ०को०, ४/१५१

✓डुधाञ् – धारणपोषणयोः + मनिन् प्रत्ययः बाहुलकात् ( नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन् – उ०को०, ४/१५१ ) ।

## धामच्छत्

यो धामानि छादयति संवृणोति सः ।

– यजु०, १८/७६

धामन् + ✓छद – अपवारणे + क्विप् प्रत्ययः ।

## धायुः

यो दधाति सर्वाणि कर्माणि स धायास्तस्मै । – ऋ०, १/३१/१३

यो दधाति सः । – ऋ०, ३/३०/७

✓डुधाञ् – धारणपोषणयोः + उः प्रत्ययः, युडागमश्चेति ।

## धासाः

दधातीति धासाः पर्वतो वा ।

– उ०को०, ४/२२१

✓डुधाञ् – धारणपोषणयोः + असुन् प्रत्ययः ( वहिहाधाञ्भ्यश्छन्दसि – उ०को०, ४/२२१ ) ।

## धियन्धाः

ये प्रज्ञां कर्म वा दधति ते। – ऋ०, १/६७/२

यो धियं प्रज्ञां शिल्पविद्यां कर्म दधाति ।

– ऋ०, ४/४६/७

ये श्रेष्ठां प्रज्ञामुत्तमं कर्म दधति ते ।

– यजु०, २९/२७

✓ध्यै – चिन्तायां + क्विप् प्रत्ययः सम्प्रसारणञ्च ( ध्यायते सम्प्रसारणञ्च – अष्टा०वा०, ३/२/१७८ ) > धियं + ✓डुधाञ् > धारणपोषणयोः + कः प्रत्ययः ( आतोऽनुपसर्गे कः – अष्टा०, ३/२/३ ) ।

## धियञ्जिन्वः

यो धियं जिन्वति प्रीणाति सः ।

– ऋ०, ६/५८/२

यो धियं प्रज्ञां जिन्वति प्रीणाति तम् ।

– यजु०, २५/१८

धियं + ✓जिवि – प्रीणनार्थे + अण् प्रत्ययः ।

## धियावसुः

यः प्रज्ञया कर्मणा वा वसति सः ।

– ऋ०, १/६२/१३

यः प्रज्ञाः कर्माणि च वासयति सः ।

– ऋ०, ३/३/२

**यो धियां प्रज्ञया सुकर्मणा वा वासयति।**
– ऋ०, ३/२८/१

धिया (तृ०ए०ब०) + √वस – निवासे + उः प्रत्ययः (शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१०)।

## धिषणा

**वाक् वेदवाणी ग्राह्या। धृष्णोति सर्वा विद्या यया सा।** – यजु०, १/१९

**धृषणीति प्रागल्भ्यं ददाति स धिषणा, गुरुः बुद्धिर्वा।** – उ०को०, २/८२

√धृषा – प्रागल्भ्ये + क्युः प्रत्ययः, धातोः धिषादेशः (धृषेर्धिष च संज्ञायाम् – उ०को०, २/८२), स्त्रियां टाप् च।

## धिष्ण्यः

**धृष्णोति प्रगल्भो भवतीति धिष्ण्यः स्थानमृक्षोऽग्निरालयो वा।** – उ०को०, ४/१०७

√धृषा – प्रागल्भ्ये + ण्यः प्रत्ययः (सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः – उ०को०, ४/१०७), धातोः ऋकारस्येकारो धिषादेशो वेति।

## धिष्णया:

**यौ धेष्येते शब्द्येते स्तूयेते तौ।** – ऋ०, २/४१/९

**दिधिषन्ति शब्दयन्ति यैस्ते धिष्णाः खुरोपरिभागास्तेषु साधवः।** – यजु०, १२/४

**ये दिधिषन्ति ब्रुवन्ति ते धिषाणस्तेषु साधवः।** – यजु०, १२/४९

(प्र०ब०व०) – √धिष – शब्दे + ण्यः प्रत्ययः (सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः – उ०को०, ४/१०७), आकारदेशश्च।

## धीतिः

**दधात्यर्थान् याभिः कर्मवृत्तिभिस्ताः।**
– ऋ०, १/२५/१६

**धीयन्ते प्राप्यन्ते सुखानि अनया क्रियया तस्यै।** – ऋ०, १/१४१/५

**धियन्ति विजयं यया ताम्।** – ऋ०, १/१४३/१

√डुधाञ् – धारणपोषणयोः अथवा √धि-धारणे अथवा √धीङ् - आधारे + क्तिन् प्रत्ययः स्त्रियाम्।

## धीरः

**दधाति सर्वान् षोषयति वा स धीरः पण्डितो वा।** – उ०को०, २/२४

√डुधाञ् – धारणपोषणयोः + क्रन् प्रत्ययः, धातोः (सुसूधाञ्गृधिभ्यः क्रन् – उ०को०, २/२४)।

## धीवरः

**दधातीति धीवरः नौवाहको वा।**
– उ०को०, ३/१

√डुधाञ् – धारणपोषणयोः + ष्वरच् प्रत्ययः, धातोः ईत्वञ्च (छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः – उ०को०, ३/१)।

## धीवा

**ध्यायतीति धीवा कर्मकारो वा।**
– उ०को०, ४/११५

√ध्यै – चिन्तायां + क्वनिप् प्रत्ययः धातोः सम्प्रसारणञ्च (ध्याप्योः सम्प्रसारणञ्च – उ०को०, ४/११५)।

## धुरि

**या धरति तस्याम्।** – ऋ०, १/१६४/९

√धृञ्-धारणे+इः प्रत्ययः (कृगृशृपृकुटिभिदिछिदिभ्यश्च - उ०को० ४/१४३), धातोरङ्गस्य बहुलमुकारादेशश्च (बहुलं छन्दसि - अष्टा० ७/१/१०३)

## धुस्तूरः

**धुनोति कम्पयतीति धुस्तूरः कनकाह्वयः धतुराः इति प्रसिद्धः।** – उ०को०, ४/९०

√धुञ् – कम्पने + ऊरः प्रत्ययः, धातोः तुगागमश्च (खर्जिपिञ्जादिभ्य ऊरोलचौ – उ०को०, ४/९०)।

## धूकः

धूनोति कम्पयतीति धूकः वायुर्वा ।

– उ०को०, ३/४७

√धुञ् – कम्पने + कन् प्रत्ययः धातोः दीर्घश्च (अजियुधुनीभ्यो दीर्घश्च - उ०को०, ३/४७) ।

## धूतयः

ये धून्वन्ति ते । – ऋ०, १/३७/६

ये धून्वन्ति ते । – ऋ०, १/३९/१०

धूयन्ते युद्धक्रियासु ये ते । – ऋ०, १/८७/३

ये धुन्वन्ति । – ऋ०, ५/५४/४

ये पापं धूनयन्ति ते । – ऋ०, ५/६१/१४

(प्र०ब०व०) – धूञ् – कम्पने + तिः प्रत्ययः बाहुलकात् ।

## धूमः

धूनोति कम्पयतीति धूमःअग्निसम्भवो वा।

– उ०को०, १/१४५

√धूञ् – कम्पने + मक् प्रत्ययः (इषियुधीन्धिदसिश्या धूसूभ्यो मक् – उ०को०, १/१४५) ।

## धूर्त्तः

धूर्वतीति धूर्त्तः शठो लवणं धत्तूरं वा ।

– उ०को०, ३/८६

√धुर्वी – हिंसार्थे + तन् प्रत्ययः (हसिमृग्रिण्वामिदमिनूपूधूर्विभ्यस्तन् – उ०को०, ३/८६) ।

## धूर्षदं

यो धूर्षु हिंसकेषु सीदति तम् ।

– ऋ०, १/१४४/७

धुरि सीदन्ति । – ऋ०, २/३४/४

√धुर्वी – हिंसार्थे + क्विप् प्रत्ययः, वकारलोपः (राल्लोपः – अष्टा०, ६/४/२१) उपधादीर्घश्च (र्वोरुपधाया दीर्घ इकः – अष्टा०, ८/२/७६) – धूः + √षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## धूर्षाहौ

यौ धुरं पृथिव्याः शरीरस्य ज्ञानानां वा धारणं सहेते तौ । – यजु०, ४/३३

(प्र०ब०व०) – धूर् + √षह – मर्षणे + अण् प्रत्ययः ।

## धूसरः

धुनोतीति धूसरः ईषत्पाण्डुरो वा ।

– उ०को०, ३/७३

√धू – विधूनने + सरन् प्रत्ययः (कृधूमदिभ्यः कित् – उ०को०, ३/७३) ।

## धृता

ध्रियते यया तया । – यजु०, ४/१७

√धृञ् – धारणे + क्तः प्रत्ययः धृतः, स्त्रियां टाप् प्रत्ययश्च ।

## धृतिः

धरन्ति यया सा । – यजु०, १८/७

√धृञ् – धारणे + क्तिन् प्रत्ययः स्त्रियाम् ।

## धृत्वा

धारयतीति धृत्वा व्यापको जगदीश्वरो वा । – उ०को०, ४/११४

√धृञ् – धारणे + क्वनिप् प्रत्ययः (शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् – उ०को०, ४/११४) ।

## धृषत्

यो धृष्णोति दृढं कर्म करोति सः मनः ।

– ऋ०, १/५४/३

√धृषा – प्रागल्भ्ये + अतिः प्रत्ययः ।

## धृषन्मनः

धृषद्धृष्यते मनः सर्वस्यान्तःकरणं येन तत्सम्बुद्धौ । – ऋ०, १/५२/१२

धृषत् + मनस्, एतयोः पदयोः समासः (व्याख्यातश्च)।

## धृष्णवे

**यो धृष्णोति दृढो निर्भयो भवति तस्मै ।**
– यजु०, १६/३६

(च०ए०व०) – √धृषा – प्रागल्भ्ये + क्नुः प्रत्ययः (त्रसिगृधिधृषिक्षिपेः क्नुः – अष्टा०, ३/२/१४०)।

## धृषुः

**धृष्णोति प्रगल्भ्ये भवतीति धृषुः दक्षः ।**
– उ०को०, १/२३

√धृषा – प्रागल्भे + कुः प्रत्ययः (पॄभिदिव्यधिगृधिधृषिहृषिभ्यः – उ०को०, १/२३) ।

## धेनः

**धयन्ति पिबन्ति यस्मात्स धेनः समुद्रो धेना: नदी वा ।** – उ०को०, ३/११

√धेट् – पाने + नः प्रत्ययः (धेट इच्च – उ०को०, ३/११) ।

## धेनुः

**या धयन्ति पाययन्ति ताः ।**
– ऋ०, १/१५१/५

**धयन्ति पिबन्ति यस्याः सा धेनुः नव प्रसूता गौर्वा ।** – उ०को०, ३/३४

(प्र०ब०व०) – √धेट् – पाने + नुः प्रत्ययः (धेट इच्च – उ०को०, ३/३४) ।

## ध्यात्वं

**ध्यायते तद् ध्यात्वं चिन्ता वा ।**
– उ०को०, ४/१०५

√ध्यै – चिन्तायां + त्वन् प्रत्ययः (अन्येभ्योऽपि दृश्यन्ते – उ०को०, ४/१०५) ।

## ध्यामा

**ध्यायते स ध्यामा परिमाणं तेजो वा ।**
– उ०को०, ४/१५१

√ध्यै – चिन्तायां + मनिन् प्रत्ययः निपातनात् (नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन् – उ०को०, ४/१५१) ।

## ध्वनिः

**ध्वन्यत उच्चर्यते स ध्वनिः शब्दो वा ।**
– उ०को०, ४/१४०

√ध्वन – शब्दे + इः प्रत्ययः (खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च – उ०को०, ४/१४०) ।

## ध्राडिः

**ध्राडते विशेषेण हिनस्तीति ध्राडिः पुष्पचयो वा ।** – उ०को०, ४/११८

√ध्राड़ – विशरणे + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

## ध्रुवं

**ध्रुवन्ति प्राप्नुवन्ति स्थिराणि सुखान्यनया विद्यया सा ।** – यजु०, २/६

**ध्रुवति स्थिरं भवतीति ध्रुवं निश्चलं वा।**
– उ०को०, २/६१

√ध्रु – स्थैर्ये + कः प्रत्ययः बाहुलकात् (स्रुवः कः – उ०को०, २/६१) ।

## ध्रुवक्षित्

**यो ध्रुवाणि सुखानि शास्त्राणि वा क्षियति निवासयति सः ।** – यजु०, ५/१३

ध्रुव + √क्षि – निवासगत्योः + क्विप् प्रत्ययः तुगागमश्च ।

## ध्रुवच्युतः

**ये ध्रुवानपि पदार्थान् च्यावयन्ति निपातयन्ति ते ।** – ऋ०, १/६४/११

(प्र०ब०व०) – ध्रुव + √च्युङ् – गतौ + क्विप् प्रत्ययः, तुगागमश्चेति ।

## ध्रुवसदं

**ध्रुवेषु विद्याविनययोगधर्मेषु सीदन्तम् ।**
– यजु०, ९/२

ध्रुव + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः।

## नक्षत्रं

नक्षत्राणि क्षयरहिता लोकाः ।

– ऋ०, १/५०/२

यो न क्षीयते । – ऋ०, ६/६७/६

यानि कारणरूपेण न क्षीयन्ते तानि भुवनानि । – यजु०, १८/१८

नक्षति गच्छतीति नक्षत्रं तारका वा ।

– उ०को०, ३/१०५

१- ✓णक्ष – गतौ + अत्रन् प्रत्ययः (अमिनक्षियजिवधिपतिभ्योऽत्रन् – उ०को०, ३/१०५) ।

२- न (नञ्) + ✓क्षि – क्षये + अत्रन् प्रत्ययः ।

## नक्षत्रदर्शं

यो नक्षत्राणि पश्यत्येतैर्दर्शयति वा तम् ।

– यजु०, ३०/१०

नक्षत्र + ✓दृशिर् – प्रेक्षणे + अण् प्रत्ययः ।

## नखं

नह्यति बध्नाति रुधिरादिकमिति नखः प्राण्यङ्गं वा । – उ०को०, ५/२३

✓णह – बन्धने + खः प्रत्ययः धातोः हलोपश्च (नहेर्हलोपश्च – उ०को०, ५/२३) ।

## नखिः

नखेनातिक्रामतीति नखयति तस्मात् नखिः।

– उ०को०, ४/१३९

✓नख – गत्यर्थे + इः प्रत्ययः (अच इः – उ०को०, ४/१३९) ।

## नगः

दहति दह्यते वा स नगः पर्वतो वृक्षो वा।

– उ०को०, ५/६१

✓दह – भस्मीकरणे + गः प्रत्ययः धातोः हकारस्य लोपः दकारस्य च नकारादेशः (दहेर्गो हलोपो दश्च नः – उ०को०, ५/६१) ।

## नग्नहूः

यो नग्नान् जूहोत्यादत्ते सः ।

– यजु०, १९/१४

नग्नं शुद्धं जुहोति गृह्णाति सः ।

– यजु०, १९/८३

यो नन्दयति स नग्नस्तं जुहोत्याददाति यस्तम् । – यजु०, २०/५७

यो नग्नान् दुष्टान् जुहोति कारागृहे प्रक्षिपति तम् । – यजु०, २१/३१

न(नञ्) ग्ना – वाङ्नाम > नग्न + ✓हु – दानादानयोः + डूः प्रत्ययः ।

## नटः

नमतीति नटः वंशावरोहीति प्रसिद्धः ।

– उ०को०, ४/१०४

✓णम – प्रह्वत्वे + डटः प्रत्ययः, डित्वादिटलोपः (जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्त्णिक्नन्श-क्स्यढडटोटचः – उ०को०, ४/१०४) ।

## नदनुः

नदत्यव्यक्तं शब्दं करोतीति नदनुः मेघो वा । – उ०को०, ३/५२

✓णद – अव्यक्ते शब्दे + अनुङ् प्रत्ययः (अनुङ् नदेश्च – उ०को०, ३/५२) ।

## नदीवृतं

नदीभिर्वृतो युक्तो नदीर्वर्त्तयति वा तम् ।

– ऋ०, १/५१/२

✓णद – अव्यक्ते शब्दे + अच् प्रत्ययः (नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः – अष्टा०, ३/१/१३४) स्त्रियां ङीप् च > नदी + ✓वृतु – वर्तने + क्विप् प्रत्ययः ।

**नन्दन्तः**

नन्दति समृद्धियुक्तो भवतीति नन्दन्तः पुत्रो वा । – उ०को०, ३/१२७

✓टुनदि – समृद्धौ + झच् प्रत्ययः ( रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि – उ०को०, ३/१२७ ) प्रत्ययादि झकारस्यान्तादेशः ( झोऽन्तः – अष्टा०, ७/१/३ ), धातोर्नुमागमश्चेति ।

**ननन्दाः**

न नन्दति तुष्यतीति ननन्दाः ।

– उ०को०, २/९८

न( नञ् ) + ✓टुनदि – समृद्धौ + तृन् प्रत्ययः ( नञि च नन्देः – उ०को०, २/१०० ), बाहुलकाद् वृद्ध्यभावे ननान्दा च ।

**नन्दयन्तः**

नन्दन्ति येन स नन्दयन्तः आनन्दकरो वा।

– उ०को०, ३/१२८

✓टुनदि – समृद्धौ + झच् प्रत्ययः ( तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च – उ०को०, ३/१२८ ) नुमागमश्च प्रत्ययस्यान्तादेशः ( झोऽन्तः – अष्टा०, ७/१/३ ), अन्त परतो णेरयादेशः ( अयामन्ताल्वाय्येत्विष्णुषु – अष्टा०, ६/४/५५ ) ।

**नन्दिः**

नन्दति यत्रेति नन्दिः वृद्धिर्वा ।

– उ०को०, ४/११८

✓टुनदि – समृद्धौ + इन् प्रत्ययः धातोर्नुमागमश्च ( सर्वधातुभ्य इन् – उ०को०, ४/११८ ) ।

**नपात्**

न विद्यते पातो विनाशो यस्येति तम् ।

– ऋ०, १/२२/६

यो न पातयति जलं तम्। – ऋ०, १/३७/११

न कदाचिदधः पतति । – ऋ०, १/५८/८

न विद्यते पात् पतनं येषां ते ।

– ऋ०, १/१६१/१४

यो न तापयति तत्सम्बुद्धौ । – ऋ०, २/६/२

न पतति कदाचिद्यद्वा न सन्ति पादादयोऽवयवा यस्य सः । – ऋ०, २/३१/६

यो न पतति । – ऋ०, ४/३१/२२

न विद्यते पात् पतनं येषान्ते । – ऋ०, ४/३४/६

ये धर्मान्न पतन्ति ते । – ऋ०, ४/३५/८

या न पतति । – ऋ०, ६/१६/२५

यो विद्युद्रूपो योऽग्निर्न पतति सः ।

– ऋ०, ६/५०/१३

यो न पतति सः । – ऋ०, ६/५५/१

यो न पतति न नश्यति तं मेघमिव ।

– ऋ०, ७/३४/१५

यो न पतति । – ऋ०, ७/४७/२

न विद्यते पातो धर्मात्पतनं यस्य सः ।

– यजु०, १२/१०८

न( नञ् ) + ✓पत्लृ – गतौ + णिच् + क्विप् प्रत्ययः, णिलोपश्च ( बहुलमन्यत्रापि संज्ञाच्छन्दसोः – अष्टा०, ६/४/५१ ) ।

**नप्ता**

यो न पतति तेन् । – ऋ०, ६/१३/३

नयतीति नप्ता पौत्रो दौहित्रो वा ।

– उ०को०, २/९५

न( नञ् ) + ✓पत्लृ – गतौ + तृच् प्रत्ययः निपातनात् ( नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ – उ०को०, २/९५ ) ।

**नभः**

यो नभते हन्ति परपदार्थहर्त्तॄन् सः ।

– यजु०, ५/३२

नह्यन्ति घना यस्मिन् स श्रावणो मासः ।

– यजु०, १४/१५

नह्यति धर्मं बध्नातीति नभः मेघधूल्यादियुक्त आकाशः श्रावणमासो वा ।
– उ०को०, ४/२११

✓णह – बन्धने + भः प्रत्ययः ( नहेर्दिवि भश्च – उ०को०, ४/२११ ) ।

## नभसः

नभते हिनस्तीति नभसः आकाशं वा ।
– उ०को०, ३/११७

✓णभ – हिंसायां + असच् प्रत्ययः ( अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् – उ०को०, ३/११७ ) ।

## नभाकं

न भाति प्रकाशत इति नभाकं मेघयुक्तमाकाशं वा । – उ०को०, ४/१५

न( नञ् ) + ✓भा – दीप्तौ + आक प्रत्ययः ( पिनाकादयश्च – उ०को०, ४/१५ ) ।

## नमतः

नमतीति नम्रो वा । – उ०को०, ३/११०

✓णम – प्रह्वत्वे + अतच् प्रत्ययः ( भृमृदृशियजिपर्विपच्यमितमिनमिहर्य्यिभ्यो ऽतच् – उ०को०, ३/११० )।

## नमसः

नमतीति नमसः अनुकूलं वा ।
– उ०को०, ३/११७

✓णम – प्रह्वत्वे + असच् प्रत्ययः ( अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् – उ०को०, ३/११७ ) ।

## नमुचिः

न विद्यते मुचिर्मोक्षणं यस्य तम् ।
– ऋ०, १/५३/७

योऽधर्मं न मुञ्चति । – ऋ०, २/१४/५

यः स्वं रूपं न मुञ्चति तस्य ।
– ऋ०, ५/३०/७

यो न मुञ्चति तस्य । – ऋ०, ६/२०/६

यः स्वस्वरूपं न मुञ्चति तम् ।
– ऋ०, ७/१९/५

न मुञ्चति परपदार्थान् दुष्टाचरान् वा यः स्तेनस्तस्य । – यजु०, १०/१४

यो न मुञ्चति तस्यासाध्यस्यापि ।
– यजु०, १०/३३

यो जलं न मुञ्चति तस्मात् ।
– यजु०, १९/३४

योऽपः स्वस्वरूपं न मुञ्चति तस्य मेघस्य।
– यजु०, १९/७१

यो न मुञ्चति तस्यासाध्यस्यापि ।
– यजु०, २०/५९

न( नञ् ) + ✓मुच्लृमोचने + इन् प्रत्ययः ( सर्वधातुभ्य इन् – उ०को०, ४/११८ ) ।

## नयनं

नयते प्राप्नोति रूपं येन तत् नयनं नेत्रं वा। – उ०को०, २/७८

✓णीञ् – प्रापणे + युच् प्रत्ययः बाहुलकात् ( बहुलमन्यत्रापि – उ०को०, २/७८ ) ।

## नरः

ये नयन्ति धर्म्यं शिल्पसमूहं च ते नरस्तत्सम्बोधने । – ऋ०, १/२३/११

नयन्ति ये ते नरस्तत्सम्बुद्धौ ।
– ऋ०, १/३७/६

नयन्ति सत्यं व्यवहारं प्राप्नुवन्त्यसत्यं च दूरीकुर्वन्ति तत्सम्बुद्धौ । – ऋ०, १/४१/५

ये नृणन्ति नयन्ति ते मनुष्यास्तत्सम्बुद्धौ ।
– ऋ०, १/६२/३

ये नयन्ति ते मनुष्याः । – ऋ०, १/६७/२

ये विद्यां नयन्ति ते सर्वे मनुष्याः ।
– ऋ०, १/७३/४

कार्याणि नयतीति नाः । – उ०को०, २/१००
✓णीञ् – प्रापणे + ऋ प्रत्ययः डित्वाच्च टेर्लोपः (नयतेर्डिच्च – उ०को०, २/१००) ।

## नरकं

नृणाति नयतीति नरकं पापभागो वा ।
– उ०को०, ५/३५
✓नृ – नये + वुन् (अक) प्रत्ययः (कृञादिभ्यः संज्ञायां वुन् – उ०को०, ५/३५) ।

## नरन्धिषः

नरान् दिधेष्टि शब्दयति । – यजु०, ८/५५
यो नरान् दिधेष्ट्युपदिशति तस्मै ।
– यजु०, २२/२०
नरः + ✓धिष – शब्दे + कः प्रत्ययः ।

## नराशंसः

नरैरभितः शस्यते प्रशस्यते तं सुखसमूहकारकम् । – ऋ०, १/१३/३
नवैः प्रशंसितः । – ऋ०, १/१४२/३
यो नरैराशस्यते सः । – यजु०, २०/३६
यो नरैराशस्यते स्तूयते तम् ।
– यजु०, २१/३१
ये नरानाशंसन्ति तान् । – यजु०, २१/५५
यो नरान् शंसति सः । – यजु०, २७/१३
यो नरान् शंसति स्तौति सः ।
– यजु०, २८/१९
यो नरैराशंस्यते सः । – यजु०, २८/४२
नर + ✓शंसु – स्तुतौ + घञ् प्रत्ययः (हलश्च – अष्टा०, ३/३/१२१) ।

## नरेष्ठां

नरास्तिष्ठन्ति यस्मिंस्तम् । – ऋ०, ४/३३/८
(द्वि०ए०व०) – नर + ✓ष्ठा – गतिनिवृत्तौ + क्विप् प्रत्ययः ।

## नलिनं

नलति गन्धयुक्तो भवतीति नलिनं कमलं वा । – उ०को०, २/४९
✓णल – गन्धे, बन्धने च + इनच् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/४९) ।

## नवजाः

नवेषु सुनवीनेषु जातः । – ऋ०, ४/६/३
नव + ✓जनि – प्रादुर्भावे + डः प्रत्ययः (सप्तम्यां जनेर्डः – अष्टा०, ३/२/९७) ।

## नवन्

नौतीति नवन् संख्या वा ।
– उ०को०, १/१५६
✓णु – स्तुतौ + कनिन् प्रत्ययः बाहुलकात् गुणश्च (सप्यशूभ्यां तुट् च – उ०को०, १/१५६) ।

## नवेदाः

या अविद्यां न विन्दन्ति ताः ।
– ऋ०, १/७९/१
न विद्यन्ते दुःखानि येषु ।
– ऋ०, १/१६५/१३
यो न वेत्ति सः । – ऋ०, ४/२३/४
यो न विन्दति सः । – ऋ०, ५/१२/३
न विद्यते वेदो वित्तं येषान्ते ।
– ऋ०, ५/५५/८
न(नञ्) प्रकृतिभावः (नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या – अष्टा०, ६/३/७४) + ✓विद्-ज्ञाने, सत्तायां च + असुन् प्रत्ययः ।

## नंशुकः

नश्यतीति नंशुकः अणुवाचको वा ।
– उ०को०, २/३०

✓णश – अदर्शने + णुकन् प्रत्ययः धातोर्नुम् च (पचिनशेर्णुकन्कनुमौ च – उ०को०, २/३०) ।

## नहुषः

नह्यति बध्नातीति नहुषः राजर्षिः सर्पविशेषो वा । – उ०को०, ४/७५

✓णह – बन्धने + उषच् प्रत्ययः (पृनहिकलिभ्य उषच् – उ०को०, ४/७५) ।

## नाकुः

नमतीति नाकुः बल्मीको वा ।
– उ०को०, १/१८

✓णम – प्रह्वत्वे + उः प्रत्ययः धातोर्नाकिरादेशश्च (फलिपाटिनमिमनिजनां गुक्पटि नाकिधतश्च – उ०को०, १/१८) ।

## नागः

दहति दहाते वा स नगः पर्वतोवृक्षो वा बाहुलकान्नकारस्व नाकारः नागः सर्पभेदो वा । – उ०को०, ५/६१

✓दह – भस्मीकरणे + गः प्रत्ययः हकारस्य लोपः दकारस्य नकारादेशः बाहुलकात् नकारस्य नाकाटः (दहेर्गो हलोपो दश्च नः – उ०को०, ५/६१) ।

## नान्त्रं

नमति येन तत् नान्त्रं स्तोत्रं वा ।
– उ०को०, ४/१६०

✓णम – प्रह्वत्वे + ष्ट्रन् प्रत्ययः धातोः वृद्धिश्च (भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च – उ०को०, ४/१६०) ।

## नापितः

नाप्नोति सत्कर्माणीति नापितः केशच्छेदको वा । – उ०को०, ३/८७

न(नञ्) + ✓आप्लृ – व्याप्तौ + तन् प्रत्ययः, इडागमश्च (नञ्याप इट् च – उ०को०, ३/८७) ।

## नाभिः

नह्यते बध्यते यया ताम् । – यजु०, ६/१४

नह्यति दुष्टं नाडीर्वा बध्नातीति नाभिः क्षत्रियः प्राण्यङ्गं वा । – उ०को०, ४/१२६

✓णह – बन्धने + इञ् प्रत्ययः धातोः हकारस्य भकारः (नहो: भश्च – उ०को०, ४/१२६) ।

## नाम

म्नायतेऽभ्यस्ते येन तत् नाम संज्ञा ।
– उ०को०, ४/१५१

✓म्ना – अभ्यासे + मनिन् प्रत्ययः निपातनात् (नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन् – उ०को०, ४/१५१) धातोर्मकारलोपश्च ।

## नारङ्गः

नृणाति नयति स नारङ्ग रसः पिप्पली वृक्षभेदो वा । – उ०को०, १/१२२

✓नॄ – नये + अङ्गच् प्रत्ययः बाहुलकात्, धातोर्वृद्धिश्च (सृवृञोर्वृद्धिश्च – उ०को०, १/१२२)।

## नार्सदाय

नृषु नायकेषु सीदति तदपत्याय ।
– ऋ०, १/११७/८

(च०ए०व०) – नाः (नृ) + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## नावं

नुदन्ति चालयन्ति प्रेरते वा यां ताम् ।
– ऋ०, १/११६/५

(द्वि०ए०व०) – ✓णुद – प्रेरणे + डौः प्रत्ययः (ग्लानुदिभ्यां डौः – उ०को०, २/६४) ।

## निकषा

निकषति हिनस्तीति निकषा समीपवाचको वा । – उ०को०, ४/१७५

नि + √कष – हिंसार्थे + आः प्रत्ययः (आः समिण्निकषाभ्याम् – उ०को०, ४/१७५)।

## निकामं

**यो नित्यं काम्यते तम्। – ऋ०, ६/१७/१०**

नि + √कमु – कान्तौ + घञ् प्रत्ययः।

## निग्राभ्याः

**नितरां ग्रहीतुं योग्याः। – यजु०, ६/३०**

नि + √ग्रह – उपादाने + ण्यत् प्रत्ययः, हकारस्य स्थाने भकारादेशः छन्दसि।

## निघातिः

**निघातिः लौहिधाता धारा।**

**– उ०को०, ४/१२५**

नि + √हन् – हिंसायां + इञ् प्रत्ययः, हकारस्य घकारः, धातोः दीर्घत्वञ्च।

## निघृष्वः

**नितरां घर्षति पिनष्टीति निघृष्वः गुणाभावः। – उ०को०, १/१५३**

नि + √घृषु – संघर्षे + वन् प्रत्ययः (उ०को०, १/१५३)।

## निचुम्पुणः

**धैर्येण शब्दविद्याध्यापकः। नितरां चोपति मन्दं मन्दं चलति तत्सम्बुद्धौ।**

**– यजु०, ३/४८**

नि + √चुप – मन्दायां गतौ + उणन् प्रत्ययः, उमागमश्च।

## निचेरुः

**यो नितरां चिनोति सः। – यजु०, ३/४८**

**यो धर्मेण द्रव्याणि नित्यं चिनोति सः।**

**– यजु०, ८/२७**

**यो नितरां पुरुषार्थे चरति तस्मै।**

**– यजु०, १६/२०**

नि + √चिञ् – चयने + रुः प्रत्ययः।

## निदः

**ये निन्दन्ति तान्मिथ्यावादिनः।**

**– ऋ०, ५/५३/१४**

(प्र०ब०व०) – √णिदि – कुत्सायां + क्विप् प्रत्ययः।

## निद्रा

**या निन्दति यया वा सा निद्रा शयनं वा।**

**– उ०को०, २/१७**

√णिदि – कुत्सायां + रक् प्रत्ययः (निन्देर्नलोपश्च – उ०को०, २/१७)। ततः टाप् प्रत्ययः।

## निधनं

**नितरां दधाति यत्तत् निधनं मरणं वा।**

**– उ०को०, २/८१**

नि + √डुधाञ् – धारणपोषणयोः + क्युः प्रत्ययः (कृ॒पृ॒वृजिमन्दिनिधाञः क्युः – उ०को०, २/८१)।

## निधानं

**नितरां दधाति। – ऋ०, ३/३१/२**

नि + √डुधाञ् – धारणपोषणयोः + ल्युट् प्रत्ययः।

## निधिः

**निधीयन्ते पदार्था यस्मिँस्तम्।**

**– ऋ०, १/१३०/३**

**निधीयन्ते पदार्था यस्मिन् सः।**

**– यजु०, ३८/२२**

नि + √डुधाञ् – धारणपोषणयोः + किः प्रत्ययः।

## निधुवनं

**धूनोति कम्पयति इति धुवनः अग्निर्वा निधुवनं रतिक्रीडा वा। – उ०को०, २/८०**

नि + √धुञ् – कम्पने + क्युः प्रत्ययः (भूसूधूभ्रस्जिभ्यश्छन्दसि – उ०को०, २/८०)।

## निपुरः

**निकृष्टान् दुष्टस्वभावान् पिपुरति पूरयन्ति ते। – यजु०, २/३०**

नि + ✓पॄ – पालनपूरणयोः + क्विप् प्रत्ययः (भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् – अष्टा०, ३/२/१७७)।

## निभूयपाय

यो नितरां रक्षितो भूत्वाऽन्यान् पालयति तस्मै। – यजु०, २२/२०

(च०ए०व०) – नि + भूय + ✓पा – रक्षणे + कः प्रत्ययः।

## निम्बः

नयति प्रापयतीति शुभगुणानिति निम्बः वृक्षभेदो वा। – उ०को०, ४/९५

✓णीञ् – प्रापणे + बन् प्रत्ययः निपातनात्, धातोः ह्रस्वत्वञ्च (उल्बादयश्च – उ०को०, ४/९५)।

## निर्ऋथः

निरन्तरमृच्छन्ति गच्छन्ति यस्मिन्नसौ निर्ऋथः सामवेदो वा। – उ०को०, २/८

नि + ✓ऋ – गतौ + थक् प्रत्ययः (अर्त्तेर्निरि – उ०को०, २/८)।

## नियुतः

नियुज्यन्ते ये तान् निश्चितान् शमादिगुणान्। – यजु०, ७/७

नि + ✓यु – मिश्रणामिश्रणयोः + क्तः प्रत्ययः।

## निरष्टाः

ये नितरां अश्यन्ते व्याप्यन्ते शत्रुर्बलेन ते। – ऋ०, १/३३/६

निर् + ✓अशूङ् – व्याप्तौ संघाते च + क्तः प्रत्ययः।

## निर्गुणः

गुणयन्ते ये ते गुणा वा यैर्गुणयन्ति ते गुणाः, यो गुणेभ्यो निर्गतः स निर्गुण ईश्वरः। – स० प्र० (*प्रथमसमुल्लासः*)

निर् + ✓गुण – आमन्त्रणे + क्विप् प्रत्ययः।

## निविदः

वेद वाण्याभिलक्षितान् निश्चितानर्थान् विन्दन्ति यया तया वाचा। – ऋ०, १/८९/३

नितरां विदन्ति याभ्यस्ता वाचः। – ऋ०, २/३६/६

नितरां विदन्ति याभिस्ता वाचः। – ऋ०, ४/१८/७

ये निश्चयेन विन्दन्ति तान्। – यजु०, १९/२५

नि + ✓विद् – ज्ञाने + क्विप् प्रत्ययः।

## निवेशनं

निविशन्ति प्रविशन्ति यस्यां सा। – ऋ०, १/२२/१५

सर्वे निविशन्ते यस्मिँस्तस्मिन्। – ऋ०, ६/७१/२

यः स्त्रियां निविशते। – यजु०, १२/६६

निविशन्ति यस्तिँस्तत्। – यजु०, १७/७

निविशन्ते यस्यां सा। – यजु०, ३५/२१

या नित्यान् निवेशयति सा। – यजु०, ३६/१३

नि + ✓विश – प्रवेशने + ल्युट् प्रत्ययः।

## निशीथः

नितरां शेतेऽस्मिन् स निशीथः अर्द्धरात्रः सर्वरात्रौ वा। – उ०को०, २/९

नि + ✓शीङ् – स्वप्ने + थक् प्रत्ययः (निशीथगोपीथावगथाः – उ०को०, २/९)।

## निषङ्गथिः

नितरां सजति सङ्गं करोतीति निषङ्गथिः आलिङ्गको वा। – उ०को०, ४/८७

नि + ✓षज्ज – सङ्गे + घथिन् प्रत्ययः (नौ षज्जेर्घथिन् – उ०को०, ४/८७)। घित्वात् जकारस्य गकारः (चजोः कु घिण्ण्यतोः – अष्टा०, ७/३/५२)।

## निषङ्गधिः

निषङ्गानि शस्त्रास्त्राणि धीयन्ते यस्मिन् सः । – यजु०, २६/१०

नि + ✓षञ्ज – सङ्गे + जकारस्य गकारः > निषङ्ग + ✓डुधाञ् – धारणपोषणयोः + किः प्रत्ययः।

## निषत्तिः

निषीदन्ति यया सा स्थितिर्नीतिर्वा ।

– ऋ०, ४/२१/९

नि + ✓षद्लृ – विशरणगत्यवसादनेषु + क्तिन् प्रत्ययः स्त्रियाम् ।

## निषद्वरं

निषीदन्ति वराः श्रेष्ठा मनुष्या यस्य समीपे तम् । – यजु०, २८/४

निषीदति यो यत्र वा स निषद्वरः पङ्के 'निषद्वरी' रात्रिर्वा । – उ०को०, २/१२२

नि + ✓षद्लृ – विशरणगत्यवसादनेषु + ष्वरच् प्रत्ययः (नौ षदेः – उ०को०, २/१२२) ।

## निषिक्तपां

यो धर्मे निषिक्तानभिषेकप्राप्तान् पाति रक्षति तम् । – ऋ०, ७/३६/९

नि + ✓षिच – क्षरणे + क्तः प्रत्ययः > निषिक्त + ✓पा – रक्षणे + क्विप् प्रत्ययः ।

## निष्कः

निषीदतीति निष्कः परिमाणभेदो वा ।

– उ०को०, ३/४५

नि + ✓षद्लृ – विशरणगत्यवसादनेषु + कन् प्रत्ययः, डित्वञ्च (नौ सदेर्डिच्च – उ०को०, ३/४५) ।

## निष्क्रव्यादं

क्रव्यं पक्वं मांसमत्ति तस्मान्निर्गतस्तम् ।

– यजु०, १/१७

निस् + क्रव्य (पक्वं मांसं) + ✓अद् – भक्षणे + अण् प्रत्ययः ।

## निष्टप्तं

नितरां तप्तं सन्तापयुक्तं च कार्यम् ।

– यजु०, १/७

यन्नितरां तप्यते तत् । – यजु०, १/२९

नितरां तप्यन्ते ये ते । – यजु०, १/२९

निस् + ✓तप – सन्तापे + क्तः प्रत्ययः ।

## निष्ट्यः

नेशन्ति समादधते येन यज्ञेन तत्सहितः साधुर्विद्वान् । – यजु०, ५/२३

✓णिश – समाधौ + तः प्रत्ययः बाहुलकादौणादिकः ततः साध्वर्थे यत् प्रत्ययः (तत्र साधुः-अष्टा०-४/४/९८)

## निष्षाट्

यो नितरां सहते । – ऋ०, १/१८१/६

निस् + ✓षह – मर्षणे + ण्विः प्रत्ययः (छन्दसि सहः – अष्टा०, ३/२/६३) ।

## निष्ठितः

नितरां स्थितः । – ऋ०, १/१८२/७

निस् + ✓ष्ठा – गतिनिवृतौ + क्तः प्रत्ययः, इत्वञ्च।

## निष्षिधं

यन्नितरां सेधति शास्ति तत् ।

– ऋ०, ३/५५/८

निस् + ✓षिधू – संराद्धौ शासने च + क्विप् प्रत्ययः।

## निसरं

यो निश्चितं सरति गच्छति तम् ।

– यजु०, ३०/१४

नि + ✓सृ – गतौ + अच् प्रत्ययः ।

## निहः

योऽसतयं नितरां जहाति स. । – यजु०, २७/६

नि + ✓ओहाक् – त्यागे + कः प्रत्ययः ।

## निहाका

**नितरां जहाति त्यजतीति निहाका गोधिका वा । – उ०को०, ३/४४**

नि + ✓ओहाक् – त्यागे + कन् प्रत्ययः ( नौ हः – उ०को०, ३/४४ ) स्त्रियां टाप् प्रत्ययश्चेति ।

## निहारं

**मूल्येन क्रेतव्यं वस्तु नितरां क्रियते तत् ।**

**– यजु०, ३/५०**

नि + ✓हृञ् – हरणे + घञ् प्रत्ययः ।

## नीकः

**नयतीति नीकः वृक्षो वा ।**

**– उ०को०, ३/४७**

✓णीञ् – प्रापणे + कन् प्रत्ययः ( अजियुधुनीभ्यो दीर्घश्च – उ०को०, ३/४७ ) ।

## नीचैः

**निचीयत इति नीचैः अधोऽमो वा ।**

**– उ०को०, ५/१३**

नि + ✓चिञ् – चयने + डैसिः प्रत्ययः, उपसर्गस्य च दीर्घः ( नौदीर्घश्च – उ०को०, ५/१३ ) ।

## नीथः

**नीयते स नीथः नयनं वा । – उ०को०, २/२**

✓णीञ् – प्रापणे + क्थन् प्रत्ययः ( हनिकुषिनीरमिकाशिभ्यः क्थन् – उ०को०, २/२ ) ।

## नीथाविदः

**ये नीथान् विनयान् विन्दन्ति ते ।**

**– ऋ०, ३/१२/५**

नीथ + ✓विद् – लाभे ज्ञाने च + क्विप् प्रत्ययः पूर्व पदस्य च दीर्घः।

## नीपः

**नयतीति नेपः पुरोहितो वा। बाहुलकात् गुणाभावे नीपः वृक्षविशेषः ।**

**– उ०को०, ३/२३**

✓णीञ् – प्रापणे + पः प्रत्ययः ( पानीविषिभ्यः पः – उ०को०, ३/२३ ) ।

## नीरं

**नयति शरीरमिति नीरं जलं वा ।**

**– उ०को०, २/१३**

✓णीञ् – प्रापणे + रक् प्रत्ययः ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ ) ।

## नीलङ्गुः

**यो नीलं गच्छति तस्य ।**

**– यजु०, २४/३०**

**नितरां लङ्गति गच्छतीति नीलङ्गु क्रिमिजातिर्भ्रमरः पुष्पं वा ।**

**– उ०को०, १/३६**

नि + ✓लगि – गतौ + कुः प्रत्ययः निपातनात् ( खरशङ्कुपीयुनीलङ्गु – उ०को०, १/३६ ) उपसर्गस्यदीर्घत्वं धातोः नुमागमश्चेति ।

## नीवरं

**नयतीति नीवरः परिव्राट् वा ।**

**– उ०को०, ३/१**

✓णीञ् – प्रापणे + ष्वरच् प्रत्ययः ( छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः – उ०को०, ३/१ ) ।

## नीविः

**या नितरां व्ययति संवृणोति ।**

**– यजु०, ४/१०**

**नितीयते संव्रियते सा नीविः नीवी मूलधनं दुकूलबन्धनं वा । – उ०को०, ४/१३६**

नि + ✓व्येञ् – संवरणे + इण् प्रत्ययः उपसर्गस्य दीर्घः, धातोर्य लोपश्च ( नौ व्यो यकारलोपः पूर्वस्य च दीर्घः – उ०को०, ४/१३६ ) ।

## नृचक्षाः

नृन् चष्टे पश्यति ख्याति वा स नृचक्षाः ईश्वरो दुष्टो वा । – उ०को०, ४/२३३

✓णीञ् – प्रापणे + ऋ प्रत्ययः ऋप्रत्ययस्य डित्वाद्टिलोपः ( नयतेर्डिच्च – उ०को०, २/१०० ) > नृ + ✓चक्षिङ् – व्यक्तायां वाचि + असुन् प्रत्ययः ( चक्षेर्बहुलं शिच्च – उ०को०, ४/२३३ )।

## नृजिते

यो नृभिर्जयति तस्मै । – ऋ०, २/२१/१

( च०ए०व० ) – नृ + ✓जि – जये + क्विप् प्रत्ययः ।

## नृतूः

नृत्यतीति नृतूः नर्त्तकः । – उ०को०, १/९१

✓नृती – गात्रविक्षेपे + कुः प्रत्ययः ( नृतिशृध्योः कूः – उ०को०, १/९१ ) ।

## नृम्णं

नरो रमन्ते यस्मिँस्तन्नृम्णम् । – ऋ०, ५/३९/४

नरो रमन्ते येषु तानि । – ऋ०, ५/५७/६

नरा रमन्ते यस्मिँस्तन्नृम्णम् ।

– ऋ०, ६/२५/६

नृ + ✓म्ना – अभ्यासे + कः प्रत्ययः ।

## नृषत्

यां नरेषु सीदति । – ऋ०, ४/४०/५

यो नृषु सीदति सः । – यजु०, १०/२४

यो नायकेषु सीदति सः । – यजु०, १२/१४

यो नायकेषु सीदति तस्मै ।

– यजु०, १७/१२

नृ + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## नृषाचः

ये नृन् सचन्ति समवयन्ति ते ।

– ऋ०, १/५२/९

ये कर्मसु नृन् जीवान् साचयन्ति संयोजयन्ति ते । – ऋ०, १/६४/९

नृ + ✓षच – समवाये + अण् प्रत्ययः ।

## नृषाता

नरः सीदन्ति यस्मिँस्तस्मिन्नृसातौ ।

– ऋ०, ७/२७/१

( स०ए०व० ) – नृ + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः 'अन्येषामपि दृश्यते' इत्यनेन दीर्घत्वञ्च ।

## नृहा

यः शत्रूणां नायकान् हन्ति तस्मै ।

– ऋ०, ४/३/६

यो नृन् हन्ति सः । – ऋ०, ७/५६/१७

नृ + ✓हन् – हिंसागत्योः + क्विप् प्रत्ययः, दीर्घश्च ( सौ च – अष्टा०, ६/४/१३ ) ।

## नेत्री

या जनान् व्यवहारान्नयति सा ।

– ऋ०, १/९२/७

✓णीञ् – प्रापणे + तृच् प्रत्ययः, ततः ङीप् प्रत्ययः।

## नेपः

नयतीति नेपः पुरोहितो वा । – उ०को०, ३/२३

✓णीञ् – प्रापणे + पः प्रत्ययः धातोः गुणः ( पानीविषिभ्यः पः – उ०को०, ३/२३ ) ।

## नेमः

नयतीति नेमः प्रकारमूलं वा ।

– उ०को०, १/१४०

✓णीञ् – प्रापणे + मन् प्रत्ययः ( अर्तिस्तुसु-हुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४० ) ।

## नेमिः

नयतीति नेमिः चक्रावयवो वा ।

– उ०को०, ४/४३

√णीञ् – प्रापणे + मिः प्रत्ययः (नियो मिः – उ०को० ४/४३)।

## नेष्टा

विद्युत् पदार्थ शोधकत्वात्पोषकत्वाच्च नेनेक्ति सर्वान् पदार्थानिति। – ऋ०, १/१५/३

नयतीति नेष्टा ऋत्विग्वा। – उ०को०, २/९५

१- णिजिर् - शौचपोषणयोः + तृच् प्रत्ययः, धातोः जस्य षकारश्च (व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः - अष्टा०, ८/२/३६)।

२- √णीञ् – प्रापणे + तृन् प्रत्ययः (नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ – उ०को०, २/९५) षुगागमश्च (नयते षुक् –अष्टा०वा०, ३/२/१३५)।

## नेमन्निषः

नीयन्त इष्यन्ते च यास्ताः। – ऋ०, १/५६/२

(प्र०ब०व०) – नेमन् + √इष – गतौ + क्विप् प्रत्ययः, छान्दसः नलोपाभावः।

## नोधाः

यो नायकान् प्राप्तिकरान् धरतीति। – ऋ०, १/६१/१४

नौति स्तौति नूयते स्तूयते वा स नोधाः ऋषिर्वा। – उ०को०, ४/२२६

√णु – स्तुतौ + असिः प्रत्ययः धुडागमश्च (नुवो धुट् च – उ०को०, ४/२२६), गुणश्च।

## नौः

नुदति प्रेरयतीति नौः जलतरणसाधनं वा। – उ०को०, २/६४

√णुद – प्रेरणे + डौः प्रत्ययः (ग्लानुदिभ्यां डौः – उ०को०, २/६४)।

## न्योकस्

निश्चितानि ओकांसि स्थानानि येन तस्मै। – ऋ०, १/९/१०

नि + √उच् – समवाये + असुन् प्रत्ययः बाहुलकात् कुत्वञ्च (ओकः उचः के – अष्टा०, ७/३/६४)।

## न्यङ्कव

ये नितरामञ्चन्ति गच्छन्ति ते न्यङ्कवः जातिविशेषा वा। – उ०को०, १/१७

(प्र०ब०व०) – नि + √अञ्चु – गतिपूजनयोः + उः प्रत्ययः (नावञ्चेः – उ०को०, १/१७) कुत्वञ्च (न्यङ्क्वादीनाञ्च – अष्टा०, ७/३/५३)।

## न्यङ्

यो नित्यमञ्चति। – ऋ०, ४/१५/५

यो निश्चितमञ्चति तम्। – ऋ०, ५/८३/७

नि + √अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९)।

## पक्त्रं

पचति येन यत्र वा तत् पक्त्रं गार्हपत्यं वा। – उ०को०, ४/१६७

√पच – पाके + त्र प्रत्ययः (गुधृवीपचिवचिचिय-मिसदिक्षदिभ्यस्त्रः – उ०को०, ४/१७६)।

## पक्षः

पणायति स्तौति व्यवहरति वा येन यत्र वा स पक्षः मासार्द्धः पार्श्व भागः साध्य विरोधः समूहो बलं मित्रसहायो वा। – उ०को०, ३/६९

पचतीति पक्षः पूर्वोत्तरपक्षौ वा। – उ०को०, ४/२२०

√पन – स्तुतौ व्यवहारे च + सः प्रत्ययः धातोः नकारस्य कत्वं (गृधिपण्योर्दकौ च – उ०को०, ३/६९) अथवा √पय – पाने + असुन् प्रत्ययः सुडागमश्च (पचिवचिभ्यां सुट् च – उ०को०, ४/२२०)।

## पङ्क्तीराधसं

यः पङ्क्तीधर्मात्मवीरमनुष्यसमूहान् राध्नोति यद्वा पङ्क्त्यर्थं राधोऽन्नं यस्य

तम् । – ऋ०, १/४०/३

यः पङ्क्तीः समुदायान् राध्नोति तम् ।

– यजु०, ३७/७

( द्वि०ए०व० ) – ✓पचि – विस्तारवचने + क्विन् प्रत्ययः निपातनात् > पङ्क्ति + ✓राध – संसिद्धौ + असुन् प्रत्ययः ।

## पङ्गुः

खञ्जति गमने विकलो भवतीति पङ्गुः गतिहीनो वा । – उ०को०, १/३६

✓खञ्ज – गतिवैकल्ये + कुः प्रत्ययः बाहुलकात्, कु प्रत्यये 'खञ्ज' धातोः पङ्गादेशः ( खरुशङ्कुपीयुनीलङ्गुलिगु – उ०को०, १/३६ ) ।

## पचतः

पचति येन स पचतः अग्निर्वा ।

– उ०को०, ३/११०

✓पच् – पाके + अतच् प्रत्ययः ( भृमृदृशियजिपर्विपच्यमितमिनमिहर्य्यिभ्योऽतच् – उ०को०, ३/११० )।

## पचिः

पचति येन स पचिः अग्निर्वा ।

– उ०को०, ४/११८

✓पच् – पाके + इन् प्रत्ययः ( सर्वधातुभ्य इन् – उ०को०, ४/११८ ) ।

## पचेलिमः

पचति पदार्थानिति पचेलिमः अग्निः सूर्यो वा । – उ०को०, ४/३७

✓पच् – पाके + एलिमच् प्रत्ययः ( पच एलिमच् – उ०को०, ४/३७ ) ।

## पञ्चन्

पञ्चति व्यक्तीकरोतीति पञ्चन् संख्यावाचको वा । – उ०को०, १/१५७

✓पचि – व्यक्तीकरणे + कनिन् प्रत्ययः बाहुलकात्, धातोः नुमागमश्च ( सप्यशूभ्यां तुट् च–उ०को०, १/१५७ ) ।

## पञ्चालः

पञ्चति व्यक्तं करोतीति पञ्चालः देशविशेषो वा । – उ०को०, १/११८

✓पचि – व्यक्तीकरणे कालन् प्रत्ययः, धातोः नुमागमः ( तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् – उ०को०, १/११८ ) ।

## पञ्चाविः

पञ्चेन्द्रियाण्यवन्ति येन सः।– यजु०, १४/१०

यः पञ्चभिरव्यते रक्ष्यते सः ।

– यजु०, २१/१४

पञ्च + ✓अव – रक्षणगतिप्रीत्यादिषु + इन् प्रत्ययः ( सर्वधातुभ्य इन् – उ०को०, ४/११८ ) ।

## पटलः

पटति गच्छतीति पटलः अक्षिरोगस्तिलकं वा । – उ०को०, १/१०४

✓पट – गतौ + कल प्रत्ययः बाहुलकात् ( कलस्तृपश्च – उ०को०, १/१०४ ) ।

## पटाकः

पटति गच्छतीति पटाकः पक्षी वा ।

– उ०को०, ४/१४

✓पट – गतौः + आकः प्रत्ययः ( वलाकादयश्च – उ०को०, ४/१४ ) ।

## पटीरः

पटति गच्छतीति पटीरः कन्दुकः कामश्चन्दनवृक्षो वा । – उ०को०, ४/३०

✓पट – गतौ + ईरन् प्रत्ययः ( कृश पॄ टिपटिशौटिभ्य ईरन् – उ०को०, ४/३० ) ।

## पटुः

पाटयति ज्ञापयति सदसत्पदार्थान् स पटुः वाग्मी विशारदो वा । – उ०को०, १/१८

✓पट – भाषार्थे + उः प्रत्ययः ( फलिनटिनमिमनिजनां गुकुपटिनाकिधतश्च – उ०को०, १/१८ ) ।

## पटोलः

पटति गच्छति स पटोलः फलविशेषो वस्त्रविशेषो वा । – उ०को०, १/६६

√पट – गतौ + ओलच् प्रत्ययः (कपिगडिगण्डिकटिपटिभ्य ओलच् – उ०को०, १/६६) ।

## पट्वः

पट्यन्ते गच्छन्त्यत्रेति पट्वः भूगोलको वा । – उ०को०, १/१५३

√पट – गतौ + वन् प्रत्ययः (सर्वनिघृष्वलष्वशिवपट्वप्रह्वेष्वा अतन्त्रे – उ०को०, १/१५३) ।

## पठर्वा

ये पठन्ति तान् विद्यार्थिन ऋच्छति प्राप्नोति सः सेनाध्यक्षः । – ऋ०, १/११२/१७

√पठ – व्यक्तायां वाचि + क्विप् प्रत्ययः > पठ + √ऋ – गतौ + वनिप् प्रत्ययः ।

## पणसः

पणायति व्यवहरतीति पणसः पण्यद्रव्यं वा । – उ०को०, ३/११७

√पण – व्यवहारे स्तुतौ च + असच् प्रत्ययः (अत्यविचमितमिमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् – उ०को०, ३/११७) ।

## पणिः

यः पणायति व्यवहरतीति पणसः पण्यद्रव्यं वा । – उ०को०, ४/११८

√पण – व्यवहारे स्तुतौ च + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

## पण्डः

पणयति व्यवहरति स्तौति वा स पण्डः नपुंसकः पण्डा बुद्धिर्वा ।

– उ०को०, १/११४

√पण – व्यवहारे स्तुतौ च + डः प्रत्ययः (जमन्ताड्डः – उ०को०, १/११४) ।

## पण्डा

पणयति व्यवहरति स्तौति वा स पण्डा नपुंसकः पण्डा बुद्धिर्वा ।

– उ०को०, १/११४

√पण – व्यवहारे स्तुतौ च + डः प्रत्ययः (जमन्ताड्डः – उ०को०, १/११४)।

## पतङ्गः

प्रतिपातं वेगेन गन्तृभिः । – ऋ०, १/८८/४

यः प्रतिपातं गच्छति तम् ।

– ऋ०, १/१६३/६

पतति गच्छतीति पतङ्गस्तस्मादग्नये ।

– यजु०, ३/८

पतति गच्छतीति पतङ्गः पक्षी । पक्षिणीत्युच्यमानेऽपि बाहुलकात् पतङ्गः सूर्योऽग्निरश्वः शलभः शालिभेदो वा ।

– उ०को०, १/११९

√पत्लृ – गतौ + अङ्गच् प्रत्ययः (पतेरङ्गच् पक्षिणि – उ०को०, १/११९) ।

## पतङ्गरः

यः पतङ्गेऽग्नौ रमते, पतङ्गराति ददाति वा । – ऋ०, ४/४०/२

पतङ्ग + √रमु – क्रीडायां, √रा – दाने + डः प्रत्ययः।

## पतत्रं

पतति गच्छति येन तत् पतत्रं वाहनं लोमानि वा । – उ०को०, ३/१०५

√पत्लृ – गतौ + अत्रन् प्रत्ययः (अमिनक्षियजिवधिपतिभ्योऽत्रन् – उ०को०, ३/१०५) ।

## पतत्रिः

पततीति पतत्रिः पक्षी वा ।

– उ०को०, ४/६९

√पत्लृ – गतौ + अत्रिन् प्रत्ययः (पतेरत्रिन् – उ०को०, ४/६९) ।

## पतसः

पततीति पतसः पक्षी वा ।

– उ०को०, ३/११७

✓पत्लृ – गतौ + असच् प्रत्ययः (अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिप्रपणिमहिभ्योऽसच् – उ०को०, ३/११७) ।

## पत्रं

पतति यो गच्छति येन वा तत् पत्रं वाहनं वा । – उ०को०, ४/१५९

✓पत्लृ – गतौ + ष्ट्रन प्रत्ययः (सर्वधातुभ्यः ष्ट्रन् – उ०को०, ४/१५९) ।

## पताका

पत्यते ज्ञायतेऽसौ पताका ध्वजा वा ।

– उ०को०, ४/१४

✓पत – गतौ + आकः प्रत्ययः (वलाकादयश्च – उ०को०, ४/१४) ।

## पतिः

पालयिता पालन हेतुर्वा । – यजु०, ३/१२

पाति रक्षति सः पतिः । – यजु०, ३/६०

पाति रक्षतीति पतिः स्वामी वा ।

– उ०को०, ४/५७

✓पा – रक्षणे + डतिः प्रत्ययः (पातेर्डतिः – उ०को०, ४/५७) ।

## पतेरः

पतति गच्छतीति पतेरः गन्ता पक्षी वा ।

– उ०को०, १/५८

✓पत्लृ – गतौ + एरक् प्रत्ययः (पतिकठिकुठिगडिगुडिदंशिभ्य एरक् - उ०को०, १/५८) ।

## पत्तनं

पतति गच्छतीति पत्तनं नगरं वा ।

– उ०को०, ३/१५०

✓पत्लृ – गतौ + तनन् प्रत्ययः (वीपतिभ्यां तनन् – उ०को०, ३/१५०) ।

## पत्तिः

पद्यते गच्छत्यसौ पत्तिः पदातिः पुरुषो वा । – उ०को०, ४/१८३

✓पद – गतौ + तिः प्रत्ययः (पदिप्रथिभ्यां नित् – उ०को०, ४/१८४) ।

## पत्मन्

पतन्ति यस्मिन्मार्गे तस्मिन् । – ऋ०, ५/५/७

पतन्ति गच्छन्ति यस्मिन् मार्गे तस्मिन् ।

– ऋ०, ६/४/६

✓पत्लृ – गतौ + मनिन् प्रत्ययः (सर्वधातुभ्यो मनिन् – उ०को०, ४/१४६) ।

## पत्वा

योऽधः पतति सः । – यजु०, २२/१९

✓पत्लृ – गतौ + वनिप् प्रत्ययः (स्नामदिपद्यर्तिपृशकिभ्यो वनिप् – उ०को०, १/११४) ।

## पत्सलः

पतन्ति गच्छन्ति यत्र स पत्सलः पन्था वा। – उ०को०, ३/७४

✓पत्लृ – गतौ + सरः प्रत्ययः प्रत्ययस्य रकारस्य लकारादेशः (पतेरश्च लः – उ०को०, ३/७४) ।

## पथः

पतन्ति गच्छन्ति यत्र स पन्थाः मार्गः । पथे गतौ इत्यस्माद्धातोः पचाद्यचि कृते पथः पथौ पथाः इत्यदन्तोऽपि दृश्यते ।

– उ०को०, ४/१२

✓पत्लृ – गतौ + इनिः प्रत्ययः धातोः थकारान्तादेशः (पतः स्थ च – उ०को०, ४/१२) ।

## पथिकृत्

यः पन्थानं करोति । – ऋ०, ६/२१/१२

पथि + ✓डुकृञ् – करणे + क्विप् प्रत्ययः ।

## पथिलः

यः पथति निरन्तरं गच्छति स पथिलः पथिको वा । – उ०को०, १/५७

✓पथि – गतौ + इलच् प्रत्ययः निपातनात् (मिथिनादयश्च – उ०को०, १/५७) ।

## पथेष्ठां

यो धर्मे पथि तिष्ठति । – ऋ०, ५/५०/३

पथ + ✓ष्ठा – गतिनिवृत्तौ + क्विप् प्रत्ययः ।

## पदज्ञाः

ये पदानि प्राप्तव्यानि धर्मार्थकाममोक्षाख्यानि साधितुं साधयितुं वा जानन्ति ते । – ऋ०, १/६२/२

यो पदं ज्ञातव्यं प्रापणीयमात्मस्वरूपं जानन्ति ते । – यजु०, ३४/१७

पद + ✓ज्ञा – अवबोधने + कः प्रत्ययः ।

## पदं

यत्पद्यते प्राप्यते तत् । – ऋ०, १/२२/१७

पद्यते जानाति प्राप्नोति येन व्यवहारेण तस्मिन् । – यजु०, ४/१९

पद्यते गा॰॰ने यत्तत् । – यजु०, ५/१५

✓पद – ॰तौ + कः प्रत्ययः (घञर्थे क विधानम्)।

## पद्मं

पद्यते प्राप्नोतीति पद्मं कमलं निधिः शङ्खो वा । – उ०को०, १/१४०

✓पद – गतौ + मन् प्रत्ययः (अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०)।

## पदवीः

यः प्राप्तव्यानि पदानि व्येति व्याप्नोति सः । – ऋ०, ३/५/१

य पदानि वेति व्याप्नोति । – ऋ०, ३/५६/४

पद + ✓वी – गतिकान्त्यादिषु + क्विप् प्रत्ययः ।

## पदाजिः

पद्भ्यामजत्यतति वा स पदाजिः । पदातिः पद्गः । – उ०को०, ४/१३२

पाद + ✓अज – गतिक्षेपणयोः + इञ् प्रत्ययः (पादे च – उ०को०, ४/१३२) पादस्य स्थाने पदादेशः (पादस्य पदाज्यातिगोपहतेषु – अष्टा०, ६/३/५२)।

## पदिं

पद्यते गम्यते या श्रीस्ताम् ।

– ऋ०, १/१२५/२

(द्वि०ए०व०)✓पद – गतौ + इक् प्रत्ययः (इक् कृष्णायदिभ्यः -अष्टा वा०, ३/३/१०८)।

## पद्रः

पद्यते गच्छन्त्यस्मिन् वा स पद्रः ग्रामः संवेशः स्वानं वा । – उ०को०, २/१३

✓पद – गतौ + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## पद्वा

पद्यन्ते यत्र स पद्वा पन्था वा ।

– उ०को०, ४/११३

✓पद – गतौ + वनिप् प्रत्ययः (स्नामदिपद्यर्तिपृशकिभ्यो वनिप् – उ०को०, ४/११३) ।

## पनसः

पनायति स्तौति पनसः कण्टकिफलं वा।

– उ०को०, ३/११७

✓पन – स्तुतौ + असच् प्रत्ययः (अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् – उ०को०, ३/११७) ।

## पन्थाः

**पतन्ति गच्छन्ति यत्र स पन्थाः मार्गः ।**

– उ०को०, ४/१२

✓पत – गतौ + इनिः प्रत्ययः, धातोः थकारान्तादेशः (पतस्थ च – उ०को०, ४/१२), पथि स्थाने न्थादेशः (थोन्थः – अष्टा०, ७/१/८७) ।

## पन्नः

**पनायति स्तौतीति पन्नः सूर्यो वा ।**

– उ०को०, ३/१०

✓पन – स्तुतौ + नः प्रत्ययः (कृवृजॄसिद्रुपन्यनिस्वपिभ्यो नित् – उ०को०, ३/१०) ।

## पपिवान्

**य पिबति सः ।** – ऋ०, ५/३०/११

✓पा – पाने + किः प्रत्ययः धातोर्द्वित्वञ्च (आदृगमहनजनः किकिनौ लिट् च – अष्टा०, ३/२/१७१) > पपि + क्वसुः प्रत्ययः ।

## पपीः

**पिबति पाति रक्षतीति वा स पपीः सूर्यश्चन्द्रो वा ।** – उ०को०, ३/१५९

✓पा – पाने रक्षणे च + ईः प्रत्ययः, धातोः द्वित्वञ्च (यापोः किद्द्वे च – उ०को०, ३/१५९) ।

## पपुः

**पाति रक्षतीति पपुः पालकः ।**

– उ०को०, १/२२

✓पा – रक्षणे + कुः प्रत्ययः द्वित्वञ्च (कुर्भ्रश्च – उ०को०, १/२२) ।

## पप्रितमं

**प्राति प्रपूरयति सर्वाभिर्विद्याभिरानन्दैश्च जनान् स्वव्याप्त्या जगद्वा मूर्त्तं वस्तु शिल्पविद्यासाध्याङ्गानि च यः, सोऽतिशयितस्तम् ।** – यजु०, १/८

✓प्रा – प्रपूरणे + किः प्रत्ययः (आदृगमहनजनः किकिनौ लिट् च – अष्टा०, ३/२/१७१) > पप्रि + तमप् प्रत्ययः ।

## पम्पा

**पाति रक्षतीति पम्पा नदी वा ।**

– उ०को०, ३/२८

✓पा – रक्षणे + पः प्रत्ययः बाहुलकात् धातोः ह्रस्वत्वं मुडागमश्च (खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः – उ०को०, ३/२८) ।

## पयः

**पीयते तत् पयः उदकं दुग्धं वा ।**

– उ०को०, ४/१९०

✓पा – पाने + असुन् प्रत्ययः बाहुलकात्, धातोरीत्वं पुनर्गुणे अयादेशश्च (रपेरत एच्च – उ०को०, ४/१९०) ।

## पयसा

**पयन्ते विजानन्ति सर्वान् पदार्थान् येन ज्ञानेन तेन ।** – यजु०, २/२४

(तृ०ए०व०) – ✓पा – पाने + असुन् प्रत्ययः बाहुलकात् धातोः ईत्वमयादेशश्च ।

## पयोधाः

**ये पयांसि स्वगतानि दधति ते ।**

– ऋ०, ७/५६/१६

**पयो दधातीति पयोधाः समुद्रो वा ।**

– उ०को०, ४/२३०

पयः + ✓डुधाञ् – धारणपोषणयोः + असिः प्रत्ययः (पयसि च – उ०को०, ४/२३०) ।

## पयोवृधः

**ये पय उदकं रात्रिं वा वर्धयन्ति ते ।**

– ऋ०, १/६४/११

(प्र०ब०व०) – पयः + ✓वृधु – वृद्धौ + क्विप् प्रत्ययः ।

## परमेष्ठी

परमे उत्तमे व्यवहारे तिष्ठतीति परमेष्ठी सर्वेषां पितामह ईश्वरो वा ।

– उ०को०, ४/१०

परमे + √ष्ठा – गतिनिवृत्तौ + इनिः प्रत्ययः (परमे कित् – उ०को०, ४/१०) ।

## परशुः

परान् शत्रून् शृणाति हिनस्ति येन स परशुः शस्त्रभेदः कुठारो वा ।

– उ०को०, १/३३

पर + √शृ – हिंसायां + कुः प्रत्ययः (आङ्परयोः खनिशृभ्यां डिच्च – उ०को०, १/३३) ।

## परस्पाय

येन परानन्यान् पाति तस्मै ।

– यजु०, ३८/१९

(च०ए०व०) – परः + √पा – रक्षणे + कः प्रत्ययः ।

## पराचीः

याः परागञ्चन्ति ताः । – ऋ०, १/१९१/१५

परा + √अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९) ततः ङीप् प्रत्ययः ।

## पराणुदे

परान्नुदन्ति शत्रून्यस्मिन्युद्धे तस्मै ।

– ऋ०, १/३९/२

(च०ए०व०) – परा + √णुद – प्रेरणे + क्विप् प्रत्ययः ।

## परापुरः

परागतानि स्वसुखार्थान्यधर्मकार्याणि पिपुरति ते । – यजु०, २/३०

परा + √पॄ – पालनपूरणयोः + क्विप् प्रत्ययः, धातोरुपधायाः उत्वमिति ।

## परिक्रोशं

परितः सर्वतः क्रोशन्ति रुदन्ति यस्मिन्दुःख समूहे तम् । – ऋ०, १/२९/७

परि + √क्रुश – आह्वाने रोदने च + घञ् प्रत्ययः ।

## परिज्रयः

ये परितः सर्वतो जीर्णयन्ति ते ।

– ऋ०, १/६४/५

परि + √ज्रि – अभिभवे + अच् प्रत्ययः ।

## परिज्मा

परितः सर्वतोऽजन्ति मार्गं येन तम् ।

– ऋ०, १/२०/३

परितो जमत्यत्ति यः सोऽग्निः ।

– ऋ०, १/१२२/३

१- परि + √अज – गतिक्षेपणयोः + मनिन् प्रत्ययः (अन्येभ्योऽपि दृश्यन्ते – अष्टा०, ३/२/७५)।

२- परि + √जमु – अदने + कनिन् प्रत्ययः, धातोरुपधालोपश्च ।

## परिज्वा

परितो जवति वेगवान् भवतीति परिज्वा चन्द्रमाः । – उ०को०, १/१५९

परि + √जु – गतौ (सौत्रधातुः) + कनिन् प्रत्ययः निपातनात्, जु धातोः यणादेशश्च (श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्वन्मातरिश्वन्मघवन्निति – उ०को०, १/१५९) ।

## परिव्राट्

परितः सर्वतो व्रजति स परिव्राट् परिव्राजौ, परिव्राजः संन्यासी वा । – उ०को०, २/५९

परि + √व्रज – गतौ + क्विप् प्रत्ययः धातोः दीर्घश्च (परौ व्रजेः षश्च पदान्ते – उ०को०, २/५९) ।

## परिहाणिः

हीयते जहति वा स हानिः अपचयो वा

प्रहाणि परिहाणिः । – उ०को०, ४/५१

परि + ✓ओहाक् – त्यागे + निः प्रत्ययः (वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् – उ०को०, ४/५१) ।

## परितक्म्याः

परितः सर्वतस्तकन्ति हसन्ति यस्यां सृष्टौ तस्याम् । – ऋ०, ४/४३/३

परितः सर्वतस्तकन्ति हसन्ति यैः कर्म्मभिस्तेषु भवायाः । – ऋ०, ५/३०/१३

परि + ✓तक – हसने + मक् प्रत्ययः, छन्दसि तदर्हतीत्यस्मिन्नर्थे यः प्रत्ययः (छन्दसि च – अष्टा०. ५/१/६७) ।

## परिधिः

सर्वतो धीयन्ते नद्यो यस्मिँस्तम् । – ऋ०, ३/३३/६

परितः सर्वतः सर्वाणि वस्तूनि धीयन्ते येन सः । – यजु०, २/३

परितः सर्वतो धीयते यस्मिँस्तम् । – यजु०, २/१७

यः परितः सर्वतो धीयते तने।– यजु०, १८/६३

यत्र परितः सर्वतो धीयन्ते तान् । – यजु०, १९/५३

परितः सर्वतः सूत्रवद्धीयन्ते ये ते । – यजु०, ३१/१५

परि + ✓डुधाञ् – धारणपोषणयोः + किः प्रत्ययः उपसर्गे उपपदे घुसंज्ञक धातोः किः (उपसर्गे घोः किः – अष्टा०, ३/३/९२) ।

## परिभूः

यः परितः सर्वतः पदार्थेषु भवति । – ऋ०, १/१/४

यः परितः सर्वतो भवति सः । – ऋ०, १/५२/१२

सर्वेषामुपरि भवतीति । – ऋ०, १/१४१/९

परितः सर्वतो भवतीति । – ऋ०, २/२४/११

यः परितः सर्वतो भवति सः । – ऋ०, ३/३/१०

परितः सर्वतो भवतीति । – यजु०, ४/३७

यो दुष्टान् पापिनः परिभवति तिरस्करोति सः । – यजु०, ४०/८

परि + ✓भू – सत्तायां + क्विप् प्रत्ययः ।

## परिवीः

परितः सर्वतः सर्वा विद्या व्ययति व्याप्नोति । – यजु०, ६/६

परि + ✓वी – गतिव्याप्तिप्रजनादिषु + क्विप् प्रत्ययः।

## परिषदः

परिषदन्ति यासु ताः सभाः । – ऋ०, ३/३३/७

(प्र०ब०व०) – परि + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## परिष्टुतिः

परितः सर्वतः स्तूयते यया सा । – यजु०, ५/१४

परितः सर्वतः स्तुवन्ति यया सा । – यजु०, १२/४

परि ✓ष्टुञ् – स्तुतौ + क्तिन् प्रत्ययः स्त्रियाम् ।

## परिस्रुतः

यः परितः सर्वतः स्रवति प्राप्नोति स रसः । – यजु०, १९/१५

परितः स्रवन्ति प्राप्नुवन्ति येन । – यजु०, १९/९५

परितः सर्वतः स्रवन्ति येन तेन ।

– यजु०, २०/६३

परितः सर्वतः स्रवति तेन । – यजु०, २०/६५

परि + ✓स्रु – गतौ + क्विप् प्रत्ययः ।

## परिह्वृत्

यः परितः सर्वतो ह्वरति कुटिलां गतिं गच्छति । – ऋ०, ६/४/५

परि + ✓ह्वृ – कौटिल्ये + क्विप् प्रत्ययः ।

## परीरं

पूर्यतेऽनेनेति परीरं फलं वा । – उ०को०, ४/३०

✓पृ – प्रीतौ + ईरन् प्रत्ययः ( कॄशृपृकटिपटिशौटिभ्य ईरन् – उ०को०, ४/३० ) ।

## परीवृता

परितः सर्वतो वृर्त्तन्ते यानि तानि ।

– ऋ०, २/१७/१

परि + ✓वृतु – वर्त्तने + कः प्रत्ययः, ( इगुपधज्ञाप्रीकिरः कः – अष्टा०, ३/१/१३५ ) पूर्वस्य दीर्घश्च ।

## परूः

पिपर्त्ति येन तत् परूः ग्रन्थिर्वा ।

– उ०को०, २/११७

✓पॄ – पालनपूरणयोः + उसिः प्रत्ययः ( अर्त्ति पॄवपियजितनिधनितपिभ्यो नित्–उ०को०, २/११७ ) ।

## परूषं:

पिपर्तीति परूषम् निष्ठुरं वचो वा ।

– उ०को०, ४/७५

✓पॄ – पालनपूरणयोः + उषच् प्रत्ययः ( पॄनहिकलिभ्य उषच् – उ०को०, ४/७५ ) ।

## पर्जन्यः

पर्षति सिञ्चतीति पर्जन्यः मेघः समर्थो वा । – उ०को०, ३/१०३

✓पृषु – सेचने + अन्यः प्रत्ययः निपातनात् षकारस्य जकारः ( पर्जन्यः – उ०को० ३/१०३ ) ।

## पर्ण

पत्रं पक्षो वा । – यजु०, ९/१५

पिपर्ति पानयति वा तत् पर्णं पत्रं वा ।

– उ०को०, ३/६

✓पॄ – पालनपूरणयोः + नः प्रत्ययः ( धापॄवस्यज्यतिभ्यो नः – उ०को०, ३/६ ) ।

## पर्णमुट्

पर्णानि शोषयति मोचयति रोहयति वा स पर्णमुट् । – उ०को०, २/२२

पर्ण + ✓मुच – प्रमोचनप्रमोहनयोः + क्विप् प्रत्ययः ण्यन्तात् धातोः णेर्लुक् ( बहुलमन्यत्रापि संज्ञाछन्दसोः – उ०को०, २/२२ ) ।

## पर्णरुट्

पर्णानि शोषयति मोचयति रोहयति वा स पर्णरुट् । – उ०को०, २/२२

पर्ण + ✓रुह – बीजजन्मनि प्रादुर्भावे च + क्विप् प्रत्ययः ण्यन्तात् धातोः णेर्लुक् ( बहुलमन्यत्रापि संज्ञाछन्दसोः – उ०को०, २/२२ ) ।

## पर्णशदाय

यः पर्णानि शीयते छिनत्ति तस्मै ।

– यजु०, १६/४६

( च०ए०व० ) – पर्ण + ✓शद्लृ – शातने + कः प्रत्ययः।

## पर्णशुट्

पर्णानि शोषयति मोचयति रोहयति वा स पर्णशुट् । – उ०को०, २/२२

पर्ण + ✓शुष – शोषणे + क्विप् प्रत्ययः, ण्यन्तात् धातोः णेर्लुक् ( बहुलमन्यत्रापि संज्ञाछन्दसोः – उ०को०, २/२२ )।

## पर्णसिः

पिपर्तीति पर्णसिः जलगृहं वा ।

– उ०को० ४/१०७

✓पृ – पालनपूरणयोः + असिः प्रत्ययः, धातोः नुगागमश्च (सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषा-लेल्वलपल्वलधिष्ण्यशल्याः–उ०को०, ४/१०७)।

## पर्प

पिपर्तीति पर्पं गृहं बालतृणं वा ।

– उ०को०, ३/२८

✓पृ – पालनपूरणयोः + पः प्रत्ययः निपातनात् (खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः – उ०को०, ३/२८)।

## पर्पटः

पर्पति गच्छतीति पर्पटः ऊषरभूमिर्वा ।

– उ०को०, ४/८१

✓पर्प – गतौ + अटन् प्रत्ययः (शकादिभ्योऽटन् – उ०को०, ४/८१) ।

## पर्परीकः

पिपर्ति पालयतीति पर्परीकः सूर्य्यो वा ।

– उ०को०, ४/१९

✓पृ – पालनपूरणयोः + ईकन् प्रत्ययः, धातोः द्वित्वं (शृपृवृञां द्वे रूक् चाभ्यासस्य – उ०को०, ४/१९) ।

## पर्व

पिपर्तीति पर्व ग्रन्थिर्वा । – उ०को०, ४/११३

✓पृ – पालनपूरणयोः + वनिप् प्रत्ययः (स्नामदिपद्यर्तिपृ शकिभ्यो वनिप् – उ०को०, ४/११३) ।

## पर्वतः

पर्वति पूर्णो भवतीति पर्वतः ।

– उ०को०, ३/११०

✓पर्व – पूरणे + अतच् प्रत्ययः (भृमृदृशियजि-पर्विपच्यमितमिलमिहर्य्यिभ्योऽतच् – उ०को०, ३/११०) ।

## पर्वतच्युत:

ये पर्वतान्मेघान् च्यावयन्ति। – ऋ०, ५/५४/३

पर्वतान्मेघाच्च्युतो यः पर्वतं मेघं च्यावयति वा तस्मै । – ऋ०, ५/५४/१

पर्वत + ✓च्युङ् – गतौ + क्विप् प्रत्ययः ।

## पर्षतः

पर्षति स्निह्यति प्रीतिकरं प्रसन्नं भवति चित्तमस्यां पर्षतः सभा समाजो वा ।

– उ०को०, १/१३०

✓पृषु – सेचने + अदिः प्रत्ययः बाहुलकात् (शृदृभसोऽदिः – उ०को०, १/१३०) ।

## पललं

पलति गच्छति येन तत् पललं तिलचूर्णं पङ्कं मांसं वा । – उ०को०, १/१०६

✓पल – गतौ + कल प्रत्ययः (वृषादिभ्यश्चित् – उ०को०, १/१०६) ।

## पलालः

पल्यते प्राप्यतेऽसौ पलालः निष्फलानि ब्रीहितृणानि वा 'प्यार' इति प्रसिद्धम् ।

– उ०को०, १/११८

✓पल – गतौ प्रापणे च + कालन् प्रत्ययः (तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् – उ०को०, १/११८) ।

## पलितः

पल्यत प्राप्यते तत् पलितं वृद्धावस्थया केशादीनां वा शुक्लत्वं । – उ०को०, ३/९२

✓पल – गतौ प्रापणे च + इतन् प्रत्ययः (लोष्टपलितौ – उ०को०, ३/९२) ।

## पलितं

फलति निष्पन्नं पक्वमिव भवतीति पलितं केशश्चैत्यं वा ।

– उ०को०, ५/३४

✓फल – निष्पत्तौ + इतच् प्रत्ययः धातोः फस्य पादेशः (फलेरितजादेश्च पः – उ०को०, ५/३४)।

## पल्वलं

पलति गच्छतीति पल्वलं अल्पसरो वा ।
– उ०को०, ४/१०७

✓पल – गतौ + वलच् प्रत्ययः ( सानसिवर्णसिपर्णसि-तण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः – उ०को०, ४/१०७ ) ।

## पवाका

पुनातीति पवाका । – उ०को०, ४/१४

✓पूञ् – पवने + आकः ( बलाकादयश्च – उ०को०, ४/१४ ) ।

## पविः

पुनाति दुष्टान् दण्डयित्वा यस्तम् ।
– यजु०, १८/७१

पुनातीति पविः वज्रं हीरकं वा ।
– उ०को०, ४/१३९

✓पूञ् – पवने + इः प्रत्ययः ( अचः इः – उ०को०, ४/१३९ ) ।

## पवीरवि

यो धनादिरक्षायै पवीरं शस्त्रं वाति प्राप्नोति तस्मिन् । – यजु०, ३३/८२

( स०ए०व० ) – पवीर ( शस्त्रनाम ) + ✓वा – गतिगन्धनयोः + कः प्रत्ययः, सप्तम्यां धातोः आकारस्य लोपः ।

## पशुः

पश्यति जानाति स्वार्थमिति पशुः गवादिः। पश्यन्ति येन वा स पशु अग्निः, पश्यति सर्वमिति पशुः । – उ०को०, १/२७

✓दृशिर् – प्रेक्षणे + उः प्रत्ययः, धातोः पशिरादेशश्च ( अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च – उ०को०, १/२७ ) ।

## पशुपाः

यः पशून् पाति । – ऋ०, ६/१९/३

य पशून् पाति रक्षति । – ऋ०, ६/५८/२

पशु + ✓पा – रक्षणे + क्विप् प्रत्ययः ।

## पशुसनि

पशून् सनति सम्भजति येन तत् ।
– यजु०, १९/४८

पशु + ✓षण – सम्भक्तौ + इन् प्रत्ययः ( सर्वधातुभ्य इन् – उ०को०, ४/११८ ) ।

## पशुसाधनी

पशून् साध्नुवन्ति यया सा।– ऋ०, ६/५३/९

पशु + ✓साध – संसिद्धौ + ल्युट् प्रत्ययः, ततः ङीप् प्रत्ययः स्त्रियाम् ।

## पश्चात्सदः

ये पश्चात् सीदन्ति तेभ्यः। – यजु०, ९/३५

ये पश्चिमायां दिशि सीदन्ति ।
– यजु०, ९/३६

( प्र०ब०व० ) – पश्चात् + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## पष्ठवाट्

यः पष्ठेन पृष्ठेन वहत्युष्ट्रादिः ।
– यजु०, १४/९

यः पष्ठेन पृष्ठेन वहति सो हस्त्युष्ट्रादिः।
– यजु०, १८/२६

यः पष्ठेन पृष्ठेन वहति सः। यजु०, २१/१७

ये पष्ठेन पृष्ठेन वहन्ति ते। – यजु०, २४/१३

यः पष्ठेन पृष्ठेन वहति तम् ।
– यजु०, २८/२९

पष्ठ < पृष्ठ + ✓वह – प्रापणे + ण्विः प्रत्ययः ( वहश्च – अष्टा० ३/२६४ ), ऋकारस्य अकारः छन्दसि ।

## पस्त्यसदः

ये पस्त्येषु गृहेषु सीदन्ति तान् ।
– ऋ०, ६/५१/९

(प्र०ब०व०) – पस्त्य – (गृहनाम) + √षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## पांसुः

**पंसयति नष्टमिव भवतीति पांसुः धूलिर्वा।** – उ०को०, १/२७

√पंसि – नाशने + कुः प्रत्ययः धातोः दीर्घश्च (अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुक्धुक्-दीर्घहकाराश्च – उ०को०, १/२७) ।

## पांसुरे

**पांसवो रेणवो रजांसि रमन्ते यस्मिन्नन्तरिक्षे तस्मिन् ।** – यजु०, ५/१५

(स०ए०व०) – पांसु + √रमु – क्रीडायां – अच् प्रत्ययः अथवा पांसु + रः प्रत्ययः मत्वर्थे (नगपांसु-पाण्डुभ्यश्चेति – अष्टा०वा०, ५/२/१०७) ।

## पाकं

**पचन्ति परिपक्वं ज्ञानं कुर्वन्ति यस्मिन् धर्म्ये व्यवहारे तम् ।** – ऋ०, १/३१/१४

**पिबत्यसाविति पाकः शिशुर्वृद्धो वा ।** – उ०को०, ३/४३

√पा – पाने + कन् प्रत्ययः (इण्भीकापाशल्यतिमर्चिभ्यः कन्–उ०को०, ३/४३) अथवा √पच–पाके + घञ् प्रत्ययः।

## पाकुकः

**पचतीति पाकुकः सूपकारो वा ।** – उ०को०, २/३०

√पच – पाके + णुकन् प्रत्ययः धातोः चस्य कः दीर्घश्च (पचिनशोर्णुकन्कनुमौ च – उ०को०, २/३०)।

## पाजः

**पाति रक्षतीति पाजः बलं वा ।** – उ०को०, ४/२०३

√पा – रक्षणे + असुन् प्रत्ययः, जुडागमश्च (पातेर्बले जुट् च – उ०को०, ४/२०३) ।

## पाणिः

**पणायति व्यवहरति येन स पाणिः हस्तो वा।** – उ०को०, ४/१३३

√पण – व्यवहारे स्तुतौ च + इञ् प्रत्ययः, धातोदीर्घत्वञ्च (अशिपणाय्योरुडायलुकौ च – उ०को०, ४/१३३) ।

## पाणिघ्नं

**यः पाणिभ्यां हन्ति तम् ।** – यजु०, ३०/२०

पाणि + √हन् – हिंसागत्योः + टक् प्रत्ययः, हकारस्य घकारः ।

## पाण्डुः

**पण्डति गच्छतीति पाण्डुः रङ्गविशेषो राजविशेषो वा ।** – उ०को०, १/३७

√पण्ड – गतौ + उः प्रत्ययः बाहुलकात् धातोः वृद्धिश्च (मृगय्वादयश्च – उ०को०, १/३७) ।

## पातालं

**पतन्ति गच्छन्ति यत्र स पातालः देशः पादस्य तले वर्त्तते इति वा ।** – उ०को०, १/११७

√पत्लृ – गतौ + आलञ् प्रत्ययः धातोः दीर्घत्वञ्च (पतिचण्डिभ्यामालञ् – उ०को०, १/११७) ।

## पातिः

**पाति रक्षतीति पातिः स्वामी ।** – उ०को०, ५/५

√पा – रक्षणे + अतिः प्रत्ययः (पातेरतिः – उ०को०, ५/५) ।

## पात्रः/पात्रं

**पद्यते येन तत् ।** – ऋ०, १/८२/४

**पिबत्यनेन तत् पात्रम्। पाति रक्षतीति पात्रः सज्जनो वा ।** – उ०को०, ४/१५९

**पिबत्यनेनेति पात्रं योग्यो भाजनं वा ।** – उ०को०, ४/१७०

✓पा – पाने रक्षणे च + ष्ट्रन् प्रत्ययः त्रन् प्रत्ययो वा (सर्वधातुभ्यः ष्ट्रन् – उ०को०, ४/१५९)।

## पाथः

**पातीति पाथः जलम्। – उ०को०, ४/२०४**

**पाति रक्षतीति पाथः भक्तम्।**

**– उ०को०, ४/२०५**

✓पा – पाने रक्षणे च + असुन् प्रत्ययः, थुडागमः (उदके थुट् च – उ०को०, ४/२०४), तथा (अन्ने च – उ०को०, ४/२०५)।

## पाथिः

**पिबति यो येन वा तत् पाथिः चक्षुः समुद्रो वा। – उ०को०, २/११४**

✓पा – पाने + इसिन् प्रत्ययः थुगागमश्च (पिबतेस्थुक् – उ०को०, २/११४)।

## पादाः

**पद्यन्ते गम्यन्ते याभ्यां गमनागमनाभ्यां तौ।**

**– ऋ०, १/२४/८**

**पद्यन्ते गच्छन्ति यैस्त इव।**

**– ऋ०, १/१६३/९**

**पद्यन्ते गच्छन्ति यैस्ते। – यजु०, २९/२०**

✓पद – गतौ + घञ् प्रत्ययः।

## पादूः

**पद्यन्ते गच्छन्ति यया सा पादूः उपानहौ वा। – उ०को०, १/८५**

✓पद – गतौ + ऊः प्रत्ययः धातोदीर्घश्च (णित्कशिपद्यर्त्तेः – उ०को०, १/८५)।

## पापं

**पान्ति रक्षन्त्यात्मानमस्मादिति पापम् अधर्मो वा। – उ०को०, ३/२३**

✓पा – रक्षणे + पः प्रत्ययः (पानीविषिभ्यः पः – उ०को०, ३/२३)।

## पाप्मा

**पिबतीति पाप्मा किल्बिषं वा।**

**– उ०को०, ४/१५१**

✓पा – पाने + मनिन् प्रत्ययः निपातनात्, धातोः पुगागमश्च (नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन् – उ०को०, ४/१५१)।

## पायुं

**पात्यनेन तं गुह्यन्द्रियम्। – यजु०, ६/१४**

**पाति रक्षति स पायुः रक्षकः गुदेन्द्रियं वा। – उ०को०, १/१**

✓पा – रक्षणे + उण् प्रत्ययः (कृवापाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१)।

## पार्य्यं

**पार्य्यते समाप्यते कर्म येन तम्।**

**– ऋ०, १/१२१/१२**

✓पार – कर्मसमाप्तौ + यत् प्रत्ययः।

## पारक्

**पारयति कर्म समापयतीति पारक् सुवर्णं वा। – उ०को०, १/१३६**

✓पार – कर्मसमाप्तौ + अजिः प्रत्ययः (पारयतेरजिः – अष्टा०, १/१३६)।

## पारुः

**पिबतीति पारुः। – उ०को०, ४/१०१**

✓पा – पाने + रुः प्रत्ययः बाहुलकात् (मीपीभ्यां रुः – उ०को०, ४/१०१)।

## पार्ष्णिः

**पर्षति सिञ्चतीति पार्ष्णिः पादतलं वा।**

**– उ०को०, ५/५२**

✓पृषु – सेचने + निः प्रत्ययः धातोर्वृद्धिश्च (घृणिपृश्निपार्ष्णिचूर्णिभूर्णयः – उ०को०, ४/५२)।

## पावक

**पवित्रकर्त्तः शुद्धिहेतुर्वा। – ऋ०, १/४/१०**

पुनाति पवित्रतां करोति तत्संबुद्धावीश्वर पवित्रहेतुरग्निर्वा । – ऋ०, १/१२/९

पवित्रकारक पवित्रता हेतुर्वा।– ऋ०, १/१३/१

✓पूञ् – पवने + ण्वुल् प्रत्ययः ।

## पाशधरः

पाशं बन्धनं धारयतीति पाशधरः ।

– उ०को०, २/२२

पाश + ✓धृञ् – धारणे + रक् प्रत्ययः बाहुलकात् धात्वन्तरे छन्दसोः सामान्यप्रत्ययादौ च णेर्लुक् (बहुलमन्यत्रापि संज्ञाछन्दसोः – उ०को०, २/२२)।

## पार्श्वं

स्पृशति येन स पार्श्वः कक्षयोरधोभागो वा। – उ०को०, ५/२७

✓स्पृश – संस्पर्शे + श्वण् प्रत्ययः (स्पृशेः श्वणशुनौ पृ च – उ०को०, ५/२७) ।

## पिङ्गलः

पिङ्क्ते वर्णयतीति पिङ्गलः वर्णभेदो वा।

– उ०को०, १/१०९

✓पिञ्ज – वर्णे + कल प्रत्ययः बाहुलकात् धातोः जकारस्य गकारः (कुटिकशिकौतिभ्यो मुट् च् – उ०को०, १/१०९) ।

## पिञ्जूलं

पिङ्क्ते वर्णयतीति पिञ्जूलं कुशवर्तिर्वा।

– उ०को०, ४/९०

✓पिञ्ज – वर्णे + ऊलः प्रत्ययः (खर्जिपिञ्जादिभ्य ऊरोलचौ – उ०को०, ४/९०) ।

## पिण्डिलः

पिण्डति सङ्घातं करोति स पिण्डिलः गणको वा । – उ०को०, १/५४

✓पिण्ड – संघाते + इलच् प्रत्ययः (सलिकल्यनि-महिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् – उ०को०, १/५४) ।

## पिण्याकः

यं पिनष्टि सम्यक् चूर्णयति स पिण्याकः तिलकल्को वा । – उ०को०, ४/१५

✓पिष्लृ – सञ्चूरणे + आकः प्रत्ययः (पिनाकादयश्च – उ०को०, ४/१५), धातोः षकारस्य णत्वं युगागमश्चेति ।

## पिता

ये पान्ति पितृवत् रक्षन्ति विद्यासुशि-क्षादिदानैस्ते । – ऋ०, १/६२/२

पान्ति पालयन्ति सद्विद्याशिक्षाभ्यां ये ते तत्सम्बुद्धौ । – यजु०, २/३१

ये पान्ति विद्यान्नादिदानेन तत्सम्बुद्धौ ।

– यजु०, २/३३

पाति रक्षतीति पिता जनको वा ।

– उ०को०, २/९५

यः पाति सर्वान् स पिता ।

– स० प्र० (*प्रथमसमुल्लासः*)

यः पाति सः पिता ।

– स०प्र०(*चतुर्थ सममुल्लासः*)

✓पा – रक्षणे + तृन् प्रत्ययः निपातनात् (नप्तृनेष्टृत्व-ष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ – उ०को०, २/९५), धातोराकारस्य इत्वम् ।

## पितृषद्

पितरो विद्याविज्ञापका विद्वांसः सीदन्ति यस्मिंस्तस्मै । – ऋ०, १/११७/७

यथा पितृषु ज्ञानिषु सीदन्ति तथा ।

– यजु०, ५/२६

यथा विद्यावन्तो ज्ञानिनस्सीदन्ति यस्मिं-स्तत्तथा । – यजु०, ५/२६

पितृषु विद्वत्सु रक्षितृषु सीदन्ति ते ।

– यजु०, ६/१

पितृ + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## पिनाकः

पाति रक्षति आत्मानं येन तद्धनुर्वर्मादिम्।

– यजु०, १६/५१

पाति रक्षतीति पिनाकः त्रिशूलं धातुर्वा ।

– उ०को०, ४/१५

✓पा – रक्षणे + आकः प्रत्ययः (पिनाकादयश्च – उ०को०, ४/१५), धातोराकारस्येत्वम् नुमागमश्चेति।

## पिनाकावसः

पिनष्टि शत्रून् येन तत् पिनाकं, तेनावसो, पिनाकस्यावसो रक्षणं वा यस्मात् सः ।

– यजु०, ३/६१

(प०ए०व०) – ✓पिष्लृ-सञ्चूरणे + आकः प्रत्ययः, धातोः नुम् च (पिनाकादयश्च - उ०को०, ४/१५) > पिनाक + ✓अव – रक्षणादिषु + असच् प्रत्ययः।

## पियालः

पीयति तर्पयतीति पियालः वृक्ष भेदो वा।

– उ०को०, ३/७६

✓पीयु (सौत्रोधातुः) – तर्पणेः + कालन् प्रत्ययः, धातोः ह्रस्वत्वं (पीयुक्वणिभ्यां कालन् ह्रस्वं सम्प्रसारणञ्च – उ०को०, ३/७६) ।

## पिशङ्गिला

या पिशं प्रकाशरूपं गिलति सा ।

– यजु०, २३/११

✓पिश – अवयवे + कः प्रत्ययः > पिश + ✓गॄ – निगरणे + कः प्रत्ययः ततः स्त्रियां टाप् प्रत्ययः, पूर्वपदस्य मुमागमः (गिलेगिले चेति वक्तव्यम् – अष्टा०वा०, ६/३/७०) ।

## पिशाचाः

पिशिता नष्टाऽऽशा येषां ते पिशाचाः अथवा पिशितमवयवीभूतं सरक्तं वा मांसमाचामन्ति भक्षयन्तीति पिशाचाः ।

– यजु०, ३०/८

ये प्राणिनां पेशितं रुधिरादिकमाचामन्ति भक्षयन्ति ते हिंसका म्लेच्छाचारिणो द्रष्टाः । – यजु०, ३४/७९

✓पिश – अवयवे + कः प्रत्ययः > पिशः + आङ् + ✓चमु – अदने + डः प्रत्ययः ।

## पिशितं

पिश्यतेऽवयवरूपं क्रियते तत् पिशितं मांसं वा । – उ०को०, ३/९५

✓पिश – अवयवे + इतन् प्रत्ययः (पिशेः किच्च – उ०को०, ३/९५) ।

## पिशुनः

पिशत्यवयवं करोतीति पिशुनः खलः सूचको वा । – उ०को०, ३/५५

✓पिश – अवयवे + उनन् प्रत्ययः (क्षुधिपिशि-मिथिभ्यः कित् – उ०को०, ३/५५) ।

## पीतुः

पिबत्युदकादिकं पाति प्राणिनो रक्षति वा स पीतुः अग्निः सूर्यो वा ।

– उ०को०, १/७१

✓पा – पाने + तुन् प्रत्ययः (पः किच्च – उ०को०, १/७१) कित्वात् धातोरीत्वं (घुमास्थागापाजहातिसां हलि – अष्टा०, ६/४/६६) ।

## पीथः

यः पिबति यं वा स पीथः सूर्यो घृतं वा।

– उ०को०, २/७

√पा – पाने + थक् प्रत्ययः धातोरीत्वं ( पातृतुदिवचिरिचिसिचिभ्यस्थक् – उ०को०, २/७ ) ।

## पीयुः

**पिबति पाति वा स पीयुः कालः काको वा । – उ०को०, १/३६**

√पा – पाने रक्षणे च + कुः प्रत्ययः निपातनात् ( खरूशङ्कुपीयुनीलङ्गुलिगु – उ०को०, १/३६ ) धातोरीकारादेशो युगागमश्चेति ।

## पीयूषं

**पीयति पीयते वा तत् पीयूषं नूतनं पयोऽमृतं वा । – उ०को०, ४/७६**

√पा – पाने + उषन् प्रत्ययः ( पीयेरुषन् – उ०को०, ४/७६ ) धातोरीकारादेशो युगागमश्चेति ।

## पीलुः

**पीलति प्रतिष्टम्नोति निरुणद्धि जीवानिति पीलुः हस्ती वृक्षः काणुः परमाणवः पुष्पाणि वा । – उ०को०, १/३७**

√पील – प्रतिष्टम्भे + कुः प्रत्ययः निपातनात् ( मृगय्वादयश्च – उ०को०, १/३७ ) ।

## पीवरः

**पया पाययन्ति तां स्थूलाम् ।**

**– यजु०, १२/७१**

**पिबति दुग्धादिकमिति पीवरः स्थूलो वा।**

**– उ०को०, ३/१**

√पा – पाने + ष्वरच् प्रत्ययः निपातनात्, धातोरीकारादेशः ( छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः – उ०को०, ३/१ ) ।

## पीवा

**प्यायते वर्द्धतेऽसौ पीवा स्थूलो वा ।**

**– उ०को०, ४/११५**

√प्यैङ् – वृद्धौ + क्वनिप् प्रत्ययः धातोः सम्प्रसारणञ्च ( ध्याप्योः सम्प्रसारणञ्च – उ०को०, ४/११५ ) ।

## पुञ्जिष्ठेभ्यः

**ये पुञ्जिषु वर्णेषु भाषासु वा तिष्ठन्ति तेभ्यः । – यजु०, १६/२७**

( च०ब०व० ) – पुञ्जि + √ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ।

## पुण्डरीकं

**पुणाति शुभकर्माचरतीति पुण्डरीकं श्वेताम्भोजं सितपत्रं भेषजं व्याघ्रोऽग्निर्वा।**

**– उ०को०, ४/२०**

√पुण – कर्मणिशुभे + ईकन् प्रत्ययः, धातोः डकारागमश्च ( फर्फरीकादयश्च – उ०को०, ४/२० )।

## पुण्ड्रः

**पुण्डति खण्डयतीति पुण्ड्रः दुष्टो वा ।**

**– उ०को०, २/१३**

√पुडि – खण्डने + रक् प्रत्ययः बाहुलकात् ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विवतिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ ) ।

## पुण्यं

**पवते पवित्रो भवति येन तत् पुण्यं सुकृतो धर्मो वा । – उ०को०, ५/१५**

√पूञ् – पवने + यत् प्रत्ययः धातोर्ह्रस्वः णुगागमश्च ( पूञो यण्णुग्ध्रस्वश्च – उ०को०, ५/१५ )।

## पुत्रः

**पुन्नाम्नो वृद्धावस्थाजन्यदुःखात् त्रायते सः।**

**– यजु० ८/५**

**पुनाति पवित्रं करोतीति पुत्रः आत्मजो वा । – उ०को०, ४/१६५**

√पूञ् – पवने + क्त्र प्रत्ययः धातोर्ह्रस्वश्च ( पुवोर्ह्रस्वश्च – उ०को०, ४/१६५ ) ।

## पुनर्भुवा

ये पुनः पुनः पर्य्यायेण भवतस्ते ।

– ऋ०, १/६२/८

पुनः – ✓भू – सत्तायां + क्विप् प्रत्ययः ।

## पुमान्

पाति रक्षतीति पुमान् पुमांसौ, पुमांसः ।

– उ०को०, ४/१७८

✓पा – रक्षणे + डुम्सुन् प्रत्ययः (पातेर्डुम्सुन् – उ०को० ४/१७८) डित्वात् टिलोपः पुंस् – असुङादेशः (पुंसोऽसुङ् – अष्टा०, ७/१/८९) ।

## पुरणः

पिपर्त्ति पालयति पूरयति वा स पुरणः जलैः पूर्णो भवतीति समुद्रो वा ।

– उ०को०, २/८१

✓पृ – पलानपूरणयोः + क्युः प्रत्ययः (कृपॄवृजिमन्दिनिधाञः क्युः – उ०को०, २/८१) धातोरुपधायाः स्थाने उकारादेशः ।

## पुरन्दरः

यः पुरं दारयति सः । – ऋ०, २/२०/७

यः पुराणि दृणाति सः । – ऋ०, ५/३०/११

यो मेघस्य पुराणि दृणाति ।

– ऋ०, ६/१६/१४

यः शत्रूणां पुराणि दृणाति तम् ।

– यजु०, ११/३३

यो रिपुपुराणि दृणाति सः ।

– यजु०, २०/३८

योऽरिपुराणि दृणाति सः । – यजु०, २८/३

पुरं + ✓दृ – विदारणे + खच् प्रत्ययः (पूःसर्वयोर्दारिसहोः – अष्टा०, ३/२/४१) ।

## पुरन्धिः

याः पुरं श्रितां दधाति ताः ।

– ऋ०, १/१२३/६

पुरन्दधति यास्ताः । – ऋ०, १/१५८/२

यः पुरं जगद्धरति सः । – ऋ०, १/१८१/९

पुरं पूर्णां विद्यां ध्यायति या तया सह ।

– ऋ०, २/१/३

याः पुरूणि विज्ञानानि दधाति ताः प्रज्ञाः।

– ऋ०, ४/२२/१०

यो बहून् दधाति तम् । – ऋ०, ७/९/६

या पुरूनर्थान्दधाति तया प्रज्ञया ।

– ऋ०, ७/३२/२०

पुरवः बहवः पदार्था ध्रियन्ते यस्मिन्त्स आकाशः । – ऋ०, ७/३५/२

या पुरूणि बहूनि सुखानि दधाति सा ।

– यजु०, १४/२

यया पुरं दधाति तया । – यजु०, २२/१८

या पुरून् बहून् दधाति सा ।

– यजु०, २२/२२

पुरं + ✓डुधाञ् – धारणपोषणयोः + किः प्रत्ययः (कर्मण्यधिकरणे च – अष्टा०, ३/३/९३) ।

## पुर-एता

यः पुर एति गच्छति सः ।

– ऋ०, ६/२१/१२

यः पुर एति अग्रगामी भवति सः ।

– ऋ०, ७/४१/५

यः पुरस्तादेति सः । – यजु०, ३४/३८

पुरः + ✓इण् – गतौ + तृच् प्रत्ययः ।

## पुरं

येन सर्वान् पिपर्त्ति तत् । – यजु०, ११/२६

✓पृ – पालनपूरणयोः + क्विप् प्रत्ययः, धातोः उपधायाः स्थाने उकारः ।

## पुरःसदः

ये पूर्वं सीदन्ति शत्रून् हिंसन्ति वा ।

– ऋ०, १/७३/३

ये पुरः सीदन्ति ते । – ऋ०, ३/५५/२१

ये पुरः पूर्वं सभायां राष्ट्रे वा सीदन्ति तेभ्यः । – यजु०, ९/३५

ये सभायां राष्ट्रे वा पुरः पूर्वस्यां दिशि सीदन्ति । – यजु०, ९/३६

(प्र०ब०व०) – पुरः + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## पुरिः

पिपर्त्तीति पुरिः नगरं नदी वा ।

– उ०को०, ४/१४३

✓पॄ – पालनपूरणयोः + इः प्रत्ययः (कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च – उ०को०, ४/१४३), धातोः उपधायाः स्थाने उकारादेशश्च ।

## पुरीषं

पिपर्ति तत् पुरीषं शकृद्वा। – उ०को०, ४/२७

✓पॄ – पालनपूरणयोः + ईषन् प्रत्ययः (शॄपॄभ्यां किच्च – उ०को०, ४/२७) धातोरुपधायाः स्थाने उकारादेशः ।

## पुरीषवाहणः

यः पुरीषाणि पालनादीनि कर्माणि वाहयति प्रापयति । – यजु०, ११/४४

पुरीष + ✓वह – प्रापणे + ल्युट् प्रत्ययः ।

## पुरीष्य

पृणन्ति पूरयन्ति सुखानि यैर्गुणैस्ते पुरीषास्तेषु साधुस्तत्सम्बुद्धौ। – यजु०, ३/४०

पुरीषः ततः भवार्थे साध्वर्थे वा – यत् प्रत्ययः ।

## पुरुः

पिपर्ति पालयति पूरयति वा स पुरुः बहुरिन्द्रियं वा । – उ०को०, १/२३

✓पॄ – पालनपूरणयोः + कुः प्रत्ययः (पॄभिदिव्यधिगृधिधृषिहृषिभ्यः – उ०को०, १/२३) धातोः उपधायाः उकारः ।

## पुरुकृत्

यः पुरूणि बहूनि सुखानि करोति सः ।

– ऋ०, १/५३/३

यः पुरूणि बहूनि वस्तूनि करोति सः ।

– ऋ०, २/१३/८

पुरु + ✓डुकृञ् – करणे + क्विप् प्रत्ययः तुगागमश्च।

## पुरुक्षु

यत् पुरुषु बहुषु क्षियति वसति तत् ।

– यजु०, २७/२०

पुरु + ✓क्षि – निवासगत्योः + डुन् प्रत्ययः बाहुलकात्।

## पुरुतमं

पुरुन् बहून् दृष्टस्वभावान् जीवान् पापफलकर्मदानेन तमयति ग्लापयति तं परमेश्वरं तत्फलभोगहेतुं वायुं वा।

– ऋ०, १/५/२

या बहून् पदार्थान् ताम्यति कांक्षति सा ।

– ऋ०, १/१२४/६

यः पुरून्बहून्ताम्यति तम् । – ऋ०, ४/४४/१

पुरु + ✓तमु – अभिकांक्षायां + अच् प्रत्ययः ।

## पुरुत्रा

यः पुरून् बहून् त्रायते सः। – यजु०, १७/३२

पुरु + ✓त्रैङ् – पालने + क्विप् प्रत्ययः ।

## पुरुद्रुहः

ये पुरून् बहून्द्रुह्यन्ति तान् । – ऋ०, ३/१८/१

(द्वि०ब०व०) पुरु + ✓द्रुह – जिघांसायां + क्विप् प्रत्ययः ।

## पुरुधः

ये पुरून् बहून् धरतस्ते । – ऋ०, १/१२२/२

यः पुरून् दधाति तत्सम्बुद्धौ ।

– ऋ०, ३/५४/११

य पुरून् बहून् दधाति तत्सम्बुद्धौ ।

– ऋ०, ३/५६/३

पुरु + √डुधाञ् – धारणपोषणयोः + कः प्रत्ययः ।

## पुरुधप्रतीकः

पुरून् बहून् दधाति येन तत् पुरुधं पुरुधं प्रतीतिकरं कर्म यस्य सः । – ऋ०, ३/७/३

पुरून् बहून् दधति ते पुरुधा यः पुरुधान् प्रत्याययति सः । – ऋ०, ३/४८/३

पुरुध + प्रति + √इण् – गतौ + कन् प्रत्ययः ।

## पुरुनीथे

यत्पुरुभिर्बहुभिः प्राणिभिः पदार्थैर्वा नीयते तस्मिन् । – ऋ०, १/५९/७

(स०ए०व०) – पुरु – √णीञ् – प्रापणे + क्थन् प्रत्ययः ।

## पुरुप्रियः

यः पुरून् बहून् प्रीणाति बहूनां प्रियो वा। – ऋ०, १/४५/६

यः पुरून् बहून् प्रीणाति । – ऋ०, ३/३/४

पुरु + √प्रीञ् – तर्पणे कान्तौ च + कः प्रत्ययः (इगुपधज्ञाप्रीकिरः कः – अष्टा०, ३/१/१३५) ।

## पुरुमायः

यः पुरून् बहून् मिनोति सः।– ऋ०, ३/५१/४

पुरु + √माङ् – माने यः प्रत्ययः (माछाशसिभ्यो यः – उ०को०, ४/१०९) ।

## पुरुभू

यो पुरून् भावयतस्तौ । – ऋ०, ४/४४/४

पुरु + √भू – सत्तायां + क्विप् प्रत्ययः ।

## पुरुराव्णः

यः पुरूणि बहूनि दुःखानि राति ददाति स पुरुरावा तस्मात् । – यजु०, ३/४८

(च०ए०व०) – पुरु + √रा – दाने + वनिप् प्रत्ययः ।

## पुरुवार

यः पुरूंन्बहूनाप्तान्वृणोति तत्सम्बुद्धौ ।

– ऋ०, ४/२/२०

पुरु + √वृञ् – वरणे + घञ् प्रत्ययः ।

## पुरुषः



यः स्वव्याप्त्या चराचरं जगत् पृणाति पूरयति वा स पुरुषः ।

– स० प्र० (प्रथमसमुल्लासः)

पुरत्यग्रं गच्छतीति पुरुषः पुमान् ।

– उ०को०, ४/७४

१- √पुर – अग्रगमने + कुषन् प्रत्ययः (पुरः कुषन्– उ०को०, ४/७४) ।

२- √पॄ – पालनपूरणयोः + कुषन् प्रत्ययः, धातोः उपधाया उत्वम् ।

## पुरुषमृगः

यः पुरुषान्मार्ष्टि स पशुविशेषः ।

– यजु०, २४/३५

पुरुष + √मृजूष् – शुद्धौ + कः प्रत्ययः, जकारस्य कत्वम् ।

## पुरुस्पृहः

याः पुरुभिः स्पृह्यन्त ईप्स्यन्ते ताः ।

– ऋ०, १/१४२/६

पुरु + √स्पृह – ईप्सायां + कः प्रत्ययः ।

## पुरुहूत

पुरुभिर्बहुभिराहूयते स्तूयते यस्तत् सम्बुद्धौ।

– ऋ०, १/३०/१०

यः पुरुभिर्बहुभिर्विद्वद्भिर्हूयते स्तूयते तत्सम्बुद्धौ । – ऋ०, १/४४/७

पुरु + √ह्वेञ् – स्पर्द्धायां शब्दे च + क्तः प्रत्ययः यज्ञादित्वात् सम्प्रसारणञ्च ।

## पुरूची

या पुरूणि बहूनि वर्षाण्यञ्चन्ति ताः ।
– यजु०, ३५/१५

(प्र०ब०व०) – पुरू + ✓अञ्चु – गतिपूजनयोः + क्विप् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चु- युजिक्रुञ्चां च – अष्टा०, ३/२/५९) धातोः न लोपः स्त्रियां ङीप् प्रत्ययः, अकारलोपः तथा पूर्वपदस्य च दीर्घः।

## पुरूरवाः

पुरवो बहवो रवा शब्दा यस्य विदुषस्तस्मै।
– ऋ०, १/३१/४

पुरु बहु रौत्युपदिशति ब्रवीति वा स पुरूरवाः राजर्षिर्वा । – उ०को०, ४/२३२

पुरु + ✓रु – शब्दे + असिः प्रत्ययः, पूर्वपदस्य च दीर्घः निपातनात् (पुरुरवाः – उ०को०, ४/२३२)।

## पुरोधाः

पुरोऽग्रे यजमानं दधातीति पुरोधाः पुरोहितो वा । – उ०को०, ४/२३१

पुरः + ✓डुधाञ् – धारणपोषणयोः + असिः प्रत्ययः (पुरसि च – उ०को०, ४/२३१) ।

## पुरोभूः

यः पुरस्ताद्भावयति सः । – ऋ०, ३/३१/८

पुरस् + ✓भू – सत्तायां + क्विप् प्रत्ययः ।

## पुरोयुधा

पुरः पूर्वं युध्येते यौ तौ । – ऋ०, १/१३२/७

पूर्वं युध्येते तौ । – यजु०. ८/५३

पुरस् + ✓युध – सम्प्रहारे + क्विप् प्रत्ययः ।

## पुरोहितः

पुरस्तात्सर्वं जगद्दधाति । – ऋ०, १/१/१

पुर एनं दधति पुरोऽयं दधाति सः ।
– ऋ०, १/४४/१२

पुर एनं विद्वांसो दधति सः।– ऋ०, २/२४/९

पुर एनं दधति सः । – ऋ०, ३/२/८

पुर एनं दधति । – ऋ०, ५/११/२

यं यजमानः पुरः पूर्वं दधाति सः ।
– यजु०, ११/८१

पुरस् + ✓डुधाञ् – धारणपोषणयोः + क्तः प्रत्ययः, धातोः 'हि' आदेशः (दधातेर्हि – अष्टा० ७/४/४२)।

## पुरोहितिः

पुरस्ताद्धिता क्रिया । – ऋ०, ७/६०/१२

पुरस् + ✓डुधाञ् – धारणपोषणयोः + क्तिन् प्रत्ययः स्त्रियां, धातोः हिरादेशश्च (दधातेर्हिः – अष्टा०, ७/४/४२) ।

## पुलस्तिः

पुलं महत्वमसते गच्छति प्राप्नोतीति पुलस्तिः ऋषिर्वा: । – उ०को०, ४/१८०

पुल + ✓अस – गतिदीप्त्यादानेषु + तिः प्रत्ययः बाहुलकात् (वसेस्तिः – उ०को०, ४/१८०) ।

## पुलिनं

पोलयति महान् भवतीति पुलिनं लसामीप्यं वा । – उ०को०, २/५३

✓पुल – महत्वे + इनन् प्रत्ययः (तलिपुलिभ्यां च – उ०को०, २/५३) ।

## पुलिन्दः

पोलति महान् भवतीति पुलिन्दः शवरश्चाण्डालभेदो वा । – उ०को०, ४/८५

✓पुल – महत्वे + किन्दच् प्रत्ययः (कुणिपुल्योः किन्दच् – उ०को०, ४/८५) ।

## पुष्करं

पुष्णातीति पुष्करं अन्तरिक्षं कमलमुदकं वा । – उ०को०, ४/४

✓पुष – पुष्टौ + करन् प्रत्ययः (पुषः कित् – उ०को०., ४/४) ।

## पुष्करसादः

यः पुष्करे सीदति । – यजु०, २४/३१

पुष्कर + √षद्लृ – विशरणगत्यवसादनेषु + अण् प्रत्ययः ।

## पुष्कलं

पुष्यतीति पुष्कलं पूर्णं वा ।

– उ०को०, ४/५

√पुष – पुष्टौ + कलन् प्रत्ययः (कलँश्च – उ०को०, ४/५) ।

## पुष्टिवर्द्धनः

य शरीरात्मनोः पुष्टिं वर्धयतीति ।

– ऋ०, १/१८/२

पुष्टिं वर्धयतीति । – ऋ०, १/३१/५

यः पुष्टिं वर्धयति तम् । – ऋ०, ७/५९/१२

पुष्टिं शरीरात्मबलं धातुसाम्यं च वर्द्धयतीति । – यजु०, ३/२९

वर्द्धयतीति वर्द्धनः पुष्टेर्वर्द्धनः पुष्टिवर्द्धनः । – यजु०, ३/४०

यौ पुष्टिं वर्धयतस्तौ । – यजु०, २१/२०

यः पुष्ट्या वर्धयन्ति तम् । – यजु०, २८/३२

√पुष – पुष्टौ + क्तिन् प्रत्ययः > पुष्टि + √वृधु – वृद्धौ + युच् प्रत्ययः (अनुदात्तेतश्च हलादेः – अष्टा०, ३/२/१४९) ।

## पूगः

पूयते मुखं येन स पूगः क्रमुकः फलविशेषः 'सुपारी' इति प्रसिद्धः, समूहो वा ।

– उ०को०, १/१२४

√पूञ् – पवने + गन् प्रत्ययः (छापूखडिभ्यः कित् – उ०को०, १/१२४) ।

## पूतबन्धनी

या पूतान् पवित्रान् गुणान् बध्नाति गृह्णाति सा । – ऋ०, ५/४४/९

√पूञ् – पवने + क्तः प्रत्ययः > पूत + √बन्ध – बन्धने + ल्युट् प्रत्ययः ततः ङीप् प्रत्ययः स्त्रियाम् ।

## पूतभृत्

येन पूतं बिभर्त्ति तच्छुद्धिकरं सूर्यादिकम्।

– यजु०, १८/२१

पूत + √भृञ् – भरणे + क्विप् प्रत्ययः तुगागमश्च।

## पूषा

पोषयतीति पूषा सूर्यलोकः ।

– ऋ०, १/२३/१३

यो जगदीश्वरः स्वाभिव्याप्त्या सर्वान् पदार्थान् पोषयति सः । – ऋ०, १/२३/१४

(पूष्णः)पुष्टिकर्तुः प्राणस्य ।

– यजु०, १/१०

पुष्टिकर्त्तुर्वायोः । अनेन पुष्टिहेतुर्गृह्यते ।

– यजु०, १/२१

पुष्टिहेतोः समानस्य वायोः।– यजु०, २/११

चन्द्र इव सर्वस्य पोषकः।– यजु०, ९/३२

पूषति वर्धतेऽसौ पूषा सूर्यो वायुर्वा ।

– उ०को०, १/१५९

√पूष – वृद्धौ + कनिन् प्रत्ययः निपातनात् (श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्वन्मातरिश्वन्मघवन्निति – उ०को०, १/१५९) ।

## पूर्वः

अधीतविद्यैर्वर्त्तमानैः प्राक्तनैर्वा विद्वद्भिः।

– ऋ०, १/१/२

√पूर्व – पूर्णे + अच् प्रत्ययः ।

## पूर्वपाः

यः पूर्वान् पाति सः । – ऋ०, ४/४६/१

पूर्व + √पा – रक्षणे + क्विप् प्रत्ययः ।

## पूर्वपीतये

पूर्वं पीतिः पानं सुखभोगो यस्मिन् तस्मादानन्दाय । – ऋ०, १/१९/९

पूर्वेषां पीतिः पानं तस्यै । – ऋ०, १/१३४/१

(च०ए०व०)–पूर्व + ✓पा – पाने + क्तिन् प्रत्ययः ।

## पूर्वभाजः

ये पूर्वान् भजन्ति ते । – ऋ०, ५/७७/१

पूर्व + ✓भज – सेवायां + ण्विः प्रत्ययः (भजो ण्विः – अष्टा०, ३/२/६२) ।

## पूर्वसूनां

याः पूर्वमपत्यानि सूयन्ते तासाम्।

– ऋ०, २/३५/५

(ष०ब०व०) पूर्व + ✓षूङ्-प्राणिप्रसवे + क्विप् प्रत्ययः ।

## पूर्वहूतिं

पूर्वा हूतिराह्वनं यस्य तम् ।

– ऋ०, १/१२२/२

पूर्वेषां विद्यावृद्धानां हूतिराह्वानं यस्मिन् गृहाश्रमे तस्मिन्। – ऋ०, १/१२३/२

(द्वि०ए०व०)पूर्व + ✓ह्वेञ् – स्पर्द्धायां शब्दे च + क्तिन् प्रत्ययः स्त्रियाम् ।

## पृक्षः

पृचन्ति संयुञ्जन्ति यस्मिन् ।

– ऋ०, १/६३/३

याः पृचते विद्यासम्पर्कं कुर्वन्ति ताः पुत्र्यः।

– ऋ०, १/७१/७

✓पृची – सम्पर्के + क्सः प्रत्ययः बाहुलकात् ।

## पृक्षयामेषु

पृच्छ्यन्ते ये ते पृक्षास्तेषामिमे यामास्तेषु।

– ऋ०, १/१२२/७

(स०ब०व०) – ✓प्रच्छ – ज्ञीप्सायां + क्सः प्रत्ययः बाहुलकात् पृक्षः + ✓या – प्रापणे + मन् प्रत्ययः (अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०) ।

## पृतनाषाट्

पृतनां नृसेनां सहते य सः।– ऋ०, १/१७५/२

ये पृतनां शत्रुसेनां सहन्ते ते ।

– ऋ०, ४/४५/८

यः पृतानां सेनां सहते । – ऋ०, ५/२३/२

यः पृतनाः सेनाः सहते सः ।

– ऋ०, ६/१९/७

ये पृतानां शत्रुसेनां सहन्ते ते ।

– ऋ०, ६/४५/८

यः पृतनाः सेनाः सहते तम् ।

– ऋ०, ६/७२/५

यः पृतनां सहते । – यजु०, १७/३९

ये मनुष्याः पृतना सहन्ते ते पृतनासाहस्तेषु साधवे । – यजु०, १८/६८

✓पृ – प्रीतौ अथवा ✓पृङ् – व्यायामे + तनन् प्रत्ययः (वीपतिभ्यां तनन् – उ०को०, ३/१५०) ततः स्त्रियां टाप् > पृतना + ✓षह – मर्षणे + ण्विः प्रत्ययः (छन्दसि सह – अष्टा०, ३/२/६३) ।

## पृथक्

प्रथयति सङ्घाताद्विस्तृतो भवतीति पृथक् नानात्वं वा । – उ०को०, १/१३७

✓प्रथ – प्रख्याने + अजिः प्रत्ययः, सम्प्रसारणं जकारस्य ककारः (प्रथे कित्सम्प्रसारणं च – उ०को०, १/१३७) ।

## पृथिवी

पृथुसुखनिमित्ता । – यजु०, २/१०

पृथुसुखदात्री विद्या । – यजु०, २/१०

यः पर्थति सर्वं जगद्विस्तृणाति स पृथिवी

– स० प्र० (प्रथमसमुल्लासः)

प्रथते विस्तीर्णा भवतीति पृथिवी ।

– उ०को०, १/१५०

✓प्रथ – विस्तारे + (क्रमशः) षिवन् षवन् ष्वन् प्रत्ययाः सम्प्रसारणञ्च (प्रथेः षिवन्षवन्ष्वनः सम्प्रसारणं च – उ०को०, १/१५०) ।

## पृथुः

प्रथते कीर्तिः वा विस्तारयति स पृथुः राजविशेषो विस्तीर्णः पदार्थो वा ।

– उ०को०, १/२८

✓प्रथ – विस्तारे + कुः प्रत्ययः सम्प्रसारणञ्च (प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च – उ०को०, १/२८) ।

## पृथुकः

प्रथते वर्धते स पृथुकः ।

– उ०को०, ५/५३

✓प्रथ – प्रख्याने + कुनन् प्रत्ययः सम्प्रसारणञ्च (अर्भकपृथुकपाका वयसि – उ०को०, ५/५३) ।

## पृथुप्रगामा

पृथुभिः विस्तृतैर्यानैः प्रकृष्टो गामो गमनं यस्य सः । – ऋ०, १/२७/२

✓प्रथ – प्रख्याने + कुः प्रत्ययः सम्प्रसारणञ्च (प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च – उ०को०, १/२८) – प्रथु (पृभु) + प्र + ✓गम्लृ – गतौ + घञ् प्रत्ययः।

## पृथुबुध्नः

पृथु विस्तीर्णं बुध्नमन्तरिक्षं निवासार्थं यस्य स पृथुबुध्नो मेघः । – यजु०, १/१४

प्रथु + ✓बन्ध – बन्धने + नक् प्रत्ययः, धातोः बुधादेशश्च (बन्धे ब्रधिबुधी च – उ०को०, ३/५)।

## पृदाकुः

पर्दते कुत्सितं शब्दं करोतीति पृदाकुः व्याघ्रः सर्पो वा । – उ०को०, ३/८०

✓पर्द – कुत्सितेशब्दे + काकुः प्रत्ययः, सम्प्रसारण-मलोपश्च (पर्देर्नित्संप्रसारणमलोपश्च – उ०को०, ३/८०)।

## पृश्निः

याः स्पृशन्ति ताः । – ऋ०, १/८४/११

स्पृशति संयुक्तो भवतीति पृश्निः अल्पशरीरो वा । – उ०को०, ४/५२

✓स्पृश् – संस्पर्शने + निः प्रत्ययः धातोः सलोपश्च (घृणिपृश्निपार्ष्णिचूर्णिभूर्णयः – उ०को०, ४/५३)।

## पृषतः

पर्षति सिञ्चतीति पृषतः बिन्दुर्मृगो वा ।

– उ०को०, ३/१११

✓पृषु – सेचने + अतच् प्रत्ययः (पृषिरञ्जिभ्यां कित् – उ०को०, ३/१११) ।

## पृषत्

पर्षन्ति सिञ्चन्ति धर्मवृक्षं याभिरद्भिः ।

– ऋ०, १/३५/२

पर्षन्तिः सिञ्चन्ति याभिस्ताः शीघ्रगतीः मरुतां धारणवेगादयोऽश्वाः ।

– ऋ०, १/३९/६

पर्षन्ति सिञ्चन्ति क्षुन्निवृत्यादिकार-कमन्नादि वस्तु यस्मिंस्तत्पृषत् आज्यं घृतं मधु दुग्धादिकञ्च।

– ऋ० भा० भू० (सृष्टिविद्याविषयः)

पर्षति सिञ्चति हिनस्ति वा तत् पृषत् मृगविशेषोविन्दुर्वा । – उ०को०, २/८४

√पृषु – सेचने + अति प्रत्ययः निपातनात् ( वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च – उ०को०, २/८४ ) ।

## पृष्टबन्धो

यः पृष्टान् जनानुत्तरेषु बध्नाति तत्सम्बुद्धौ।
– ऋ०, ३/२०/३

( सम्बोधनवाची ) – √पृच्छ – ज्ञीप्सायां + क्तः प्रत्ययः > पृष्टः + √बन्ध – बन्धने + उः प्रत्ययः ( शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१० ) ।

## पृष्ठं

पर्षति सिञ्चति यो येन वा तत् पृष्ठम्।
– उ०को०, २/१२

√पृषु – सेचने + थक् प्रत्ययः निपातनात्, थकारस्य ठकारत्वम् ( तिथपृष्ठगूथयूथप्रोथाः– उ०को०, २/१२ )।

## पृष्ठयज्वने

यः पृष्ठेन जयति तस्मै । – ऋ०, ५/५४/१

( च०ए०व० ) – पृष्ठ + √यज् – देवपूजासंगतिकरणदानेषु + ङ्वनिप् प्रत्ययः ( सुयजोर्ङ्वनिप् – अष्टा०, ३/२/१०३ ) ।

## पेचकः

पचतीति पेचकः उलूकपक्षी वा ।
– उ०को० ५/३७

√पच – पाके + वुन् प्रत्ययः धातोरुपधायाः एत्वं ( पचिमच्योरिच्योपधायाः – उ०को०, ५/३७ ) ।

## पेत्वं

पीयते यत् पेत्वं अमृतं वा।– उ०को०, ४/१०५

√पीङ् – पाने + इत्वन् प्रत्ययः धातोः ईकारस्य एकारः ( अन्येभ्योऽपि दृश्यते – उ०को०, ४/१०५ )।

## पेयूषं

पीयति पीयते वा तत् पीयूषं, पेयूषं नूतनं पयोऽमृतं वा। सप्तरात्रप्रसूतायाः क्षीरम् ।
– उ०को०, ४/७६

√पीङ् – पाने + ऊषन् प्रत्ययः बाहुलकात् पक्षे गुणः ( पीयेरूषन् – उ०को०, ४/७६ ) ।

## पेरुः

पीयते पिबतीति वा पेरुः आदित्यो वा ।
– उ०को०, ४/१०१

√पीङ् – पाने + रुः प्रत्ययः ( मीपीभ्यां रुः – उ०को०, ४/१०२ ) धातोः ईकारस्य ऐकारत्वम् ।

## पेषिः

पिनष्टि येन स पेषिः वज्रो वा ।
– उ०को०, ४/११९

√पिष्लृ – सञ्चूर्णने + इन् प्रत्ययः ( हृपिषिरुहिवृतिविदिदिद्दिकीर्त्तिभ्यश्च – उ०को०, ४/११९ ) धातोः इकारस्य एत्वम् ।

## पोतः

पुनातीति पोतः बालो वहित्रो वा ।
– उ०को०, ३/८६

√पूञ् – पवने + तन् प्रत्ययः ( हसिभृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६ )।

## पोता

व्यापकत्वेन सर्वं पुनातीति पोता विष्णुरीश्वरः । – उ०को०, २/९५

√पूञ् – पवने + तृच् प्रत्ययः निपातनात् ( नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ – उ०को०, २/९५ ) ।

## पोषः

पुष्यन्ति यस्मिँस्तस्मिन् । – ऋ०, ५/५/९

पुष्यन्ति प्राणिनो यस्मिन् व्यवहारे तस्मै ।
– यजु०, २/२३

पुष्यन्ति येन तेन । – यजु०, ४/२२

√पुष – पुष्टौ + घञ् प्रत्ययः ।

## पोषयित्नुः

पोषयतीति पोषयित्नुः पोषयिता ।
– उ०को०, ३/२९

√पुष – धारणेपुष्टौ च + इतुच् प्रत्ययः, णेरयादेशः (स्तनिहृषिपुषिगदिमदिभ्यो णेरितुच्–उ०को०, ३/२९)।

## प्रख्याः

आचष्टेऽसौ अख्याः प्रख्याः प्रजापतिर्वा।

– उ०को०, ४/२३३

प्र + √ख्या – प्रकथने + असिः प्रत्ययः ।

## प्रगाथाः

ये प्रकर्षेण गीयन्ते ते । – यजु०, १९/२४

प्र + √गै – शब्दे + थन् प्रत्ययः (उषिकुषिगार्त्तिभ्यस्थन् – उ०को०, २/५) ।

## प्रचेता

यः शयानान् प्रचेतयति सः ।

– ऋ०, २/१०/३

या प्रकृष्ट विज्ञाना, यया प्रकृष्टतया चेतन्ति संजानन्ति सा । – यजु०, ५/११

प्र + √चिती – सञ्ज्ञाने + असुन् प्रत्ययः ।

## प्रजननं

प्रजनयन्ति येन तत् । – यजु०, १९/४८

प्र + √जनी – प्रादुर्भावे + ल्युट् प्रत्ययः ।

## प्रजावतीः

भूयस्यः प्रजा वर्त्तन्ते यासु ताः ।

– यजु०, १/१

(प्र०ब०व०) – प्र + √जनी – प्रादुर्भावे + डः प्रत्ययः (उपसर्गे च संज्ञायां – अष्टा०, ३/२/९९), स्त्रियां टाप् प्रत्ययश्च > प्रजा + मतुप् प्रत्ययः ।

## प्रजासनिः

प्रजाः सनति येन तत् । – यजु०, १९/४८

प्रजा + √षण – सम्भक्तौ + इन् प्रत्ययः (छन्दसि वनसनरक्षिमथमुषाम् – अष्टा०, ३/२/२७) ।

## प्रणेतः

यः सत्याऽसत्ये प्रणयति । – ऋ०, ३/३०/१८

प्र + √णीञ् – प्रापणे + तृच् प्रत्ययः ।

## प्रतक्वा

यथा प्रतकति प्रकर्षेण हर्षतीति ।

– यजु०, ५/३२

प्र + √तक – हसने + वनिप् प्रत्ययः (अन्येभ्योऽपि दृश्यन्ते – अष्टा०, ३/२/१७८) ।

## प्रतरणः

यः प्रकृष्टतया दुःखानि तरति ।

– ऋ०, २/१/१२

प्रतरन्ति यया ताम् । – ऋ०, ५/४६/१

प्रतरति दुःखानि येन सः । – यजु०, ४/३६

प्र + √तॄ – प्लवनसंतरणयोः + ल्युट् प्रत्ययः बाहुलकात् (कृत्यल्युटो बहुलम् – अष्टा०, ३/३/११३) ।

## प्रतरः

प्रकृष्टतया तरति प्लावयति दूरीकरोति दुःखं येन तत् । – ऋ०, १/५३/११

प्रतरति शत्रुबलानि येन तत्सैन्यम् ।

– ऋ०, १/१४१/१३

यः प्रकृष्टतया दुःखानि तरति ।

– ऋ०, २/१/१२

प्रतरन्ति येन तत् । – ऋ०, ४/१२/६

प्रतरन्ति दुःखं येन तम् । – ऋ०, ५/३४/१

प्रतरति दुःखानि येन सः । – यजु०, ४/३७

प्र + √तॄ – प्लवनसंतरणयोः + अप् प्रत्ययः (ऋदोरप् – अष्टा०, ३/३/५७) ।

## प्रतिदधानेभ्यः

ये शत्रून् प्रति शस्त्राणि दधाति तेभ्यः ।

– यजु०, १६/२२

(च०ब०व०) – प्रति + √डुधाञ् – धारणपोषणयोः + शानच् प्रत्ययः, धातोः द्वित्वं अभ्यासस्य ह्रस्वत्वञ्च।

## प्रतिदिवा

प्रतिदीव्यन्ति यस्मिन् स प्रतिदिवा दिवसो

वा । – उ०को०, १/१५६

प्रति + ✓दिवु – क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु + कनिन् प्रत्ययः बाहुलकात् ( कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः – उ०को०, १/१५६ ) ।

## प्रतिपत्

पद्यते विचार्य्यते योऽर्थ विषयः स पत्, पतं प्रतीति प्रतिपत् । – यजु०, ७/३८

प्रतिपद्यते प्राप्यते या सा । – यजु०, १५/८

प्रति + ✓पद् – गतौ + क्विप् प्रत्ययः ।

## प्रतिमा

प्रतीयन्ते सर्वे पदार्था यया ताम् ।
– यजु०, १३/४१

प्रतिमीयन्ते परिमीयन्ते सर्वेः पदार्था यया सा । – यजु०, १५/६५

प्रतिमीयते यया क्रियया सा।– यजु०, २४/१८

प्रतिमीयते यया तत्परिमापक सदृशं तोलनसाधनं प्रकृतिराकृतिर्वा।– यजु०, ३२/३

प्रतिमीयतेऽनया सा प्रतिमा ।
– ऋ० भा० भू० ( *गणितविद्याविषयः* )

प्रति + ✓माङ् – माने शब्दे च + अङ् प्रत्ययः ( आतश्चोपसर्गे – अष्टा०, ३/३/१०६ ) ततः स्त्रियां टाप्।

## प्रतिमुञ्चमानाः

आभिमुख्यं ये प्रतीतं मुञ्चते त्यजन्ति ते।
– यजु०, २/३०

( प्र०ब०व० ) – प्रति + ✓मुच्लृ – मोचने + शानच् प्रत्ययः, धातोः नुमागमश्च ( शेमुचादीनाम् – अष्टा०, ७/१/५९ ) ।

## प्रतिरवेभ्यः

ये रवान् प्रतिरुवन्ति शब्दायन्ते तेभ्यः ।
– यजु०, ३८/१५

( च०ब०व० ) – प्रति + ✓रू – शब्दे + अच् प्रत्ययः।

## प्रतिश्रवाय

यः प्रतिश्रणोति प्रतिजानीते तस्मै ।
– यजु० १६/३४

( च०ए०व० ) – प्रति + ✓श्रु – श्रवणे + अच् प्रत्ययः।

## प्रतिष्ठा

प्रतितिष्ठन्ति सत्कारं प्राप्नुवन्ति यस्यां तस्यै।
– यजु०, २/२५

प्रतितिष्ठन्ति यस्यां सा । – यजु०, १४/२३

प्रति + ✓ष्ठा – गतिनिवृत्तौ + अङ् प्रत्ययः ( आतश्चोपसर्गे – अष्टा०, ३/३/१०६ ) ततः स्त्रियां टाप् प्रत्ययः ।

## प्रतिसर्य्याय

ये प्रतीते धर्मे सरन्ति तेषु भवाय ।
– यजु०, १६/३३

प्रति + ✓सृ – गतौ + अच् प्रत्ययः ततः भवार्थे यत् प्रत्ययः ।

## प्रतीकं

प्रत्येति येन तत् सैन्यम् । – ऋ०, ७/८/१

येन प्रत्येति तल्लिङ्गम् । – यजु०, २९/३८

प्रति + ✓इण् – गतौ + कक् प्रत्ययः बाहुलकात् ( सृवृभूशुषिमुषिभ्यः कक् – उ०को०, ३/४१ ) ।

## प्रतीची

यत् प्रत्यगञ्चति तस्य । – ऋ०, १/१७३/५

या प्रत्यगञ्चति । – ऋ०, ७/३९/१

या प्रत्यक् अञ्चति पूर्वमुखस्थितपुरुषस्य पृष्ठभागा तस्मै । – यजु०, २२/२४

प्रति + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः निपातनात् ( ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९ ) धातोः न लोपः ( अनिदितां

हल उपधायाः क्ङिति – अष्टा०, ६/४/२४) धातोः अकारस्य ईत्वं (उद् ईत् – अष्टा०, ६/४/१३९) ततः ङीप् प्रत्ययः स्त्रियाम्।

## प्रत्यङ्

**यः प्रत्यञ्चति सः। – ऋ०, १/५०/५**

**यः प्रत्यञ्चति तम्। – ऋ०, ७/१२/१**

**प्रत्यगञ्चतीति शरीरस्थं वायुम्।**

**– यजु०, ११/२४**

**यः प्रत्यङ्मञ्चति प्राप्नोति सः।**

**– यजु०, १९/३**

**प्रतिपदार्थमञ्चति प्राप्नोति। – यजु०, ३२/४**

प्रति + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः निपातनात्, (ऋत्विग्दधृग्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९), धातोः न लोपः (अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४), धातोः नुमागमः, कुत्वञ्च।

## प्रथमः

**सर्वस्य प्रथयिता। – ऋ०, १/१०१/५**

**प्रथते प्रख्यातो भवतीति प्रथमः आद्य उत्तमो नूतनो वा। – उ०को०, ५/६८**

✓प्रथ – प्रख्याने + अमच् प्रत्ययः (प्रथेरमच् – उ०को०, ५/६८)।

## प्रथमजं

**प्रथमे वयसि ब्रह्मचर्याश्रमे वा जातम्।**

**– यजु०, ३४/५९**

**यश्च प्रथमानि सूक्ष्मभूतानि। जनयति तं परमानन्दस्वरूपं मोक्षाख्यं परमेश्वरम्।**

**– ऋ०भा०भू० वृ० वि० विषय**

(द्वि०ए०व०) – प्रथम + ✓जनी – प्रादुर्भावे + डः प्रत्ययः (अन्येष्वपि दृश्यते – अष्टा०, ३/२/१०१)।

## प्रथमजा

**यः प्रथमं जायते तम्। – ऋ०, १/३२/३**

**यः प्रथमं जातः। – ऋ०, ६/७३/१**

प्रथम + ✓जनी – प्रादुर्भावे + विट् प्रत्ययः (जनसनखन्क्रमगमो विट् – अष्टा०, ३/२/६७), धातोः नकारस्यादेशः (विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१)।

## प्रथितिः

**प्रथ्यते या सा प्रथितिः प्रख्यातिर्वा।**

**– उ०को०, ४/१८३**

✓प्रथ – प्रख्याने + तिः प्रत्ययः (पदिप्रथिभ्यां नित् – उ०को०, ४/१८३) इडागमश्च (तितुत्रेष्वग्रहादीनामिति वक्तव्यम् – अष्टा०वा०, ७/२/९)।

## प्रदक्षिणित्

**यः प्रदक्षिणमेति गच्छति सः।**

**– ऋ०, १/१९/२**

**यः प्रदक्षिणामेति सः। – ऋ०, २/४३/१**

**यः प्रदक्षिणमेति सः। – ऋ०, ३/३२/१५**

**या प्रदक्षिणमेति सा। – ऋ०, ४/६/३**

**दक्षिणेन पार्श्वेणैति गच्छतीति।**

**– ऋ०, ५/३६/४**

**यः प्रदक्षिणां नयति सः। – ऋ०, ५/६०/१**

प्र + दक्षिण + ✓इण् – गतौ + क्विप् प्रत्ययः तुगागमश्च।

## प्रदिशः

**प्रदिश्यन्ते जनैस्ताम्। – ऋ०, १/९५/३**

**याः प्रदिश्यन्ते ताः। – ऋ०, ३/३०/१२**

**प्रदिश्यन्ते ताः। – यजु०, १८/३२**

**प्रदिशन्ति यया तस्याम्। – यजु०, २९/३६**

(प्र०ब०व०) – प्र + ✓दिश – अतिसर्जने + क्विन् प्रत्ययः निपातनात् (ऋत्विग्दधृग्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९)।

## प्रमा

यया प्रमीयते सा प्रज्ञा। – यजु०, १४/१८

प्र + ✓माङ् – माने शब्दे च + अङ् प्रत्ययः (आतश्चोपसर्गे अष्टा०, ३/३/१०६)।

## प्रमृणः

ये प्रकृष्टतया मृणन्ति हिंसन्ति तान्। – यजु०, १७/३६

(द्वि०ब०व०) प्र + ✓मृण – हिंसायां + क्विप् प्रत्ययः।

## प्रयः

प्रीयते काम्यते तत् सुखम्। – ऋ०, १/३१/७

प्रीणयन्ति तृप्यन्ति येन तदन्नम्। – ऋ०, १/४५/८

येन प्रीणन्ति तृप्यन्ति कामयन्ते वा शिष्टान् विदुषः शुभान् गुणान् तेन सह। – ऋ०, १/७१/३

प्रीणाति यः सः। – ऋ०, १/११९/१

✓प्रीञ् – तर्पणे कान्तौ च + असुन् प्रत्ययः।

## प्रयज्युः

यः प्रयजति तत्सम्बुद्धौ। – ऋ०, ३/६/२

प्रयजन्ति येन तस्मै। – ऋ०, ५/८७/१

यः प्रकर्षेण यजति तत्। – ऋ०, ६/४९/४

प्र + ✓यज – देवपूजासङ्गतिकरणदानेषु + युच् प्रत्ययः (यजिमनिशुन्धिदसिजनिभ्यो युच् – उ०को०, ३/२०)।

## प्रयति

प्रैति प्रकृष्टं ज्ञानं ददातीति प्रयत् तस्मिन्। – ऋ०, १/१५/३

प्रयतते येन सः। – यजु०, १८/१

प्रयतन्ते यया सा। – यजु०, २०/१३

प्र ✓यती – प्रयत्ने + इः प्रत्ययः (खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च – उ०को०, ४/१४०)।

## प्रयाः

ये सद्यः प्रयान्ति ते। – ऋ०, ३/२९/१५

प्र + ✓या - प्रापणे + क्विप् प्रत्ययः।

## प्रयाजेभिः

प्रयजन्ति यैस्तै। – यजु०, १९/१९

(तृ०ब०व०) – प्र + ✓यज – देवपूजासङ्गतिकरणदानेषु + घञ् प्रत्ययः।

## प्रयाणं

प्रकृष्टेन याति गच्छति येन तत्। – ऋ०, ५/८१/३

प्रयान्ति सर्वाणि सुखानि येन तत्प्रकृष्टं प्राणम्। – यजु०, १२/६

प्र + ✓या – प्रापणे + ल्युट् प्रत्ययः।

## प्रयुजं

या धर्मक्रिया प्रकृष्टैर्गुणैर्युनक्ति योजनयति वा तस्यै। – यजु०, ४/७

यः सर्वान् युनक्ति तम्। – यजु०, ११/६६

ये प्रयुज्यन्ते तेभ्यः। – यजु०, ३०/८

ये प्रयुञ्जन्ति तेभ्यः। – यजु०, ३८/८

प्र + ✓युजिर् – योगे + क्विप् प्रत्ययः (सत्सूद्विषद्रुहदुहयुजविदभिदच्छिजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१)।

## प्रवक्षणाः

वहन्ति जलानि यास्ता नद्यः। – ऋ०, १/३२/१

(प्र०ब०व०) – प्र – √वह – प्रापणे + युच् प्रत्ययः, ततः स्त्रियां टाप् ।

## प्रवणे

**प्रवन्ते गच्छन्ति वीरा यस्मिन् ।**

– ऋ०, १/११९/३

(स०ए०व०) – √प्रुङ् – गतौ + ल्युट् प्रत्ययः ।

## प्रवद्भिः

**ये नीचमार्गैः प्रवन्ते प्लवन्ते तैः ।**

– ऋ०, १/३३/६

१-(तृ०ब०व०) –√प्रुङ् – गतौ + अदिः प्रत्ययः, २- प्र + √अव – रक्षणगत्यादिषु + शतृ प्रत्ययः धातोः अकारस्य लोपश्च ।

## प्रविद्वान्

**प्रकर्षेण वेत्तीति प्रविद्वान् ।**

– ऋ०, १/१४८/५

प्र + √विद् – ज्ञाने + शतृ प्रत्ययः, शतृ स्थाने वसुरादेशः (विदेः शतुर्वसुः – अष्टा०, ७/१/३६) नुमागमः (उगिदचां सर्वनामस्थानेऽधातो अष्टा०-७/२/७०) उपधायाः दीर्घश्च (सान्तमहतः संयोगस्य -अष्टा० ६/४/२०) संयोगान्तलोपश्चेति।

## प्रशत्वा

**प्रशीयतेऽसौ प्रशत्वा समुद्रो वा ।**

– उ०को०, ४/११७

**प्रशत्वरी नदी । – उ०को०, ४/११७**

प्र + √शदॢ – शातने + क्वनिप् प्रत्ययः (प्र ईरशदोस्तुट् च – उ०को०, ४/११७) ।

## प्रश्नविवाकं

**यः प्रश्नान् विवेचयति तम् ।**

– यजु०, ३०/१०

√प्रच्छ – ज्ञीप्सायां + नङ् प्रत्ययः (यजयाचयतविच्छप्रच्छरक्षो नङ् – अष्टा०, ३/३/९०) > प्रश्न + वि + √वच – परिभाषणे + घञ् प्रत्ययः चकारस्य ककारः ।

## प्रषितप्सुं

**यः प्रषितान् स्निग्धान् पदार्थान् प्सातिभक्षयति तम् । – ऋ०, ४/३८/२**

(द्वि०ए०व०)√प्रुषु – दाहेस्नेहनसेवनपूरणेषु वा + क्तः प्रत्ययः > प्रषितः + √प्सा – भक्षणे + कुः प्रत्ययः ।

## प्रष्टबन्धुः

**यः प्रष्टान् जनानुत्तरेषु बहनाति तत्सम्बुद्धौ।**

– ऋ०, ३/२०/३

√प्रच्छ – ज्ञीप्सायां + क्तः प्रत्ययः > पृष्ट + √बन्ध – बन्धने + उः प्रत्ययः (शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च–उ०को०, १/१०)।

## प्रष्टिः

**पृच्छन्ति ज्ञीप्सन्त्यनेन सः । – ऋ०, १/३९/६**

√प्रच्छ – ज्ञीप्सायां + तिः प्रत्ययः बाहुलकात् ।

## प्रसवः

**सवितृप्रसूतेऽस्मिन् जगति । – यजु०, १/१०**

**प्रसूयते विश्वस्मिन् यस्तस्मिन् ।**

– यजु०, ६/९

**यः प्रसूते सः । – यजु०, ९/२५**

**प्रसूतेऽस्मिन् जगति । – यजु०, १०/६**

**प्रसूयन्ते प्राणिनो यस्मिन् संसारे तस्मिन्।**

– यजु०, २२/१

प्र + √षू – प्रेरणे, √षूङ् – प्राणिगर्भविमोचने वा + अप् प्रत्ययः ।

## प्रसितिं

**प्रकृष्टं सिनोति बध्नात्यनया ताम् ।**

– यजु०, १/२०

प्र + √षिञ् – बन्धने + क्विन् प्रत्ययः स्त्रियाम् ।

## प्रसूः

येभ्यो ये वा प्रसूयन्ते तेषु । – ऋ०, १/६७/५

याः प्रसूयन्ते ताः । – ऋ०, ३/५/८

याः प्रसूयन्ते ता ओषधयः ।

– ऋ०, ७/३५/७

प्र + √षूङ् – प्राणिप्रसवे + क्विप् प्रत्ययः ।

## प्रस्तरेष्ठा

शुभे न्यायविद्याऽसने तिष्ठन्ति ते ।

– यजु०, २/१८

प्र + √स्तृञ् – आच्छादने + अप् प्रत्ययः ( ऋदोरप: – अष्टा०, ३/३/५७ ) > प्रस्तरे( स०ए०व० ) + √ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ।

## प्रस्थायी

प्रस्थातुमिच्छतीति प्रस्थायी गन्तुमनाः ।

– उ०को०, ४/९

प्र + √स्था( ष्ठा ) – गतिनिवृत्तौ + इनिः प्रत्ययः, णित्वाद्युक् ( प्रस्थः – उ०को०, ४/९ ) ।

## प्रहाणिः

हीयते जहाति वा स हानिः अपचयो वा प्रहाणिः, परिहाणिः । – उ०को०, ४/५१

प्र – √ओहाक् – त्यागे + निः प्रत्ययः णत्वञ्च ( कृत्यचः – अष्टा०, ८/४/२८ ) ।

## प्रहिः

प्रहरति जलमस्मात् स प्रहिः कूपो वा ।

– उ०को०, ४/१३५

प्र + √हि – गतौ वृद्धौ च + इञ् प्रत्ययः ( प्रे हरतेः कूपे – उ०को०, ४/१३५ ) ।

## प्रहेलिः

हेलति विरुद्धं बहु भाषत इति हेलिः प्रहेलिः । – उ०को०, ४/११८

प्र + √हिल – विरुद्धभाषणे + इन् प्रत्ययः ( सर्वधातुभ्यो इन् – उ०को०, ४/११८ ), धातोः इकारस्य एत्वञ्च ।

## प्रह्वः

प्रजहाति त्यजति स प्रह्वः नम्रो वा ।

– उ०को०, १/१५३

प्र + √हा – त्यागे + वन् प्रत्ययः धातोः अकारलोपः निपातनात् ( सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे – उ०को०, १/१५३ ) ।

## प्राकषिकः

प्राकषति हिनस्तीति प्राकषिकः पारदारिको वा । – उ०को०, २/४१

प्रा ( प्राङ् ) + √कष – हिंसार्थे + किकन् प्रत्ययः ( प्रङि पणिकशः – उ०को०, २/४१ ) ।

## प्राङ्

यः प्रकृष्टमञ्चति प्राप्नोति तम् ।

– ऋ०, १/१८/८

प्रकृष्टमञ्चतीति । – ऋ०, १/१६४/३८

यः प्रागञ्चति प्राप्नोति सः तम् ।

– ऋ०, २/१३/१

यः प्रकृष्टमञ्चति सः । – यजु०, ११/३

प्र + √अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः ( ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९ ) ।

## प्राची

या प्रागञ्चति सा पूर्वा दिक् ।

– ऋ०, ३/६/१

या प्रागञ्चति । – ऋ०, ७/६/४

प्रकृष्टमञ्चति याभ्यां ते रोदसी ।

– यजु०, ५/१७

प्र + √अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९) धातोः न लोपः अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४) ततः ङीप् प्रत्ययः स्त्रियाम् ।

## प्राज्ञः

यः प्रकष्टतया चराचरस्य जगतो व्यवहारं जानाति स प्रज्ञः, प्रज्ञ एव प्राज्ञः ।

– सं० प्र० (प्रथमसमुल्लासः)

प्र + √ज्ञा – अवबोधने + कः प्रत्ययः > प्रज्ञ + अण् प्रत्ययः स्वार्थे ।

## प्राट्

पृच्छतीति प्राट् । – उ०को०, २/५७

√प्रच्छ – ज्ञीप्सायां + क्विप् प्रत्ययः, धातोः दीर्घश्चासम्प्रसारणं (क्विप् वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणञ्च – उ०को०, २/५७) ।

## प्राणः

प्राणिति जीवयतीति प्राणो हृदयस्थो वायुस्तस्मै । – यजु०, ७/२७

प्राणिति सुखं येन तस्मै । – यजु०, १३/२४

येन प्राणिति सः । – यजु०, १३/५४

प्र + √अन – प्राणने + घञ् प्रत्ययः (हलश्च – अष्टा०, ३/३/१२१) ।

## प्राणथः

प्राणितीति प्राणथः बलवान् वा ।

– उ०को०, ३/११३

प्र + √अन – प्राणने + अथः प्रत्ययः (शीङ्शपिरुगमिवञ्जिविप्राणिभ्योऽथः – उ०को०, ३/११३) ।

## प्राणदाः

याः प्राणं जीवनं बलं च ददति ताः ।

– यजु०, १७/१५

प्राण + √डुदाञ् – दाने + कः प्रत्ययः, स्त्रियां टाप् प्रत्ययश्च ।

## प्राणन्तः

प्राणिति श्वासप्रश्वासान् प्रवर्त्तयति स प्राणन्तः वायुर्वा । – उ०को०, ३/१२७

प्र + √अन – प्राणने + झच् प्रत्ययः (रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि – उ०को०, ३/१२७) प्रत्ययस्य अन्तादेशः (झोऽन्तः – अष्टा०, ७/१/३)।

## प्राणपाः

यः प्राणं पाति रक्षति । – यजु०, २०/३४

प्राण + √पा – रक्षणे + क्विप् प्रत्ययः ।

## प्रातः

प्रकृष्टमतति गच्छतीति प्रातः प्रभातकालो वा । – उ०को०, ५/५९

प्र + √अत – सातत्यगमने + अरन् प्रत्ययः (प्राततेररन् – उ०को०, ५/५९) ।

## प्रातर्यावन्

ये प्रातः प्रतिदिनं पुरुषार्थं यान्ति ते ।

– ऋ०, १/४४/१३

ये प्रातः प्रतिदिनं यान्ति पुरुषार्थं गच्छन्ति तान् । – ऋ०, १/४६/९

ये प्रातर्यान्ति राजकार्याणि प्रापयन्ति ।

– यजु०, ३३/१५

प्रातः + √या – प्रापणे + वनिप् प्रत्ययः (आतो मनिन्क्वनिब्वनिपश्च – अष्टा०, ३/२/७४) ।

## प्रापणिकः

प्रकर्षेण समन्तात्पणायत्यसौ प्रापणिकः पण्यविक्रयी वा । – उ०को०, २/४१

प्रा < प्राङ् + √पण – व्यवहारेस्तुतौ च + किकन् प्रत्ययः (प्राङिपणिकशः – उ०को०, २/४१) ।

## प्रावृट्

**प्रवर्षन्ति मेघा यस्यां सा प्रावृट् ऋतुः ।**

– उ०को०, २/५७

प्रा < प्राङ + ✓वृषु – सेचने + क्विप् प्रत्ययः बाहुलकात् ( क्विप् वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणञ्च – उ०को०, २/५७ ) ।

## प्राशुः

**यः प्राश्नुते प्रकृष्टतया व्याप्नोति सः ।**

– ऋ०, १/४०/१

**यः प्राश्नाति सः ।** – यजु०, ३४/५६

प्र + ✓अशूङ् – व्याप्तौ अथवा ✓अश – भोजने + उण प्रत्ययः ( कृवापाजिमिस्वदिसाध्यशूभ्य उण् – –उ०को०, १/१ ) ।

## प्राशुषाट्

**यः प्राशून् वेगवतश्शत्रून् सहते ।**

– ऋ०, ४/२५/६

प्राशु + ✓षह – मर्षणे + ण्विः प्रत्ययः ( छन्दसि सह – अष्टा०, ३/२/६३ ) ।

## प्रासहाः

**याः प्रकर्षेण शत्रुबलानि सहन्ते ताः सेनाः।**

– ऋ०, ५/२३/१

प्र + ✓षह – मर्षणे + ण्विः प्रत्ययः ( छन्दसि सहः – अष्टा०, ३/२/६३ ) स्त्रियां टाप् प्रत्ययश्च ।

## प्रियं

**प्रीणाति सर्वान् प्राणिनस्तम् ।**

– ऋ०, १/१८/६

**प्रीणाति यत् तत् ।** – ऋ०, १/७५/२

**यः प्रीणाति तम् ।** – ऋ०, १/१५१/१

**येन प्रीणाति तत् ।** – ऋ०, १/१५४/५

**योऽन्यान् प्रीणाति सः ।** – ऋ०, ४/२५/५

**प्रीणाति सुखयति यत्तत् ।** – यजु०, २/६

**प्रीयते सुखयत्यारोग्येण यत्तत् ।**

– यजु०, २/७

**यः प्रीणाति तम् ।** – यजु०, ४/२५

**यः प्रीणाति कामयत आनन्दयति वा ।**

– यजु०, २५/४३

**यः प्रीणाति प्रीयते वा स प्रियः।**

– स० प्र० ( *प्रथमसमुल्लासः* )

✓प्रीञ् – तर्पणे कान्तौ च + कः प्रत्ययः ( इगुपधज्ञाप्रीकिरः कः - अष्टा०, ३/१/१३५ ) ।

## प्रुष्वः

**यः प्रुष्णाति स्निह्यति सिञ्चति पूरयति वा सा प्रुष्वः सूर्यो वा ।**– उ०को०, १/१५१

✓प्रुष – स्नेहसेवनपूरणेषु + क्वन् प्रत्ययः ( अशुप्रुषिलटिकणिखटिविशिभ्यः क्वन् – उ०को०, १/१५१ ) ।

## प्रेतिं

**प्रयन्ति म्रियन्ते येन तं मृत्युम् ।**

– ऋ०, १/३३/४

प्र + ✓इण् – गतौ + क्तिन् प्रत्ययः स्त्रियाम् ।

## प्रेत्वा

**प्रेर्तेऽसौ प्रेत्वा सागरो वा प्रेत्वरी ।**

– उ०को०, ४/११७

प्र + ✓ईर – गतौकम्पने च + क्वनिप् प्रत्ययः, तुडागमश्च ( प्र ईरशदोस्तुट् च – उ०को०, ४/११७ )।

## प्रोक्षणीः

**प्रकृष्टतया सिञ्चन्ति याभिः क्रियाभिः पात्रैर्वा ताः ।** – यजु०, १/२८

प्र + ✓उक्ष – सेचने + ल्युट् प्रत्ययः, ततः स्त्रियां ङीप् प्रत्ययः ।

## प्रोथः

**यः प्रवते गच्छति येन वा स प्रोथः**

तुरङ्गनासिका । – उ०को०, २/१२

✓प्रुङ् – गतौ + थक् प्रत्ययः निपातनात् धातोः गुणश्च (तिथपृष्ठगूथयूथप्रोथाः – उ०को०, २/१२)।

## प्रोष्ठेशयाः

याः प्रोष्ठे अतिशयेन प्रौढे गृहे शेरते ताः। – ऋ०, ७/५५/८

(प्र०ब०व०) – प्रोष्ठे (स०ए०व०) > प्रोष्ठ इति गृह नाम) + ✓शीङ् – शये + अच् प्रत्ययः (अधिकरणे शेते – अष्टा०, ३/२/१५) ।

## प्लक्षः

प्लोषति दहतीति प्लक्षः पिप्पलं पर्कटी वा । – उ०को०, ३/६३

✓प्लुषु – दाहे + सः प्रत्ययः धातोः उपधायाः अत्वं (प्लेषेरच्चोपधायाः – उ०को०, ३/६३) ।

## प्लवं

प्लवन्ते पारावारौ गच्छन्ति येन तं नौकादिकम्। – ऋ०, १/१८२/५

✓प्लुङ् – गतौ + अच् प्रत्ययः ।

## प्लाशिः

यः प्रकृष्टतयाऽश्नुते सः । – यजु०, १९/८७

प्र + ✓अश – भोजने + इञ् प्रत्ययः बाहुलकात्, छन्दसि रस्य स्थाने लकारः ।

## प्लीहा

प्लिह्यते प्राप्यतेऽन्तरिति प्लीहा कुक्षिव्याधिर्वा । – उ०को०, १/१५९

✓प्लिह – गतौ + कनिन् प्रत्ययः निपातनात् (श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्वन्मातरिश्वन्मघवन्निति – उ०को०, १/१५९), धातोः उपधायाः दीर्घत्वमिति ।

## प्लुक्षिः

प्लोषति दहतीति प्लुक्षिः अग्निर्वा ।

– उ०को०, ३/११५

✓प्लुषु – दाहे + क्सिः प्रत्ययः (प्लषिकुषिशुषिभ्यः क्सिः – उ०को०, ३/१५५) ।

## प्सरः

यं प्सान्ति भुज्जते स भोगः ।

– ऋ०, १/४१/७

✓प्सा – भक्षणे + अरन् प्रत्ययः बाहुलकात् ।

## फण्डः

फणति गच्छत्यत्रेति फण्डः पल्था फण्डमुदरं वा । – उ०को०, १/११४

✓फण – गतौ + डः प्रत्ययः (ञमन्ताड् डः – उ०को०, १/११४) ।

## फलिगं

फलीनां गमयितारं मेघम् । – ऋ०, १/६२/४

✓फल – निष्पत्तौ विशरणे च + अच् प्रत्ययः> फलः + ✓गम्लृ – गतौ + डः (अन्येष्वपि दृश्यते – अष्टा०, ३/२/१०१) धातोः इकारागमश्च ।

## फलिनः

फलति विशीर्णो भवतीति फलिनः फलवान् वृक्षो वा । – उ०को०, २/४९

✓फल – विशरणे निष्पत्तौ च + इनच् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/४९) ।

## फल्गुः

या फलानि गच्छति प्राप्नोति सा ।

– यजु०, २४/४

फलति निष्पद्यते स फल्गुः असारो वा ।

– उ०को०, १/१८

✓फल – विशरणे निष्पत्तौ च + उ प्रत्ययः,

गुगागमश्चेति (फलिपटिलमिमनिजनां गुक्पटिनाकिधतश्च – उ०को०, १/१८)।

## फल्गुनः

फलति निष्पन्नो भवतीति फल्गुनः शुक्लो वा। – उ०को०, ३/५६

✓फल – निष्पत्तौ + उनन् प्रत्ययः गुगागमश्च (फलेर्गुक् च – उ०को०, ३/५६)।

## फालाः

फलन्ति विस्तीर्णां भूमिं कुर्वन्ति यैस्ते।

– यजु०, १२/६९

(प्र०ब०व०) – ✓फल – निष्पत्तौ + घञ् प्रत्ययः (हलश्च – अष्टा० ३/३/१२१)।

## फेनः

स्फायते वर्द्धते स फेनः हिण्डीरः समुद्रफेन इति प्रसिद्धः जलविकारो वा।

– उ०को०, ३/३

✓स्फायी – वृद्धौ + नक् प्रत्ययः स्फायी धातोः 'फे' आदेशः (फेनमीनौ – उ०को०, ३/३)।

## बधित्रं

बध्नातीति बधित्रं कामो वा।– उ०को०, ४/१७३

✓बन्ध – बन्धने + इत्रः प्रत्ययः (अशित्रादिभ्य इत्रोत्रौ – उ०को०, ४/१७३)।

## बधिरः

बध्यते शब्दश्रवणान्निरुध्यते बधिरः श्रोत्रविकलः। – उ०को०, १/५१

✓बन्ध – बन्धने + किरच् प्रत्ययः, प्रत्ययस्य कित्वात् धातोः न लोपः (अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४)।

## बध्रिः

बध्यते स बध्रिः। निर्वीर्यो नपुंसकमिव।

– ऋ०, १/३२/७

ये बध्यन्ते निर्वीर्या नपुंसका वीर्य्यहीनास्ते।

– ऋ०, १/३३/६

✓बन्ध – बन्धने + क्रिन् प्रत्ययः बाहुलकात् (अदिशदिभूशुभिभ्यः क्रिन् – उ०को०, २/६५), धातोः न लोपः।

## बन्धं

बध्नाति येन तम्। – यजु०, १२/६३

✓बन्ध – बन्धने + घञ् प्रत्ययः।

## बन्धु

यः स्वस्मिन् चराचरं जगद्बध्नाति बन्धुवद्धर्मात्मनां सुखाय सहायो वा वर्त्तते स बन्धुः। – स० प्र० (*प्रथमसमुल्लासः*)

प्रेम्णा बध्नातीति बन्धुः सज्जनो वा।

– उ०को०, १/१०

✓बन्ध – बन्धने + उ प्रत्ययः (शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१०)।

## बन्धुरः

बन्धनविशेषाः। – ऋ०, १/३४/९

बध्नाति मार्दवेन स बन्धुरः नम्र सुन्दरो वा खर्जूरादित्वादूरप्रत्यये बन्धूरोऽपि उक्तार्थ एव। – उ०को०, १/४१

✓बन्ध – बन्धने + उरच् प्रत्ययः (मद्गुरादयश्च – उ०को०, १/४१)।

## बन्ध्या

बध्यतेऽसौ बन्ध्या अप्रसूता वा।

– उ०को०, ४/११२

✓बन्ध – बन्धने + यक् प्रत्ययः (अघ्न्यादयश्च – उ०को०, ४/११२) स्त्रियां टाप् प्रत्ययश्च।

## बभ्रूः

बिभर्ति सर्वमिति बभ्रुः नकुलः पिङ्गलो वा। – उ०को०, १/२२

✓भृञ् – भरणे + कु: प्रत्यय:, धातो: द्वित्वञ्च, अभ्यासस्य बकार: ( कुर्भ्रश्च – उ०को०, १/२२ )।

## बर्हि:

बृंहन्ति वर्धन्ते सर्वे पदार्था यस्मिन्नन्तरिक्षे तस्मिन्। – ऋ०, १/१६/६

बृंहन्ते वर्धन्ते येन तद् बर्हिर्ज्ञानं प्राप्तं कर्मकाण्डं वा तस्मिन् । – यजु०, २/१८

बृंहन्ते सर्वे पदार्था यस्मिन् तदन्तरिक्षम् ।

– यजु०, २/२२

बृहति वर्द्धते तद्बर्हि: दर्भो वा ।

– उ०को०, २/१०९

✓बृंह – वृद्धौ + इसि: प्रत्यय: धातो: नकारस्य लोपश्च ( बृंहेर्नलोपश्च – उ०को०, २/१०९ ) ।

## बर्हिण:

बर्हते प्रधानो भवतीति बर्हिण: मयूरो वा। – उ०को०, २/४९

✓बृंह – वृद्धौ + इनच् प्रत्यय: बाहुलकात् ( बहुलमन्यत्रापि – उ०को०, २/४९ ) ।

## बर्हिषद्

बृहत्सु पदार्थेषु सीदन्तम् । – ऋ०, २/३/३

ये बर्हिष्यन्तरिक्षे सीदन्ति । – ऋ०, ७/२/६

यो बर्हिरन्तरिक्षे सीदति तम् ।

– यजु०, ७/१२

यो बर्हिष्याकाशे सीदति तम् ।

– यजु०, १९/३२

ये ब्रर्हिषि उत्तमायां सभायां सीदन्ति ।

– यजु०, १९/५५

उत्तम आसने सीदन्ति ते । – यजु०, १९/५६

ये बर्हिषि सभायां सीदन्ति ते ।

– यजु०, २४/१८

ये बर्हिषि उत्तमे व्यवहारे सीदन्ति ते बर्हिषद: । – स०प्र० ( चतुर्थ समुल्लास )

बर्हि + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्यय: ।

## बर्हिष्ठां

बर्हिषि यज्ञे तिष्ठतीति । – ऋ०, ३/१३/१

यो बर्हिष्यन्तरिक्षे तिष्ठति तम् ।

– ऋ०, ३/४२/२

बर्हि + ✓ष्ठा – गतिनिवृत्तौ + क्विप् प्रत्यय: ।

## बलगहनं

यथा यो बलानि गाहते तथा भूतोऽहम् ।

– यजु०, ५/२५

यथा यो बलानि शत्रुसैन्यानि गाहते तथाऽहम् । – यजु०, ५/२५

यथा यो बलानि गाहते तम् ।

– यजु०, ५/२१

✓भृञ् – धारणपोषणयो: + अच् प्रत्यय:, भकारस्य बकार:, रेफस्य लकारश्च बाहुलकात् > बल + ✓गाहू – विलोडने + क्यु: प्रत्यय: ( बाहुलकात् कृपृवृजिमन्दिनिधाञ: क्यु: – उ०को०, २/८१ ) धातोर्ह्रस्वश्चेति।

## बलदा:

यो बलं ददाति स: । – यजु०, २५/१३

बल + ✓डुदाञ् – दाने + क्विप् प्रत्यय: ।

## बलि:

वर्णयति स बलि: राजकर: सत्कारसामग्री शरीराङ्गं वा । – उ०को०, ४/१२४

✓वर्ण – क्रियाविस्तरगुणवचनेषु + इन् प्रत्यय:, धातो: स्थाने बलि आदेशश्च ( वर्णेर्बलिश्चाहिरण्ये – उ०को०, ४/१२४ ) ।

**बलिहृतः**

या बलिं हरन्ति ताः । – ऋ०, ७/६/५

बलि + √हृञ् – हरणे + क्तः प्रत्ययः ।

**बल्लभः**

बल्लते संवृणोतीति बल्लभः प्रियो वा ।

– उ०को०, ३/१२५

√बल – संवरणे सञ्चरणे च + अभच् प्रत्ययः (रासिबल्लिभ्यां च – उ०को०, ३/१२५) ।

**बल्हिः**

बल्हते प्रधानो भवतीति बल्हिः बल्हिका नाम क्षत्रिया जनपदो वा ।

– उ०को०, ४/११८

√बल्ह – प्राधान्ये + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

**बहिर्द्धा**

या बहिर्बाह्ये देशे धरति शब्दान् सा ।

– यजु०, ५/११

बाहिः + √डुधाञ् – धारणपोषणयोः + क्विप् प्रत्ययः।

**बहुः**

बहते वर्धतेऽन्येभ्य इति बहुः प्रचुरः संख्या वा । – उ०को०, १/२९

√बंहि – वृद्धौ + कुः प्रत्ययः धातोः न लोपश्च (लङ्घिबंह्योर्नलोपश्च – उ०को०, १/२९) ।

**बहुलः**

बहूनि सुखानि युद्धकर्माणि लान्ति प्रयच्छन्ति ते – ऋ०, १/५४/९

ये बहूनि वस्तूनि लान्ति गृह्णन्ति ।

– ऋ०, १/१८५/७

या बहून् पदार्थान् लाति सा ।

– ऋ०, १/१८९/२

बहूनि सुखानि लाति । – ऋ०, २/१/१२

याभ्यां बहुँल्लाति तौ । – ऋ०, ६/१९/३

बहूनर्थान् लान्ति याभ्यां ते।– यजु०, ११/३०

बहूनि सुखानि ददाति या ताम् ।

– यजु०, १९/४२

√बृंहि – वृद्धौ + उः प्रत्ययः (लङ्घिबंह्योर्नलोपश्च – उ०को०, १/२९) > बहु + √ला – आदाने + कः प्रत्ययः ।

**बाणाः**

ये बणन्ति शब्दायन्ते ते शस्त्रास्त्रसमूहाः।

– यजु०, १७/४८

(प्र०ब०व०) – √बण – शब्दे + घञ् प्रत्ययः ।

**बाहुः**

बाधते याभ्यां बलवीर्य्याभ्यां तौ ।

– यजु०, १०/२५

बाध्यन्ते विलोड्यन्ते पदार्था याभ्यां तौ बाहुः भुजौ । – उ०को०, १/२७

√बाधृ – विलोडने + कुः प्रत्ययः धकारस्य हकारश्च (अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुक्धुक्दी-र्घहकाराश्च – उ०को०, १/२७) ।

**बाहुवृक्तः**

यो बाहुभ्यां दुष्टान् वृङ्क्ते छिनक्ति सः।

– ऋ०, ५/४४/१२

बाहु + √वृजी – वर्जने + क्तः प्रत्ययः बाहुलकात् (अञ्जिघृसिभ्यः क्तः – उ०को०, ३/८९) ।

**बिन्दुः**

विन्दत्यवयवीभवतीति बिन्दुः परिमाणं जलादिकणो वा । – उ०को०, १/१०

√बिन्दि – अवयवे + उः प्रत्ययः बाहुलकात् (शृ स्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१०) ।

**बिभृतः**

यो विविधं बिभर्ति सः । – ऋ०, २/१०/२

✓भृञ् – भरणे + क्तः प्रत्ययः (अञ्जिघृसिभ्यः क्तः – उ०को०, ३/८९), धातोः द्वित्वं छन्दसि अभ्यासस्य बकारः इत्वञ्च ।

## बिभ्युषः

**यो बिभेति तस्य ।** – ऋ०, ६/२३/२

✓भी – भये + क्वसुः प्रत्ययः धातोः द्वित्वम् इत्वञ्च।

## बिम्बं

**वीयते काम्यते तत् बिम्बं मण्डलमोषधिविशेषो वा ।** – उ०को०, ४/९५

✓वी – गतिव्याप्तिप्रजनकान्त्यसनखादनेषु + वन् प्रत्ययः (उल्बादयश्च – उ०को०, ४/९६) धातोर्नुमागमो ह्रस्वत्वं बत्वञ्चेति ।

## बिसखा

**यो बिसं कमलतन्तु खनति तत् ।**

– ऋ०, ६/६१/२

बिस – (भेदनकर्मणो वृद्धिकर्मणो वा) + ✓खनु – अवदारणे + विट् प्रत्ययः (जनसनखनक्रमगमो विट् – अष्टा०, ३/१/६७) धातोः आत्वञ्च (विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१)।

## बृहत्

**सर्वथा बृद्धम् ।** – ऋ०, १/९/१०

**बृहति बर्धतेऽसौ बृहत् ।** – उ०को०, २/८४

✓बृह – वृद्धौ + अति प्रत्ययः निपातनात् (वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च – उ०को०, २/८४) ।

## बृहस्पतिः

**बृहतां पालकः सूर्य्यः ।** – यजु०, २१/१६

**यो बृहतामाकाशादीनां पतिः स्वामी पालयिता स बृहस्पति ।**

– स० प्र० (प्रथमसमुल्लासः)

बृहत् + पति, तकारस्य लोपः सुडागमश्च (तद्बृहतोः करपत्योश्चोरदेवतयोरभिधेययोः सुट् तलोपो वक्तव्यः – अष्टा०वा०, ६/१/१५७) ।

## बुधः

**यो बुध्यते बोधयति वा स बुधः ।**

– स० प्र० (प्रथमसमुल्लासः)

✓बुध – अवगमने + कः प्रत्ययः (इगुपधज्ञाप्रीकिरः कः – अष्टा०, ३/१/१३५) ।

## बुधानः

**बुध्यते स बुधानः आचार्यो वा ।**

– उ०को०, २/९०

✓बुध – अवगमने + आनच् प्रत्ययः (युधिबुधिदृशः किच्च – उ०को०, २/९०) ।

## बुध्नः

**बद्धा आपो यस्मिन् स बुध्नो मेघः ।**

– ऋ०, १/२४/७

**यो बोधयति सर्वान् पदार्थान् वेदद्वारा सः ।** – ऋ०, १/९६/६

**बध्नन्त्यापो यस्मिंस्तस्मिन्नन्तरिक्षे ।**

– ऋ०, ३/३९/३

**बुध्नातीति बुध्नः बुध्नो महान् सूर्यो वा ।**

– उ०को०, ३/५

✓बुध – अवगमने + नक् प्रत्ययः (बन्धेर्ब्रधिबुधी च – उ०को०, ३/५) ।

## ब्रजः

**यो ब्रजति गच्छेत् सः ।** – ऋ०, ३/३०/११

**ब्रजन्ति यया गत्या तद्व्रत् ।** – ऋ०, ५/६४/१

✓व्रज – गतौ + अच् प्रत्ययः, वकारस्य बकारः छन्दसि ।

## ब्रध्नः

**बृध्नातीति ब्रध्नः महान् सूर्य्यो वा ।**

– उ०को०, ३/५

✓बन्ध – बन्धने + नक् प्रत्ययः, धातोः ब्रधि आदेशः (बन्धेर्ब्रधिबुधी च – उ०को०, ३/५) ।

## ब्रह्म

**सर्वेभ्यो गुणकर्मस्वरुपतो बृहत् ।**

– यजु०, ४०/१७

सर्वेभ्यो ब्रह्मत्वाद् ब्रह्म ।

– स० प्र० (*प्रथमसमुल्लासः*)

बृहंति वर्धते तद् ब्रह्म ईश्वरो वेदस्तत्वं तपो वा । – उ०को०, ४/१४६

✓बृंह – वृद्धौ + मनिन् प्रत्ययः धातोः न लोपः (बृंहेर्नोऽच्च – उ०को०, ४/१४६) ।

## ब्रह्मकाराः

ये ब्रह्म धनमं वा कुर्वन्ति ते ।

– ऋ०, ६/२९/४

(प्र०ब०व०) – ब्रह्म + ✓डुकृञ्-करणे + अण् प्रत्ययः ।

## ब्रह्मकृतः

ये ब्रह्म धनमन्नं वा कुर्वन्ति ते ।

– ऋ०, ७/३२/२

(प्र०ब०व० ब्रह्म + ✓डुकृञ् – करणे + क्विप् प्रत्ययः ततः तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९) ।

## ब्रह्मद्विषः

यो ब्रह्म परमात्मानं वेदं वा द्वेष्टि तस्मै।

– ऋ०, ३/३०/१७

ब्रह्म वेदं परमात्मनं वा द्विषन्ति तान् ।

– ऋ०, ३/३०/१७

ब्रह्म + ✓द्विष – अप्रीतौ + क्विप् प्रत्ययः ।

## ब्रह्मयुजः

ब्रह्माणं युञ्जन्ति यैस्ते । – ऋ०, १/१७७/२

ब्रह्म + ✓युजिर – योगे + क्विप् प्रत्ययः ।

## ब्रह्मवनि

यो ब्रह्मभिर्वेदविद्भिर्ब्राह्मणैर्वन्यते संसेव्यते तम् । – यजु०, १/१७

वेदं वनयति तम् । – यजु०, १/१८

यया ब्रह्मविदो मनुष्या ब्रह्म परमात्मानं वेदं वा वनन्ति संभजन्ति सा ।

– यजु०, ५/१२

ब्रह्मणो वेत्तृणां संविभक्तारम् ।

– यजु०, ६/३

ब्रह्म + ✓वन – सम्भक्तौ + इन् प्रत्ययः (छन्दसि वनसनरक्षिमथाम् – अष्टा०, ३/२/२७) ।

## ब्रह्मवाट्

यो ब्रह्माणि धनानि प्राप्नोति तस्मै ।

– ऋ०, ५/३९/५

ये ब्रह्मधनं धान्यं प्रापयन्ति ते ।

– ऋ०, ६/२१/६

ब्रह्मन् + ✓वह – प्रापणे + ण्विः प्रत्ययः (वहश्च – अष्टा०, ३/२/६४) ।

## भगं

भजते सुखानि येन तच्चक्रवर्त्यादि-राज्यधनम् । – ऋ०, १/१४/३

✓भग (ऐश्वर्ये) - ✓भज – सेवायां + घः प्रत्ययः (पुंसि संज्ञायां घः प्रायेण – अष्टा०, ३/३/११८), कुत्वञ्च चजोः कु घिण्ण्यतोः – अष्टा०, ७/३/५२)।

## भगालं

भजतीति भगालं नरमस्तकं वा ।

– उ०को०, ३/७६

✓भज – सेवायां + कालन् प्रत्ययः बाहुलकात्, जकारस्य कुत्वञ्च (पीयुक्वणिभ्यां कालन् ह्रस्वं सम्प्रसारणञ्च – उ०को०, ३/७६) ।

## भडिलः

भडति हिनस्तीति भडिलः शूरो वा। भडति परिचरति स्वामिनमिति भडिलः सेवकः।

– उ०को०, १/५४

✓भड (सौत्रोधातु) – हिंसायां, ✓भडि – परिचर्या वा + इलच् प्रत्ययः (सलिकल्यनिमहिभडभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्–उ०को०, १/५४)।

## भण्डिलः

भण्डयति परिहसति येन स भण्डिलः कल्याणं वा । – उ०को०, १/५४

✓भण्ड – कल्याणे + इलच् प्रत्ययः (सलिकल्यनिमहिभडभण्डितुण्डिपिण्डितुण्डिकुकिभूभ्य इलच् – उ०को०, १/५४) ।

## भद्रं

भन्दनीयं धर्म्याचरणं सुखं वा ।

– यजु०, ३०/३

१- ✓भदि – कल्याणे सुखे च + रन् प्रत्ययः (ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः – उ०को०, २/२८) ।

२- ✓भन्दि – कल्याणे + रन् प्रत्ययः (ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः – उ०को०, २/२८) धातोः नलोपश्च।

## भदन्तः

भदन्ते कल्याणं करोतीति भदन्तः प्रव्रजितो वा । – उ०को०, ३/१३०

✓भन्दि – कल्याणे + झच् प्रत्ययः न लोपश्च (भन्देर्नलोपश्च – उ०को०, ३/१३०) झकारस्यान्तादेशः (झोऽन्तः – अष्टा०, ७/१/३) ।

## भदाकः

भन्दतेऽसौ भदाकः कल्याणम् ।

– उ०को०, ४/१५

✓भन्दि – कल्याणे + आकः प्रत्ययः बाहुलकात् धातोर्नलोपश्च (पिनाकादयश्च – उ०को०, ४/१५)।

## भद्रं

भन्दते कल्याणं करोतीति भद्रं कल्याणम्।

– उ०को०, २/२८

✓भदि – कल्याणे सुखे च + रन् प्रत्ययः (ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः – उ०को०, २/२८) ।

## भयस्थे

भये तिष्ठतीति तस्मिन् । – ऋ०, २/३०/६

(स०ए०व०) – भय + ✓ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ।

## भयानकः

बिभेत्यस्मादिति भयानकः भयप्रदः ।

– उ०को०, ३/८२

✓भी – भये + आनकः प्रत्ययः (आनकः शीङ्भियः – उ०को०, ३/८२) ।

## भये

बिभेति यस्मात् तस्मिन् । – ऋ०, १/४०/८

(स०ए०व०) – ✓भी – भये + अच् प्रत्ययः (एरच् – अष्टा०, ३/३/५६) ।

## भरद्वाजः

ये भरन्ति ते भरतः वज्यन्ते ज्ञायन्ते यैस्ते वाजा भरतश्च ते वाजाश्च तेषु पृथिव्यादिषु । – ऋ०, १/५९/७

भरन्तः पुष्यन्तः पुष्टिमन्तो वाजा वेगयन्तो योद्धारो तस्य तस्मै । – ऋ०, १/११६/१८

ये वाजानन्नादीन् भरन्ति तेषु ।

– ऋ०, ६/१०/६

ये वाजानन्नादीन् भरन्ति तान् ।

– ऋ०, ६/४७/२५

वाजोऽन्नं विज्ञानं वा बिभर्त्ति येन श्रोत्रेण तत् । – यजु०, १३/५५

✓भृञ् – भरणे + शतृ प्रत्ययः > भरत् + वाज – (धननाम अन्ननाम च ) > भरद्वाजः ।

## भरटः

बिभर्तीति भरटः कुलालो वा ।

– उ०को०, ४/१०४

✓भृञ् – भरणे धारणपोषणयोः वा + अटच् प्रत्ययः (जनिदाच्युसृपृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्त्लण्क्निश-क्स्यढडटोटचः – उ०को०, ४/१०४)।

## भरण्डः

**बिभर्ति पुष्यतीति भरण्डः स्वामी वा।**

– उ०को०, १/१२९

✓भृञ् – भरणे धारणपोषणयोः वा + अण्डन् प्रत्ययः (अण्डन् कृसृभृवृञः – उ०को०, १/१२९)।

## भरतः

**भरति पुष्णातीति भरतः राजभेदो नटो रामानुजो वा। – उ०को०, ३/११०**

✓भृञ् – धारणपोषणयोः भरणे वा + अतच् प्रत्ययः (भृमृदृशियजिपर्विपच्यमितमिनमिहर्य्यिभ्योऽतच् – उ०को०, ३/११०)।

## भरथः

**बिभर्तीति भरथः लोकपालो राजा वा।**

– उ०को०, ३/११४

✓भृञ् – भरणे, धारणपोषणयोर्वा + अथः प्रत्ययः (भृञश्चित् – उ०को०, ३/११४)।

## भरन्त

**यो भरति सर्वं विश्वं सर्वान् गुणांस्त-त्संबुद्धौ। – ऋ०, १/७०/५**

✓भृञ् – भरणे + झच् प्रत्ययः बाहुलकात् झस्यान्तादेशः (झोऽन्तः – अष्टा०, ७/१/३)।

## भरिमा

**भर्तु योग्यो भरिमा कुटुम्बं वा।**

– उ०को०, ४/१४८

✓भृञ् – धारणपोषणयोः भरणे वा + इमनिच् प्रत्ययः (हृभृधृसृश्रृभ्य इमनिच् – उ०को०, ४/१४८)।

## भरुः

**भरति बिभर्ति वेति भरुः स्वामी वा।**

– उ०को०, १/७

✓भृञ् – भरणे + उः प्रत्ययः (भृमृशीङ्तॄचरित्सरितनिधनिमिमस्जिभ्य उः – उ०को०, १/७)।

## भरे

**बिभ्रति धनानि यस्मिंस्तस्मिन्।**

– ऋ०, ३/३०/२२

(स०ए०व०) – ✓भृञ् – धारणपोषणयोः + अप् प्रत्ययः।

## भर्गः

**भृज्जन्ति पापानि दुःखमूलानि येन तत्।**

– यजु०, ३/३५

**भृज्जन्ति दुःखानि यस्मात्तत्। – यजु०, ३०/२**

**भर्जति पक्वं भवतीति भर्गः प्रजापतिः तेजो वा। – उ०को०, ४/२१६**

✓भृजी – भर्जने + असुन् प्रत्ययः ककारागमश्च (अञ्च्यञ्जियुजिभृजिभ्यः कुश्च – उ०को०, ४/२१६)।

## भल्लूकः

**भलते परितोभाषतेऽसौ भल्लूकः ऋक्षो वा। बाहुलकाद् ह्रस्वे भल्लुकः इत्यपि।**

– उ०को०, ४/४१

✓भल्ल – परिभाषणहिंसादानेषु + ऊकः प्रत्ययः (उलूकादयश्च - उ०को०, ४/४१)।

## भवन्तः

**यो भवतीति यत्र वा स भवन्तः कालो वा। – उ०को०, ३/१२८**

✓भू – सत्तायां + झच् प्रत्ययः (तॄभूवहिवसिभसिसाधिगडिमण्डिजिनन्दिभ्यश्च – उ०को०, ४/१२८) झकारस्यान्तादेशः (झोऽन्तः – अष्टा०, ७/१/३)।

## भवन्तिः

**भवन्ति पदार्था यस्मिन् स भवन्तिः वर्तमान कालो वा। – उ०को०, ३/५०**

√भू – सत्तायां + झिच् प्रत्ययः (भुवो झिच् – उ०को०, ३/५०) झकारस्यान्तादेशः (झोऽन्तः – अष्टा०, ७/१/३)।

## भवान्

भाति दीप्तो भवति दीपयति वा स भवान्।

– उ०को०, १/६३

√भा – दीप्तौ + डवतुप् प्रत्ययः (भातेर्डवतुप् – उ०को०, १/६३), डित्वात् धातोश्टेर्लोपः (अनुदात्तस्य च यत्रोदात्तलोपः – अष्टा०, ६/१/१६१)।

## भविलः

यो भवति स भविलः भवितुं योग्यो वा।

– उ०को०, १/५४

√भू – सत्तायां + इलच् प्रत्ययः (सलिकल्यनिमहिभडिमण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् – उ०को०, १/५४)।

## भषकः

भषति भर्त्सयतीति भषकः श्वा वा।

– उ०को०, २/३२

√भष – भर्त्सने + क्वुन् प्रत्ययः (क्वुन् शिल्पिसंज्ञयोरपूर्वश्चापि – उ०को०, २/३२)।

## भसत्

बिभस्ति भर्त्सयति प्रकाशते वा स भसत् जघनं वा। – उ०को०, १/१३०

√भस – भर्त्सनदीप्त्योः + अदिः प्रत्ययः (शृदृभसोऽदिः – उ०को०, १/१३०)।

## भस्त्रा

बिभस्ति दीप्यते यया सा भस्त्रा अग्निज्वलनी वा। – उ०को०, ४/१६८

√भस – भर्त्सनदीप्त्योः + त्रन् प्रत्ययः (हुयामाश्रुभसिभ्यस्त्रन् – उ०को०, ४/१६८)।

## भस्म

भसितं दीपितमिति यत्तद् भस्म।

– उ०को०, ४/१४५

√भस – भर्त्सनदीप्त्योः + मनिन् प्रत्ययः (सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५)।

## भाः

या भान्ति प्रकाशयन्ति ताः।

– ऋ०, १/४५/८

यो भाति। – ऋ०, ७/८/२

यो भाति प्रकाशते सः। – यजु०, ४/२५

√भासृ – दीप्तौ + क्विप् प्रत्ययः (भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् – अष्टा०, ३/२/१७७)।

## भाऋजीकं

भाति प्रकाशयति सा भा सभा कान्तिर्वा तां योऽर्जयते तम्। – ऋ०, १/४४/३

भा + √ऋज – गतिस्थानार्जनोपार्जनेषु + ईकन् प्रत्ययः (ऋजेश्च – उ०को०, ४/२२)।

## भागं

सेवनीयं भगानां धनानां ज्ञानानां वा भाजनम्। – यजु०, १/१

भजनीयं शुभगुणभाजनं यज्ञम्।

– यजु०, १/४

√भज – सेवायां + घञ् प्रत्ययः, चकारस्य ककारादेशः (चोः कुः – अष्टा०, ८/२/३०)।

## भातुः

भाति प्रकाशयतीति भातुः सूर्यो वा।

– उ०को०, १/७३

√भा – दीप्तौ + तुः प्रत्ययः (कमिमनिजनिगाभायाहिभ्यश्च – उ०को०, १/७३)।

## भानुः

**भाति दीप्यतेऽसौ भानुः सूर्यः प्रकाशः किरणो वा ।** – उ०को०, ३/३२

✓भा – दीप्तौ + नुः प्रत्ययः (दाभाभ्यां नुः – उ०को०, ३/३२) ।

## भामः

**भाति येन सः ।** – यजु०, २०/६

**भाति प्रकाशतेऽसौ भामः क्रोधः सूर्यो दीप्तिर्वा।** – उ०को०, १/१४०

✓भा – दीप्तौ + मन् प्रत्ययः (अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०) ।

## भालुः

**भृणाति स्वतापेन छेदयति पदार्थानिति भालुः सूर्यः ।** – उ०को०, १/५

✓भृ – भर्त्सने भरणे च + जुण् प्रत्ययः, बाहुलकात् धातोः रकारस्य लत्वं दीर्घश्च (त्रो रश्च लः – उ०को०, १/५) ।

## भालूकः

**भलतेऽसौ भालूकः स एव ।**

– उ०को०, ४/४१

✓भल – परिभाषणहिंसादानेषु + ऊकः प्रत्ययः (उलूकादयश्च – उ०को०, ४/४१) धातोः दीर्घश्च।

## भावित्रं

**भवतीति भावित्रं लोकत्रयो वा ।**

– उ०को०, ४/१७१

✓भू – सत्तायां + णित्रन् प्रत्ययः (भूवादिगृभ्यो णित्रन् – उ०को०, ४/१७१) ।

## भावी

**भविष्यतीति भावी ।** – उ०को०, ४/८

✓भू – सत्तायां + इनिः प्रत्ययः णित्वात् वृद्धिश्च (भुवश्च – उ०को०, ४/८) ।

## भासन्तः

**भासयते दीप्यतेऽसौ भासन्तः सूर्यो वा ।**

– उ०को०, ३/१२८

✓भासृ – दीप्तौ + झच् प्रत्ययः (त भूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च – उ०को०, ३/१२८) झकारस्यान्तादेशः (झोऽन्तः – अष्टा०, ७/१/३) ।

## भित्तिका

**भिनत्तीति भित्तिका भित्तिर्वा ।**

– उ०को०, ३/१४७

✓भिदिर् – विदारणे + तिकन् प्रत्ययः (कृतिभिदिलतिभ्यः कित् – उ०को०, ३/१४७), ततः टाप् प्रत्ययः स्त्रियाम् ।

## भिदकः

**भिनत्ति येन स भिदकः खड्गो वा ।**

– उ०को०, २/३७

✓भिदिर् – विदारणे + क्वुन् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/३८) ।

## भिदिः

**भिनत्ति येन स भिदिः वज्रं वा ।**

– उ०को०, ४/१४३

✓भिदिर् – विदारणे + इः प्रत्ययः (कृगृशॄपॄकुटिभिदिछिदिभ्यश्च – उ०को०, ४/१४३) ।

## भिदिरं

**भिनत्ति येनेति भिदिरं वज्रम् ।**

– उ०को०, १/५१

✓भिदिर् – विदारणे + किरच् प्रत्ययः (इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः – उ०को०, १/५१) ।

## भिदुः

**भिनत्तीति भिदुः वज्रं वा ।**

– उ०को०, १/२३

✓भिदिर् – विदारणे + कुः प्रत्ययः (पृभिदिव्यधिगृधिधृषिहृषिभ्यः – उ०को०, १/२३)।

## भिद्रं

**भिनत्ति येन तद् भिद्रं वज्रो वा।**

– उ०को०, २/१३

✓भिदिर् – विदारणे + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विति-वृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिद-हिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३)।

## भिषक्

**यो भिषज्यति चिकित्सति सः।**

– यजु०, १२/८०

**बिभेत्यसौ भिषक् वैद्यो वा।**

– उ०को०, १/१३८

✓भी – भये + अजिः प्रत्ययः धातो. षिगागमः ह्रस्वश्च (भियः षुग्घ्रस्वश्च – उ०को०, १/१३८)।

## भीमः

**बिभेति यस्मात् सः। – ऋ०, १/८१/४**

**बिभेत्यस्मात्सः। – ऋ०, १/९५/७**

**एतेषां भयङ्करः। – ऋ०, १/१००/१२**

**दुष्टान् प्रति भयङ्कराः। – ऋ०, २/३४/१**

**बिभेति यस्याः सा। – ऋ०, ६/१८/१०**

**बिभेति यस्मात् तस्मै भयङ्कराय।**

– यजु०, १६/४०

**बिभेत्यस्मात् सः। – यजु०, १८/७१**

**बिभेति यस्मात्स भयङ्करः। – यजु०, ३९/७**

**बिभेति बिभ्यति वा यस्मात् यस्या वा स भीमः भीमा वा। भीष्मः भीष्मा वा।**

– उ०को०, १/१४८

✓भी – भये + मक् प्रत्ययः (भियः षुग् वा – उ०को०, १/१४८)।

## भीमयुः

**यो भीमं भयङ्करं योद्धारं याति सः।**

– ऋ०, ५/५६/३

भीम + ✓या – प्रापणे + कुः (मृगय्वादयश्च – उ०को०, १/३७)।

## भीमलं

**यो भीमान् भयङ्कराम् लात्याददाति तम्।**

– यजु०, ३०/६

भीम + ✓ला – आदाने + कः प्रत्ययः।

## भीमसन्दृशः

**भीमं भयङ्करं सन्दृग्दर्शनं येषान्ते।**

– ऋ०, ५/५६/२

(प्र०ब०व०) – भीम + सम् + ✓दृशिर् – प्रेक्षणे + क्विन् प्रत्ययः।

## भीरुकः

**यो बिभेति यस्माद्वा स भीरुकः कातरो वा। – उ०को०, २/३१**

✓भी – भये + क्रुकन् प्रत्ययः (भियः क्रुकन् – उ०को०, २/३१)।

## भुजिः

**भुनक्ति पालयति भक्षयति वा सः भुजिः अग्निर्वा। – उ०को०, ४/१४२**

✓भुज – पालनाभ्यवहारयोः + इः प्रत्ययः (भुजेः किच्च – उ०को०, ४/१४२)।

## भुजिष्यः

**भुनक्तीति भुजिष्यः दासो वा।**

– उ०को०, ४/१७९

✓भुज – पालनाभ्यवहारयोः + किष्यन् प्रत्ययः (रुचिभुजिभ्यां किष्यन् – उ०को०, ४/१७९)।

## भुजे

**भुज्यते यः सः भुक् तस्मै।**

– ऋ०, १/३०/२०

(च०ए०व०) – ✓भुज – पालनाभ्यवहारयोः + क्विप् प्रत्ययः ।

## भुज्युः

**यो भुनक्ति यत्र वा स भुज्युः पात्रं वा ।**

– उ०को०, ३/२१

✓भुज – पालनाभ्यवहारयोः + युक् प्रत्ययः (भुजिमृङ्भ्यां युकत्युकौ – उ०को०, ३/२१) ।

## भुरिक्

**भरति सर्वं धरतीति भुरिक् भूमिर्वा ।**

– उ०को०, २/७२

भृञ् – भरणे + इजिः प्रत्ययः, धातोः ऋकारस्य उत्वञ्च (भृञ उच्च – उ०को०, २/७२) ।

## भुवः

**यो भवति सः ।** – यजु०, १३/५४

**भवन्ति यस्मिन्निति भुवः अन्तरिक्षं वा ।**

– उ०को०, ४/२१७

✓भू – सत्तायां + असुन् प्रत्ययः कित्वात् धातोः ह्रस्वत्वं (भूरञ्जिभ्यां कित् – उ०को०, ४/२१७)।

## भुवनं

**भवन्ति भूतानि येषु तानि लोकजातानि ।**

– ऋ०, १/१५४/२

**भवन्ति भूतानि येषु तानि।**– ऋ०, १/१६०/२

**भवन्ति भूतानि येषु तानि ।** – ऋ०, २/१०/४

**भवन्ति येषु तानि वस्तूनि ।**

– यजु०, ११/२३

**भवन्ति भूतानि यस्मिंस्तस्य लोकमात्रस्य।**

– यजु०, १२/२३

**भवन्ति भूतानि यस्मिन्राज्ये तस्य ।**

– यजु०, १३/१८

**भवन्ति भूतानि येषु तेषां गृहाणाम् ।**

– यजु०, १४/५

**भवन्ति भूतानि यस्मिन् ।**

– यजु०, १७/११

**भवन्ति भूतानि यस्मिंस्तस्य ।**

– यजु०, ३६/२

**भवतीति भुवनं लोको वा ।**

– उ०को०, २/८०

✓भू – सत्तायां + क्युन् प्रत्ययः (भूसूधूभ्रस्जिभ्यश्छन्दसि – उ०को०, २/८०) ।

## भुवन्युः

**भवतीति भुवन्युः स्वामी सूर्यो वा ।**

– उ०को०, ३/५१

✓भू – सत्तायां + कन्युच् प्रत्ययः (कन्युच् क्षिपेश्च – उ०को०, ३/५१) ।

## भुविः

**यो भवति यस्मिन् वा स भुविः समुद्रो वा ।** – उ०को०, २/११२

✓भू – सत्तायां + इसिन् प्रत्ययः (भुवः कित् – उ०को०, २/११२) ।

## भूकं

**भवतीति भूकं छिद्रं कालो वा ।**

– उ०को०, ३/४१

✓भू – सत्तायां + कक् प्रत्ययः (सृवृभूशुषिमुषिभ्यः कक् – उ०को०, ३/४१) ।

## भूमिः

**बहवः पदार्था भवन्ति यस्यां ताम् ।**

– ऋ०, ३/३०/९

**भवन्ति भूतानि यस्यां सा पृथिवी ।**

– यजु०, २३/४६

**भवन्ति पदार्था अस्यामिति भूमिः उत्पत्तिस्थानम् ।** – उ०को०, ४/४५

**भवन्ति भूतानि यस्यां सा भूमिः ।**

– स०प्र० (प्र० समु०)

✓भू – सत्तायां + मिः प्रत्ययः (भुवः कित् – उ०को०, ४/४५)।

## भूरिः

भवतीति भूरिः बहुसुवर्णं वा।

– उ०को०, ४/६५

✓भू – सत्तायां + क्रिन् प्रत्ययः (अदिशदिभूशुभिभ्यः क्रिन् – उ०को०, ४/६५)।

## भूरिवाराः

भूरि बहुविधं सुखं वृण्वन्ति।

– ऋ०, ३/५७/४

(प्र०ब०व०) – भूरि + ✓वृञ् – वरणे + अण् प्रत्ययः।

## भूर्णिः

बिभर्ति धरति सर्वमिति भूर्णिः पृथिवी वा। – उ०को०, ४/५२

✓भृञ् – धारणपोषणयोः + निः प्रत्ययः धातोरुत्वं (घृणिपृश्नि पार्ष्णिचूर्णिचूर्णिभूर्णयः – उ०को०, ४/५२)।

## भृगुः

भृज्जति तपसा शरीरमिति भृगुः ऋषिः प्रतापी वा। – उ०को०, १/२८

भृज्जन्ति यैस्तेषाम्। – यजु०, १/१८

✓भ्रस्ज – पाके + कुः प्रत्ययः धातोः सम्प्रसारणं सलोपश्च जकारस्य कुत्वञ्च (प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च – उ०को०, १/२८)।

## भृङ्गः

बिभर्त्ति धरति पुष्यति वा स भृङ्गो भ्रमरो वा। – उ०को०, १/१२५

✓भृञ् – धारणपोषणयोः भरणे च + गन् प्रत्ययः, नुडागमश्च (भृञः किनुट् च – उ०को०, १/१२५)।

## भृङ्गारः

बिभर्ति पुष्यतीति भृङ्गारः सुवर्णपात्रविशेषो वा। – उ०को०, ३/१३६

✓भृञ् – धारणपोषणयोः + आरन् प्रत्ययः, गागमश्च (शृङ्गारभृङ्गारौ – उ०को०, ३/१३६)।

## भृज्जनं

यद् यस्मिन् वा भृज्जति परिपक्वं भवतीति भृज्जनं अन्नभर्जनकपालं वा।

– उ०को०, २/८०

✓भ्रस्ज – पाके + क्युन् प्रत्ययः धातोः सकारस्यलोपः छन्दसि (भूसूधूभ्रस्जिभ्यश्छन्दसि – उ०को०, २/८०)।

## भृमिः

यो नित्यं भ्रमति। – ऋ०, १/३१/१६

भ्राम्यतीति भृमिः वायुर्वा।

– उ०को०, ४/१२१

✓भ्रमु – चलने अनवस्थाने च + इन् प्रत्ययः सम्प्रसारणञ्च (भ्रमेः सम्प्रसारणञ्च – उ०को०, ४/१२१)।

## भृष्टिः

भृज्जन्ति यया सा भृष्टिः।

– ऋ०, १/५२/१५

भृज्जन्ति परिपचन्ति यस्यां वृष्टौ सा।

– ऋ०, १/५६/३

✓भ्रस्ज – पाके + क्तिन् प्रत्ययः स्त्रियाम्।

## भेकः

यो बिभेति यस्माद्वा स भेकः मण्डूको मेघो वा। – उ०को०, ३/४३

✓भी – भये + कन् प्रत्ययः धातोः एत्वं (इणभीकापाशल्यतिमर्चिभ्यः कन् – उ०को०, ३/४३)।

## भेकुरयः

या भां दीप्तिं कुर्वन्ति ताः।

– यजु०, १८/४०

(प्र०ब०व०) + ✓भा – दीप्तौ < भे – (आकारस्य एत्वं) + कुरिः + ✓कृञ् – करणे < कुरिः ऋकारस्य उत्वात् > भेकुरिः पृषोदरादिना सिद्धमिति ।

## भेरः

**बिभेत्यस्मात्स भेरः भेरी दुन्दुभिर्वा ।**

– उ०को०, २/२८

✓भी – भये + रन् प्रत्ययः धातोः इकारस्य स्थाने एत्वं (ऋज्रेन्द्राग्रवज्रविप्रकुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्र-शुक्लगौरवन्रेरामालाः – उ०को०, २/२८) ।

## भेरिः

**बिभेति येन स भेरिः वाद्यविशेषो वा ।**

– उ०को०, ४/६५

✓भी – भये + क्रिन् प्रत्ययः (अदिशदिभूशुभिभ्यः क्रिन् – उ०को०, ४/६५) धातोः ईकारस्य एत्वमिति।

## भ्रजः

**भ्राजते प्रकाशते योऽग्निः सः ।**

– यजु०, १५/५

✓भ्राजृ – दीप्तौ + अंच् प्रत्ययः, धातोः उपधायाः ह्रस्वत्वम् ।

## भ्रमरः

**भ्राम्यतीति भ्रमरः षट्पदः कामुको वा ।**

– उ०को०, ३/१३२

✓भ्रमु – चलने अनवस्थाने च + अरः प्रत्ययः (अर्त्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् – उ०को०, ३/१३२) ।

## भ्रमिः

**भ्राम्यतीति भृमिः वायुर्वा बाहुलकात् भ्रमिः इत्यपि सिद्धम् ।** – उ०को०, ४/१२१

✓भ्रमु – चलने अनवस्थाने च + इन् प्रत्ययः (भ्रमेः सम्प्रसारणञ्च – उ०को०, ४/१२१) ।

## भ्राजः

**यो भ्राजते प्रकाशते तत्संबुद्धौ ।**

– यजु०, ४/२७

✓भ्राजृ – दीप्तौ + घञ् प्रत्ययः भावार्थे ।

## भ्राता

**भ्राजते दीप्यतेऽसौ भ्राता सौदर्यो वा ।**

– उ०को०, २/९५

✓भ्राजृ – दीप्तौ + तृन् प्रत्ययः (नप्तृनेष्टृत्वष्टृहोतृपो-तृभ्रातृजामातृमातृपितृदुहितृ – उ०को०, २/९५) ।

## भ्राष्ट्रः

**भृज्जति यत्रेति भ्राष्ट्रः अम्बरीषो वा ।**

– उ०को०, ४/१६०

✓भ्रस्ज – पाके + ष्ट्रन् प्रत्ययः धातोः वृद्धिश्च (भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च – उ०को०, ४/१६०) ।

## भ्रूः

**भ्रमति चलतीति भ्रूः नेत्रयोरुपरि रेखा वा।**

– उ०को०, २/६८

✓भ्रमु – चलने + डूः प्रत्ययः धातोःमकारलोपः (भ्रमेश्च डूः – उ०को०, २/६८) ।

## मकुरः

**मङ्कतेऽलङ्करोति येन स मकुरः दर्पणो वा ।** – उ०को०, १/४०

✓मकि – मण्डने + उरच् प्रत्ययः निपातनात् (मकुरदर्दुरौ – उ०को०, १/४०) ।

## मक्षिका

**मशति शब्दयति या सा मक्षिका ।**

– ऋ०, १/११९/९

**मशति शब्दायते या सा ।** – ऋ०, १/१६२/९

**मशति शब्दयतीति शेषं करोति वा सा मक्षिका ।** – उ०को०, ४/१५४

✓मश – शब्दे रोषे च + सिकन् प्रत्ययः – (हनिमशिभ्यां सिकन् – उ०को०, ४/१५४) स्त्रियां टाप् प्रत्ययः ।

## मघवा

मह्यते पूज्यतेऽसौ मघवा सूर्यो वा ।

– उ०को०, १/१५९

✓मह – पूजायां + कनिन् प्रत्ययः निपातनात्, हकारस्य घकारः, अवुगागमश्च ( श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्वन्मातरिश्वन्मघवन्निति – उ०को०, १/१५९ ) ।

## मघोनः

मघं प्रशस्तं धनं विद्यते येषां तान् ।

– ऋ०, १/३१/१२

मघ + मतुप् प्रत्ययः सम्प्रसारणञ्च( श्वयुवमघोनामतद्धिते – अष्टा०, ६/४/१३३ ) ।

## मङ्गलः

योमङ्गति मङ्गयति वा स मङ्गलः ।

– स० प्र० ( प्रथमसमुल्लासः )

मङ्गति प्राप्नोति सुखं येन तत् मङ्गलं प्रशस्तं मङ्गलो वारभेदो वा।– उ०को०, ५/७०

✓मङ्गि – कल्याणे गत्यर्थश्च + अलच् प्रत्ययः ( मङ्गेरलच् – उ०को०, ५/७० ) ।

## मज्जा

मज्जति शुन्धतीति मज्जा अस्थिसारो वा।

– उ०को०, १/१५९

✓मज्ज – शुद्धौ + कनिन् प्रत्ययः निपातनात् ( श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्वन्मातरिश्वन्मघवन्निति – उ०को०, १/१५९ ) ।

## मञ्जुः

मञ्जति चित्तं प्रसादयतीति मञ्जुः शोभनम् । – उ०को०, १/३७

✓मंजि ( सौत्रो धातुः ) – प्रसादे + कुः प्रत्ययः ( मृगय्वादयश्च – उ०को०, १/३७ ) ।

## मञ्जूषा

मञ्जति शुद्धो भवतीति मञ्जूषा काष्ठमयं द्रव्यं वा । – उ०को०, ४/७७

✓मस्ज – शुद्धौ + ऊषन् प्रत्ययः धातोः नुमादेशः, ( मस्जेर्नुम् च – उ०को०, ४/७७ ) तथा एकस्य जकारस्य लोपः ( झरो झरि सवर्णे – अष्टा०, ८/४/६४ ) ।

## मठरः

मन्यतेऽसौ मठरः मुनिभेदो मत्तो वा ।

– उ०को०, ५/३९

✓ मन – ज्ञाने + अरः प्रत्ययः अन्त्यस्य ठकारादेशः ( वचिमनिभ्यां चिच्च – उ०को०, ५/३९ ) ।

## मणिः

मणति शब्दयतीति मणिः बहुमूल्यः पाषाणो वा । – उ०को०, ४/११८

✓मण – शब्दे – इन् प्रत्ययः ( सर्वधातुभ्य इन् – उ०को०, ४/११८ ) ।

## मणिकारं

यो मणिं करोति तम् । – यजु०, ३०/७

मणि + ✓डुकृञ् – करणे + अण् प्रत्ययः ।

## मण्डः

मन्यते जानातीति मण्डः मण्डा धात्री समाख्याता, मण्डं पक्वोदनोदकम् ।

– उ०को०, १/११४

✓मन – ज्ञाने + डः प्रत्ययः ( जमन्ताड् डः – उ०को०, १/११४ ) ।

## मण्डलः

मण्डति भूषयति प्रतिपादयति वा स मण्डलः । – उ०को०, १/१०४

✓मण्डि – भूषायां + कलः प्रत्ययः ( कलस्तृपश्च – उ०को०, १/१०४ ) ।

## मण्डूकः

मण्डति शोभतेऽसौ मण्डूकः भेको

जलजन्तुर्वा । – उ०को०, ४/४२

✓मण्ड – भूषायां + ऊकण् प्रत्ययः (शलिमण्डिभ्यामूकण् – उ०को०, ४/४२)।

## मतिं

यो वेदादिशास्त्रैर्विद्वद्भिश्च मन्यते तम्।
– यजु०, ४/२५

✓मन – अवबोधने + क्तिन् प्रत्ययः स्त्रियाम्।

## मतीविदे

यो मतिं ज्ञानं विन्दति। – यजु०, २२/१२

(च०ए०व०) – मतिं + ✓विद्लृ लाभे + क्विप् प्रत्ययः, पूर्वपदस्य संहितायां दीर्घश्च।

## मत्सरः

माद्यन्ति हर्षन्ति यैस्ते। – ऋ०, १/१४/४

माद्यतीति मत्सरः असह्यपरसंपत्तिर्जनः कृपणः क्रुद्धो वा। – उ०को०, ३/७३

✓मदी – हर्षे + सरन् प्रत्ययः (कृधूमदिभ्यः कित् – उ०को० ३/७३)।

## मत्स्यः

माद्यन्ति हर्षन्ति यैस्ते। – ऋ०, १/१४/४

माद्यति हृष्यतीति मत्स्यः मीनो वा।
– उ०को०, ४/२

माद्यतीति मत्स्यः मीनो वा।
– उ०को०, ४/१०४

✓मदी – हर्षे + स्यः प्रत्ययः (जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्क्तिन्शक्स्यढडटोटचः – उ०को०, ४/१०४)।

## मथीः

या दुष्टान् मथ्नाति सः। – ऋ०, १/१२७/४

✓मथि – हिंसासंक्लेशनयोः अथवा ✓मथे – विलोडने + इन प्रत्ययः कित्वाद्दीर्घश्च।

## मथुरा

मथति विलोडयतीति मथुरा नगरी वा।
– उ०को०, १/३८

✓मथ – विलोडने + उरच् प्रत्ययः (मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् – उ०को० १/३८)।

## मदः

मदन्ति हर्षन्ति नैरोग्येण येनाऽसौ।
– ऋ०, १/१७५/१

माद्यन्ति हृष्यन्त्यानन्दन्ति यस्मिन् व्यवहारे तस्मिन्। – ऋ०, १/४६/१२

✓मदी – हर्षे + अप् प्रत्ययः (मदोऽपसर्गे – अष्टा०, ३/३/७६)।

## मदच्युतः

यौ मदान्हर्षान् च्यवेते प्राप्नुतस्तौ।
– ऋ०, १/८१/३

ये मदान् च्यवन्ते ते। – ऋ०, १/१२६/४

मद + ✓च्युतिर् – क्षरणे + क्विप् प्रत्ययः।

## मदयित्नुः

मादयतीति मदयित्नुः मदिरा वा।
– उ०को०, ३/२९

✓मदी – हर्षे + इत्नुच् प्रत्ययः, (स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् - उ०को०, ३/२९) णेरयादेशः (अयामन्ताल्वाय्येत्विष्णुषु – अष्टा०, ६/४/५५)।

## मदारः

माद्यति मत्तो भवतीति मदारः वराहो वा। – उ०को०, ३/१३४

✓मदी – हर्षे + आरन् प्रत्ययः (अङ्गिमदिमन्दिभ्य आरन् – उ०को० ३/१३४)।

## मदिन्तमः

मदयतीति मदी सोऽतिशयितः।
– यजु०, ६/२७

✓मदी – हर्षे + इनिः प्रत्ययः > मदिन् + तमप् प्रत्ययः नकारान्तादुत्तरस्य घसंज्ञकस्य नुडागमः छन्दसि (नाद् घस्य – अष्टा०, ८/२/१७)।

## मदिरा

माद्यति मत्तो भवति यया सा मदिरा सुरामद्यम्। – उ०को०, १/५१

✓मदी – हर्षेग्लेपनयोः + किरच् प्रत्ययः (इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१)।

## मद्गुः

मज्जति शुद्धो भवतीति मद्गुः जलप्लवी पक्षी वा। – उ०को०, १/७

✓मस्जो – शुद्धौ + उः प्रत्ययः, धातोः कुत्वं (न्यङ्क्वादीनाञ्च – अष्टा०, ७/३/५३) तथा सकारस्य दकारः (झलां जश् झषि – अष्टा०, ८/४/५२)।

## मद्गुरः

माद्यति हृष्यतीति मद्गुरः मत्स्यभेदो वा।
– उ०को०, १/४१

✓मदी – हर्षे + उरच् प्रत्ययः धातोः गुगागमश्च (मद्गुरादयश्च – उ०को०, १/४१)।

## मद्वा

माद्यतीति मद्वा कल्याणदातेश्वरो वा।
– उ०को०, ४/११३

✓मदी – हर्षे + वनिप् प्रत्ययः (स्नामदिपद्यर्तिपृशकिभ्यो वनिप् – उ०को०, ४/११३)।

## मद्रः

माद्यतीति मद्रः हर्षो देशभेदो वा।
– उ०को०, २/१३

✓मदी – हर्षे + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्–उ०को०, २/१३)।

## मद्रिक्

यो मद्रं काममञ्चति सः।
– ऋ०, १/१७७/१

यो मामञ्चति स मदभिमुखः।
– ऋ०, ६/३१/५

अस्मद् > मद् + ✓अञ्चु – गतिपूजनयोः + क्विप् प्रत्ययः सर्वनाम्नः टेरद्रिरादेशः (विष्वग्देवयोश्च टेरद्रयञ्चतौ व प्रत्यये – अष्टा०, ६/३/९१), ततः अञ्चतेः अकारलोपः छन्दसि।

## मद्यं

येन माद्यति हृष्यत्यानन्दति तम्।
– ऋ०, ६/६८/१०

(द्वि०ए०व०) – ✓मदी – हर्षे + यः प्रत्ययः।

## मधुः

मन्यन्ते विशेषेण जानन्ति यस्मिन् स मधुःचैत्रोमासः मधुको मद्यं क्षौद्र पुष्परसो वा। – उ०को०, १/१८

मन्यते बुध्यते यो येन वा तत् मधुः पवित्रद्रव्यं वा। – उ०को०, २/११६

१- ✓मन – ज्ञाने + उः प्रत्ययः, धातोः धकारादेश्च (फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च – उ०को०, १/१८)।

२- ✓मन – ज्ञाने + उसिः प्रत्ययः, धातोः धः छन्दसि (मनेर्धश्छन्दसि – उ०को०, २/११६)।

## मधुधा

या मधूनि दधाति। – ऋ०, ३/६१/५

मधु + ✓डुधाञ् – धारणपोषणयोः + कः प्रत्ययः ततः स्त्रियां टाप् प्रत्ययः।

## मधुपं

मधूनि जलानि पिबन्ति यैस्तैः।
– ऋ०, १/३४/१०

ये मधुरान् रसान् पिबन्ति तैः।
– ऋ०, ४/४५/३

यन्मधूनि पाति तम्। – ऋ०, ५/३२/८

मधु + ✓पा – रक्षणे पाने वा + कः प्रत्ययः।

## मधुला

मधुविद्या मधु लात्याददाति सा ।

– ऋ०, १/११९/१०

मधु + √ला – आदाने + क्विप् प्रत्ययः ।

## मधुषुत्

यो मधूनि मधुराणि सुनोति सः ।

– ऋ०, ४/३/३

मधु + √षुञ् – अभिषवे + क्विप् प्रत्ययः तुगागमश्च।

## मधुषुत्तमः

यो मधूनि सुनोति सोऽतिशयितः ।

– ऋ०, ३/५८/९

मधु + √षुञ् – अभिषवे + क्विप् प्रत्ययः, अतिशायने तमप् प्रत्ययश्च ।

## मधूकः

महतीति मधूकः वृक्षभेदो वा ।

– उ०को०, ४/४१

√मह – पूजायां + ऊकः प्रत्ययः धातोः हकारस्य धकारः ( उलूकादयश्च – उ०को०, ४/४१ ) ।

## मध्यं

मन्यते येन मध्यं द्वयोरन्तरालं वा ।

– उ०को०, ४/११२

√मन – ज्ञाने + यक् प्रत्ययः बाहुलकात् नस्य धः (अघ्न्यादयश्च – उ०को०, ४/११२) ।

## मध्यमवाट्

यो मध्ये पृथिव्यां भवान् पदार्थान् वहति सः । – ऋ०, २/२९/४

मध्यम + √वह् – प्रापणे + ण्विः प्रत्ययः ( वहश्च – अष्टा०, ३/२/६४ ) ।

## मध्वदः

ये मधूनि कर्मफलानि वाऽदन्ति ते ।

– ऋ०, १/१६४/२२

(प्र०ब०व०) – मधु + √अद् – भक्षणे + क्विप् प्रत्ययः ।

## मनः

मन्यते ज्ञायन्ते सर्वे व्यवहारा येनान्तःकरणेन तेन । – यजु०, २/२४

मननात्मकमन्तःकरणम् । – यजु०, २०/६

√मन – ज्ञाने + असुन् प्रत्ययः ।

## मनाका

मन्यते जानाति सा मनाका हस्तिनी वा ।

– उ०को०, ४/१४

√मन – ज्ञाने + आकः प्रत्ययः ( बलाकादयश्च – उ०को०, ४/१४), ततः स्त्रियां टाप् प्रत्ययः ।

## मनीषाः

ये मनांसि विज्ञानानीषन्ते ते ।

– ऋ०, १/६२/११

मनस् + √ईष – गतिहिंसादर्शनेषु + अङ् प्रत्ययः ( गुरोश्च हलः – अष्टा०, ३/३/१०३ ), ततः स्त्रियां टाप् प्रत्ययश्च ।

## मनुः

मन्यते येन ज्ञानेन तस्मै बोधाय ।

– यजु०, ५/१६

यो मन्यते स मनुः ।

– स० प्र० ( *प्रथमसमुल्लासः* )

मन्यते चराचरम् जगज्जानातीति मनुः ईश्वरः, मनुतेऽवबुध्यते शास्त्रमिति मनुर्विद्वान् राजर्षिः। – उ०को०, १/१०

√मन – ज्ञाने + उः प्रत्ययः ( शृस्वृस्निहित्रप्यसिवसिहनिक्लिदबन्धिमनिभ्यश्च – उ०को०, १/१० )।

## मनुर्हितः

मनुषो मननकर्त्तारो मनुष्यादयो हिता धृता

येन सः । – ऋ०, १/१४/११

विद्वद्भिः क्रियासिद्ध्यर्थे यो मन्यते हितो धृतो येन स हितकारी । – ऋ०, १/१३/४

मनुस् + √डुधाञ् – धारणपोषणयोः + क्तः प्रत्ययः धातोर्हिरादेशः ( दधातेर्हिः – अष्टा० ७/४/४२ ) ।

## मनुषः

मन्यन्ते जानन्ति ये सभ्याः मर्त्यास्ते ।

– ऋ०, १/२६/४

( प्र०ब०व० ) – √मनु – अवबोधने + उषच् प्रत्ययः बाहुलकात् ।

## मनोजाताः

ये मनसा विज्ञानेन जायन्ते ते ।

– यजु०, ४/११

( प्र०ब०व० ) – मनस् + √जनी – प्रादुर्भावे + क्तः प्रत्ययः ।

## मनोयुजः

मनस विज्ञानेन युज्यन्ते ते ।

– ऋ०, १/१४/६

से मनसा युज्यन्ते ते भृत्याः ।

– ऋ०, १/५१/१०

ये मनसा ब्रह्म युञ्जते ते । – ऋ०, ४/४८/४

ये मनसा सदसद् विज्ञानेन युञ्जन्ति योजयन्ति वा ते । – यजु०, ४/११

( प्र०ब०व० ) – मनस् + √युजिर् – योगे + क्विप् प्रत्ययः ( सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१ ) ।

## मन्ता

मन्यते जानात्यसौ मन्ता विद्वान् ।

– उ०को०, २/४९

√मन – ज्ञाने + तृन् प्रत्ययः ( बहुलमन्यत्रापि – उ०को०, २/४९ ) ।

## मन्तुः

मन्यते जानाति वा येन स मन्तुः अपराधो वा । – उ०को०, १/७३

√मन – ज्ञाने + तुः प्रत्ययः ( कमिमनिजनिगाभायाहिभ्यश्च – उ०को०, १/७३ ) ।

## मन्था:

मन्थयति विलोडयतीति मन्था ।

– उ०को०, ४/११

√मन्थ – विलोडने + इनिः प्रत्ययः ( मन्थः – उ०को०, ४/११ ), कित्वात् न लोपः आत्वञ्च ।

## मन्थिपाः

ये मन्थन्ति शत्रून् तान् वीरान् पान्ति ते ।

– यजु०, ७/१७

मन्थिन् + √पा – रक्षणे + कः प्रत्ययः ।

## मन्दनं

यो येन वा मन्दते स्तौति स्वपिति कामयते वा तत् मन्दनं स्तोत्रं वा ।

– उ०को०, २/८१

√मन्दि – स्तुतिमोदमदस्वप्नकान्तिगतिषु + क्युः प्रत्ययः ( कॄपॄवृजिमन्दिनिधाञः क्यु – उ०को०, २/८१ ) ।

## मन्दसानः

मन्दते स्तुत्यादिकं करोतीति मन्दसानः जीवोऽग्निर्वा । – उ०को०, २/८७

√मन्दि – स्तुतिमोदमदस्वप्नकान्तिगतिषु + असानच् प्रत्ययः ( ऋञ्जिवृधिमन्दिसहिभ्यः कित् – उ०को०, २/८७ ) ।

## मन्दकानि

बहुलवचनात् मन्यन्ते स्तूयन्ते तानि मन्दकानि स्रोतांसि वा । – उ०को०, ४/१३

√मन्दि – स्तुतिमोदमदस्वप्नकान्तिगतिषु + आकः प्रत्ययः बाहुलकात् ( खजेराकः – उ०को० ४/१३ )

नपुंसक बहुवचने मन्दकानि ।

## मन्दारः

मन्दते स्तौतीति मन्दारः निम्बतरुरर्कवृक्षो वा। – उ०को०, ३/१३४

✓मन्दि – स्तुतिमोदमदस्वप्नकान्तिगतिषु + आरन् प्रत्ययः (अङ्गिमदिमन्दिभ्य आरन् – उ०को०, ३/१३४) ।

## मन्दारुः

मन्दतेऽसौ मन्दारुः निम्बार्को वा ।

– उ०को०, ३/१३४

✓मन्दि – स्तुतिमोदमदस्वप्नकान्तिगतिषु + आरु प्रत्ययः बाहुलकात् ।

## मन्दिं

मन्दन्ति हर्षन्त्यस्मिन् तम् । – ऋ०, १/९/२

✓मन्दि – स्तुतिमोदमदस्वप्नकान्तिगतिषु + इनिः प्रत्ययः, धातोः नुमागमः (इदितो नुम् धातोः – अष्टा०, ७/१/५८) प्रत्ययस्य न लोपः छन्दसि ।

## मन्दिरं

मन्दते स्तुवन्ति स्वपन्ति वा यस्मिंस्तत् मन्दिरं गृहं नगरं वा । – उ०को०, १/५१

✓मन्दि – स्तुतिमोदमदस्वप्नकान्तिगतिषु + किरच् प्रत्ययः (इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१) ।

## मन्दुरा

मन्दते स्तौति माद्यति वा यस्यां वा मन्दुरा अश्वशाला वा । – उ०को०, १/३८

✓मन्दि – स्तुतिमोदमदस्वप्नकान्तिगतिषु + उरच् प्रत्ययः (मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् – उ०को०, १/३८) । ततः स्त्रियां टाप् प्रत्ययः।

## मन्द्रः

मन्दते स्तौतीति मन्द्रः गम्भीरध्वनिर्वा ।

– उ०को०, २/१३

✓मन्दि – स्तुतिमोदमदस्वप्नकान्तिगतिषु + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## मन्म

मन्यन्ते जानन्ति जना यैः पुरुषार्थैस्तैः ।

– ऋ०, १/२६/२

मन्यते जानाति येन तेन ।

– ऋ०, १/१४०/१

मन्यन्ते जानन्ति यैस्ते । – यजु०, ३/५३

यः मन्यते विजानाति तेन । – यजु०, १८/७५

✓मन – ज्ञाने + मनिन् प्रत्ययः ।

## मन्युः

मन्यन्तेऽभिमानं कुर्वन्ति यस्मिन् स मन्युः क्रोधो दुष्टाचरणेषु दुष्टेषु तद्भावनायाः।

– यजु०, २/३२

मन्यतेऽसौ मन्युः शोकः क्रोधो वा ।

– उ०को०, ३/२०

✓मन – ज्ञाने + युच् प्रत्ययः (यजिमनिशुन्धिदसिजनिभ्यो युच् – उ०को०, ३/२०) ।

## मन्युमीः

यो मन्युं मीनाति हिनस्ति सः ।

– ऋ०, १/१००/६

यो मन्युं मिनोति सः । – ऋ०, २/२३/४

मन्यु + ✓मीञ् – हिंसायां + क्विप् प्रत्ययः ।

## ममापतालः

मव्यति बध्नातीति ममापतालः बन्धनहेतुर्विषयो वा । – उ०को०, ५/५०

✓मव्य – बन्धने + आलः प्रत्ययः धातोः य लोपः

मादेशः अप्तुडागमश्च ( मव्यतेर्यलोपो मश्चापतुद् चालः – उ०को०, ५/५० ) ।

## मयटः

मयते प्राप्नोति यं स मयटः प्रासादो वा।
– उ०को०, ४/८१

✓मय – गतौ + अटन् प्रत्ययः ( शकादिभ्योऽटन् – उ०को०, ४/८१ ) ।

## मयन्दं

यन्मयं सुखं ददाति तत् । – यजु०, १४/९

मय( सुखनाम ) + ✓डुदाञ् – दाने + कः प्रत्ययः ।

## मयुः

मिनोति सुशब्दं प्रक्षिपतीति मयुः वानरो वा । – उ०को०, १/७

✓मिञ् – प्रक्षेपणे + उः प्रत्ययः ( भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः – उ०को०, १/७ ) ।

## मयूखः

मिमीते मान्यहेतुर्भवतीति मयूखः किरणः कान्तिः करो ज्वाला वा ।– उ०को०, ५/२५

✓माङ् – माने + ऊखः प्रत्ययः, माङ धातोः मयादेशः ( माङ ऊखो मय च – उ०को०, ५/२५ ) ।

## मयूरः

मीनाति हन्तीति मयूरः पक्षिविशेषो वा ।
– उ०को०, १/६७

✓मीञ् – हिंसायां + ऊरन् प्रत्ययः ( मीनातेरूरन् – उ०को०, १/६७ ) ।

## मयोभुः

परमं सुखं भवति यस्मात् तत् ।
– ऋ०, १/८९/४

मयः सुखं भवति यस्मात्तत् ।
– ऋ०, २/२७/५

यो मयांसि सुखानि भावयति तेन ।
– ऋ०, ३/१६/६

मयस् + ✓भू – सत्तायां + डुः प्रत्ययः ( डु प्रकरणे मितद्रुवादिभ्य उपसंख्यानम् – अष्टा०वा०, ३/२/१८० ) ।

## मयोभूः

मयः सुखं भावयति या सा ।
– ऋ०, १/११७/१९

या मयः सुखं भावयति तया सत्यप्रियमङ्गलकारिण्या । – यजु०, ३/४७

यो मय आनन्दं भावयति सः ।
– यजु०, १८/४५

या मयः सुखं भावयन्ति ताः ।
– यजु०, ३६/१४

यो मयः सुखं भावयति सः ।
– यजु०, ३८/५

मयस् + ✓भू – सत्तायां + क्विप् प्रत्ययः ( क्विप् च – अष्टा०, ३/२/७६ ) ।

## मरतः

म्रियते येन ( स ) मरतः मृत्युर्वा ।
– उ०को०, ३/११०

✓मृङ् – प्राणत्यागे + अतच् प्रत्ययः ( भृमृदृशियजिपर्विपच्यमितमिनमिहर्य्यिभ्योऽतच् – उ०को०, ३/११० ) ।

## मरिमा

म्रियत इति मरिमा मृत्युः ।
– उ०को०, ४/१४९

✓मृङ् – प्राणत्यागे + इमनिन् प्रत्ययः ( जनिमृङ्भ्यामिमनिन् – उ०को०, ४/१४९ ) ।

## मरीचिः

म्रियतेऽसौ मरीचिः दीप्तिर्महर्षि वा ।
– उ०को०, ४/७०

√मृङ् – प्राणत्यागे + ईचिः प्रत्ययः ( मृकणिभ्यामीचिः – उ०को०, ४/७० ) ।

## मरुकः

**म्रियते असौ मरुकः मृगो वा ।**

– उ०को०, ४/३९

√मृङ् – प्राणत्यागे + उकन् प्रत्ययः ( मृकणिभ्यामूकौकणौ – उ०को०, ४/३९ ) ।

## मरुत्

**म्रियते मारयति वा स मरुत् मनुष्यजातिः पवनो वा । – उ०को०, १/९४**

√मृङ् – प्राणत्यागे + उतिः प्रत्ययः ( मृग्रोरुतिः – उ०को०, १/९४ ) ।

## मर्कः

**मर्चति चेष्टतेऽसौ मर्कः शरीरवायुर्वा ।**

– उ०को०, ३/४३

√मर्च (सौत्रोधातु) – चेष्टायां शब्दार्थे च + कन् प्रत्ययः ( इण्भीकापाशल्यतिमर्चिभ्यः कन् – उ०को० ३/४३ ) ।

## मर्कटः

**मर्कतीति मर्कटः वानरो वा ।**

– उ०को०, ४/८१

√मर्क (सौत्रो धातुः) – गतौ कूर्दने च + अटन् प्रत्ययः ( शकादिभ्योऽटन् – उ०को०, ४/८१ ) ।

## मर्जूः

**मार्ष्टि शोधयतीति मर्जूः शुद्धिर्वा ।**

– उ०को०, १/८१

√मृजु – शुद्धौ + ऊः प्रत्ययः गुणश्च ( मृजेर्गुणश्च – उ०को०, १/८१ ) ।

## मर्त्तः

**म्रियतेऽसौ मर्त्तः मनुष्यो वा ।**

– उ०को०, ३/८६

√मृङ् – प्राणत्यागे + तन् प्रत्ययः ( हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६ ) ।

## मर्मरीकः

**म्रियतेऽसौ मर्मरीकः हीनजानो वा ।**

– उ०को०, ४/२०

√मृङ् – प्राणत्यागे + ईकन् प्रत्ययः धातोः द्वित्वं ( फर्फरीकादयश्च – उ०को०, ४/२० ) ।

## मलं

**यत् मृज्यते शोध्यते तत् मलं पुरीषं पापं कृपणः पुरुषो वा । – उ०को०, १/११०**

√मृजू – शौचालङ्कारयोः + कल प्रत्ययः, धातोः टिलोपश्च ( मृजेष्टिलोपश्च – उ०को०, १/११० )।

## मलयः

**मलते धरतीति मलयः पर्वतो वा ।**

– उ०को०, ४/९९

√मल – धारणे + कयन् प्रत्ययः ( वलिमलितनिभ्यः कयन् – उ०को०, ४/९९ ) ।

## मलिनः

**मलते धरतीति मलिनः मलयुक्तो वा ।**

– उ०को०, २/४९

√मल – धारणे + इनच् प्रत्ययः बाहुलकात् ( बहुलमन्यत्रापि – उ०को०, २/४९ ) ।

## मलिम्लवः

**ये मलिनाः सन्तो म्लोचन्ति गच्छन्ति ते ।**

– यजु०, ११/७९

(प्र०ब०व०) – मलिन् + √म्लुचु – गत्यर्थे + क्विप् प्रत्ययः ।

## मल्लिका

**मल्लते गन्धं धरतीति मल्लिका पुष्पजातिर्वा । – उ०को०, २/३२**

✓मल्ल – धारणे + क्वुन् प्रत्ययः बाहुलकात् धातोः इडागमश्च ( क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२ ) ।

## मल्लूरः

**मल्लते धरतीति मल्लूरः ।– उ०को०, ४/९०**

✓मल्ल – धारणे + ऊरः प्रत्ययः ( खर्जिविञ्जादिभ्य ऊरोलचौ – उ०को०, ४/९० ) ।

## मशर्शारस्य

**यो मशान् दुष्टान् शब्दान् शृणाति हिनस्ति तस्यः । – ऋ०, १/१२२/१५**

( ष०ए०व० ) – ✓मश – रोषकृते + असुन् प्रत्ययः > मशः अथवा मश + ✓शृ – हिसायां + अण् प्रत्ययः पृषोदरादिना पूर्वपदस्य रुगागमश्चेति ।

## मसिः

**मस्यति परिणमते स मसिः मसी पात्राञ्जनं वा । – उ०को०, ४/११८**

✓मसी – परिणामे + इन् प्रत्ययः ( सर्वधातुभ्य इन् – उ०को०, ४/११८ ) ।

## मसिनं

**मस्यति परिणमतीति मसिनं सुपिष्टं वा। – उ०को०, २/४९**

✓मसी – परिणामे + इनच् प्रत्ययः बाहुलकात् ( बहुलमन्यत्रापि – उ०को०, २/४९ ) ।

## मसुराः

**मस्यन्ति सुष्ठुतया परिणमन्ते ते मसुराः द्विदलविशेषाः । – उ०को०, १/४३**

✓मसी – परिणामे + उरन् प्रत्ययः ( मसेश्च – उ०को०, १/४३ ) ।

## मसूरः

**मस्यति परिणमतेऽसौ मसूरः ब्रीहिभेदो वा स्त्रियां टाप् वेश्या वा । – उ०को०, ५/३**

✓मसी – परिणामे + ऊरन् प्रत्ययः ( मसेरूरन् – उ०को०, ५/३ ) ।

## मस्तकं

**मस्यति परिणमतीति मस्तकं शिरो वा। – उ०को०, ३/१४८**

✓मसी – परिणामे + तकन् प्रत्ययः बाहुलकात् ( इष्यशिभ्यां तकन् – उ०को०, ३/१४८ ) ।

## मस्तुः

**मस्यति परिणमतीति मस्तुः दधनि निस्सृतमुदकं वा । – उ०को०, १/६९**

✓मसी – परिणामे + तुन् प्रत्ययः ( सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् – उ०को०, १/६९ ) ।

## महः

**महति पूजयति पूज्यो भवति वेति महः महद् वा । – उ०को०, ४/१८९**

✓मह – पूजायां + असुन् प्रत्ययः ( सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९ ) ।

## महत्

**महति पूजयति पूज्यते वा तत् महत् महान्। – उ०को०, २/८४**

✓मह – पूजायां + अति प्रत्ययः निपातनात् ( वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च – उ०को०, २/८४ ) ।

## महसं

**महतीति महसं ज्ञानं वा ।– उ०को०, ३/११७**

✓मह – पूजायां + असच् प्रत्ययः ( अत्यविचमितमिनमिरलिभिनभितपिपतिपनिपणिमहिभ्योऽसच् – उ०को०, ३/११७ ) ।

## महाधनं

**महान्ति धनानि यस्मिंस्तस्मिन् सङ्ग्रामे । – ऋ०, १/७/५**

महत् < महा + धनम् ।

## महानसं

महत्सम्पद्यते यत्र तद् महानसं पाकस्थानम्।
– उ०को०, ४/१८९

महत् < मह + √अन – प्राणने + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९)।

## महित्वं

मह्यते पूज्यते सर्वैः जनैरिति महिस्तस्य भावः। – ऋ०, १/८/५

महेर्महतो भावम्। – ऋ०, १/१६६/१

√मह – पूजायां + इन् प्रत्ययः > महि + त्वः (भावे) प्रत्ययः।

## महिनं

महति मह्यते पूज्यते वा तत् महिनं राज्यं वा। – उ०को०, २/५६

√मह – पूजायां + इनण् प्रत्ययः (महेरिनण् च – उ०को०, २/५६)।

## महिलः

यो महयति यं महयन्ति येन वा मह्यते पूज्यते स महिलः। – उ०को०, १/५४

√मह – पूजायां + इलच प्रत्ययः (सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् – उ०को०, १/५४)।

## महिषः

महति पूजयति स्वपुरुषार्थेन इति महिषः महान् राजा वा। – उ०को०, १/४५

√मह – पूजायां + टिषच् प्रत्ययः (अविमह्योष्टिषच् – उ०को०, १/४५)।

## मांसं

मन्यते ज्ञायतेऽनेन तत् मांसं शरीरोपचयो वा। – उ०को०, ३/६४

√मन – ज्ञाने + सः प्रत्ययः धातोः दीर्घश्च (मनेर्दीर्घश्च – उ०को०, ३/६४)।

## मांस्पचन्याः

मांसं पचन्ति यस्यां तस्याः।
– यजु०, २५/३६

(ष०ए०व०) – मांस + पचनी < √डुपचष् – पाके + ल्युट् प्रत्ययः अन्त्यलोपः (मांसस्य पाचयुड्घञोः – अष्टा०वा०, ६/१/१४४)।

## माः

यया मीयते सा। – यजु०, १४/१८

मिमीते येन स माः मासः वा।
– उ०को०, ४/१८९

√माङ् – माने + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९)।

## मातरिश्वा

यो मातर्याकाशे श्वसिति सोऽयं मातरिश्वा वायुस्तत्प्रकाशाय। – ऋ०, १/३१/३

यो मातर्यन्तरिक्षे श्वसिति स वायुः।
– ऋ०, १/७१/४

मातर्यन्तरिक्षे श्वसिति स वायुः।
– ऋ०, १/९६/४

यो मातर्यन्तरिक्षे श्वसिति। – ऋ०, ३/२/१३

यो मातरि श्वसिति। – ऋ०, ३/५/९

यो मातरि वायौ श्वसिति तम्।
– ऋ०, ३/२६/२

यो वायौ श्वसिति। – ऋ०, ३/२९/११

यो मातर्य्यन्तरिक्षे शेते सः वायुः।
– ऋ०, ६/८/४

मातरि अन्तरिक्षे श्वसिति आश्वनिति वा तस्य वायोः। – यजु०, १/२

यो मातर्य्यन्तरिक्षे श्वसिति सः।
– यजु०, ११/३९

मातरि श्वसिति जीवयति शेते वा स मातरिश्वा वायुर्वा। – उ०को०, १/१५९

मातरि (स०ए०व०) + √श्वस् – प्राणने अथवा

✓ टिओश्वि – गतिवृद्धयोः + कनिन् प्रत्ययः (श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्वन्मातरिश्वन्मघवन्निति – उ०को०, १/१५९)।

## माता

मान्यकरणहेतुः। – यजु०, २/१०

योमिमीते मानयति सर्वाञ्जीवान् स माता। – स० प्र० (प्रथमसमुल्लासः)

या मानयति सा माता। – स०प्र०(चतुर्थ समुल्लासः)

मानयति सत्करोतीति माता उत्पादिका वा। – उ०को०, २/९५

✓माङ् – माने + तृच् प्रत्ययः (नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ – उ०को०, २/९५)।

## मात्रा

मातीति मात्रा मानं भूषणं वा। – उ०को०, ४/१६८

✓माङ् – माने + त्रन् प्रत्ययः (हुयामाश्रुभसिभ्यस्त्रन् – उ०को०, ४/१६८), स्त्रियां टाप् प्रत्ययश्च।

## मानः

यो मान्यते सः। – ऋ०, ७/३३/१३

✓माङ् – माने + ल्युट् प्रत्ययः।

## मान्दाः

ये जनान् मन्दयन्त्यानन्दयन्ति त एव मान्दाः। – यजु०, १०/४

✓मन्दि – स्तुतिमोदमदस्वप्नकान्तिगतिषु + अच् प्रत्ययः > मान्द स्वार्थे अण् प्रत्ययश्च।

## माया

मात्यन्तर्भवतीति माया छलं मिथ्याजालो वा। – उ०को०, ४/१०९

✓मा – माने + यः प्रत्ययः (माछाशसिभ्यो यः – उ०को०, ४/१०९) स्त्रियां टाप् च।

## मायुः

यो मिनोति प्रक्षिपति स मायुः अथवा मिनोति प्रक्षिपत्यूष्माणमेति मायुः पित्तम्। – उ०को०, १/१

✓मिञ् – प्रक्षेपणे + उण् प्रत्ययः (कृवापाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१)।

## मार्जारः

मार्ष्टि शुन्धतीति मार्जारः विडालो वा। – उ०को०, ३/१३७

✓मृजूष् – शुद्धौ + आरन् प्रत्ययः (कञ्जिमृजिभ्यां चित् – उ०को० ३/१३७)।

## मार्जालीयः

मार्ष्टीति मार्जालीयः विडालो वा। – उ०को०, १/११६

✓मृजूष् – शुद्धौ + आलीयच् (स्थाचतिमृजेरालज्वालञालीयचः – उ०को०, १/११६)।

## मालतिः

मलते स्वरूपं धरतीति मालती। – उ०को०, ३/११०

मालयति गन्धं धारयतीति मालती सुमना वा चमेली। – उ०को०, ४/५९

✓मल – धारणे + अतिः प्रत्ययः बाहुलकात् धातोः उपधा दीर्घश्च (अमेरतिः – उ०को०, ४/५९) विकल्पे – स्त्रियां ङीप् प्रत्ययत्वात् > मालतीति।

## माला

माति मानहेतुर्भवतीति माला पुष्पादिस्रक्, माल क्षेत्रं मालो जनः। – उ०को०, २/२८

✓माङ् – माने + रन् प्रत्ययः प्रत्ययरेफस्य लत्वम्

(ऋजेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्र-शुक्लगौरवन्नेरामालाः – उ०को०, २/२८)।

## मासरं

येनाऽतिथयो मासेषु रमन्ते तत्।

– यजु०, १९/१४

मास – ✓रमु क्रीडायां + अच् प्रत्ययः।

## माहिनं

महति मह्यते पूज्यते वा तत् माहिनं महिनं राज्यं वा। – उ०को०, २/५६

✓मह – पूजायां + इनन् प्रत्ययः धातोः उपधायाः दीर्घश्च (महेरिनन् च – उ०को०, २/५६)।

## मितद्रुः

यो मितं द्रवति गच्छति सः।– ऋ०, ४/६/५

यो मितं शास्त्रसंमितं द्रवति प्राप्नोति सः।

– ऋ०, ७/७/१

ये मितं द्रवन्ति गच्छन्ति ते।

– ऋ०, ७/३८/७

ये मितं शास्त्रप्रमितं विषयं द्रवन्ति ते।

– यजु०, ९/१४

ये परिमितं द्रवन्ति गच्छन्ति ते।

– यजु०, ९/१६

ये मितं द्रवन्ति ते। – यजु०, २१/१०

मितं परिमितं द्रवतीति मितद्रुः शोभनगमनो वा। – उ०को०, १/३४

मितं (परिमितं) + ✓द्रु – गतौ + कुः प्रत्ययः निपातनात् (हरिमितयोर्द्रुवः – उ०को०, १/३४)।

## मित्रं

मेद्यति स्निह्यति स्निह्यते वा स मित्रः।

– स० प्र० (प्रथमसमुल्लासः)

मिनोति मान्यं करोतीति मित्रं सुहृद्वा।

– उ०को०, ४/१६४

✓ञिमिदा – स्नेहने + क्त्रः प्रत्ययः (अमिचिमिशसिभ्यः क्त्रः – उ०को०, ४/१६४) नित्यन्नपुंसकमिति।

## मित्रमहः

यो मित्राणि महति सत्करोति तत्सम्बुद्धौ।

– ऋ०, २/१/५

ये मित्राणि महन्ति सत्कुर्वन्ति।

– ऋ०, ४/४/१५

यो मित्राणि पूजयति सः। – ऋ०, ६/३/६

मित्राणि महयति पूजयति तत्सम्बुद्धौ।

– यजु०, २९/२५

मित्र + ✓मह – पूजायां + अच् प्रत्ययः।

## मित्रयुः

मित्रान् यातीति मित्रयुः लोकव्यवहारवित्।

– उ०को०, १/३७

मित्र + ✓या – प्रापणे + कुः प्रत्ययः निपातनात् (मृगय्वादयश्च – उ०को०, १/३७)।

## मित्रयुजः

ये मित्रैः सह युञ्जन्ति ते।

– ऋ०, १/१८६/८

(प्र०ब०व०) – मित्र + ✓युजिर् – योगे + क्विप् प्रत्ययः (सत्सूद्विषद्रुहयुजविदभिदच्छिदजिमीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१)।

## मिथस्तुरः

या मिथस्त्वरयन्ति ताः। – ऋ०, ७/२६/४

(प्र०ब०व०) – ✓मिषृ – मेधाहिंसनयोः + असुन् प्रत्ययः > मिथः + ✓ञित्वरा – सम्भ्रमे + क्विप् प्रत्ययः, त्वरणतोः अङ्गस्य अर्थात् वकारस्य ऊठादेशः (ज्वरत्वरश्रिव्यविमवामुपधायाश्च – अष्टा०, ६/४/२०), छन्दसि ऊकारस्य ह्रस्वश्च।

## मिथिला

मथ्यते या सा मिथिला मथ्यन्ते शत्रवो

यत्र स मिथिला विदेहानां राज्ञां नगरी वा । – उ०को०, १/५७

✓मिथ् – मेधाहिंसनयोः + इलच् प्रत्ययः निपातनात् (मिथिलादयश्च – उ०को०, १/५७) स्त्रियां टाप् प्रत्ययश्च ।

## मिथुनं

मेथति जानाति ज्ञायते हिनस्ति वा तत् मिथुनं द्वयोः संयोगे रात्रिर्वा ।

– उ०को०, ३/५५

✓मिथ् – मेधाहिंसनयोः + उनन् प्रत्ययः (क्षुधिपिशिमिथिभ्यः कित् - उ०को०, ३/५५) ।

## मियेधः

मिनोति प्रक्षिपत्यन्तरिक्षं प्रत्यग्नि द्वारा पदार्थांस्तत्संबुद्धौ । – ऋ०, १/२६/१

येन मिनोति दुःखं प्रक्षिपति सः ।

– ऋ०, ३/३२/१२

✓मिञ् – प्रक्षेपणे + एध प्रत्ययः बाहुलकात् ।

## मिश्रः

मेशति शब्दयतीति मिश्रः संयोगो वा ।

– उ०को०, २/१३

✓मिश – शब्देरोषकृते च + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को० २/१३) ।

## मिहं

मेहति सिञ्चति यया वृष्टया ताम् ।

– ऋ०, १/३२/१३

मेहति सिञ्चति यया तां वृष्टिम् ।

– ऋ०, १/३८/७

✓मिह – सेचने + कः प्रत्ययः (इगुपज्ञाप्रीकिर कः – अष्टा०, ३/१/१३५) ।

## मिहिरः

यो मेहयति सेचयति पृथिवीं मेघजलेन स मिहिरः सूर्य्यो वा । – उ०को०, १/५१

✓मिह – सेचने + किरच् प्रत्ययः (इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१) ।

## मीनः

मीनाति हिनस्तीति मीनः राश्यन्तरो मत्स्यो वा । – उ०को०, ३/३

✓मीञ् – हिंसायां + नक् प्रत्ययः (फेनमीनौ – उ०को०, ३/३) ।

## मीरः

मिनोति प्रक्षिपतीति मीरः समुद्रो वा ।

– उ०को०, २/१५

मिञ् – प्रक्षेपणे + क्रन् प्रत्ययः, धातोः दीर्घश्च (शुसिचिमीनां दीर्घश्च – उ०को०, २/२५) ।

## मीवः

मीनाति हिनस्तीति मीवः उदरकृमिर्वा ।

– उ०को०, १/१५४

✓मीञ् – हिंसायां + वन् प्रत्ययः निपातनात् (शेवायह्वजिह्वाग्रीवाऽप्वामीवाः – उ०को०, १/१५४)।

## मीवरः

माति मीनाति हिनस्ति वा स मीवरः हिंसको वा । – उ०को०, ३/१

✓मीञ् – हिंसायां + ष्वरच् प्रत्ययः (छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरलीवरगह्वरकट्वरसंयद्वराः – उ०को०, ३/१) ।

## मुकुरः

मङ्क्तेऽलङ्करोति येन स मकुरः दर्पणो वा । – उ०को०, १/४०

√मकि – मण्डने + उरच् प्रत्ययः निपातनात्, धातोरकारस्योकारः बाहुलकात् (मकुरदर्दुरौ – उ०को०, १/४०) ।

## मुक्तः

योे मुञ्चति मोचयति वा मुमुक्षून् स मुक्तो जगदीश्वरः ।

– स० प्र० (*प्रथमसमुल्लासः*)

√मुच्लृ – मोचने + क्तः प्रत्ययः धातोः चकारस्य कत्वम् ।

## मुक्षीजया

मुक्ष्या मुञ्जाया जायते सा मुक्षीजा तया।

– ऋ०, १/१२५/३

(तृ०ए०व०) – √मुच्लृ – मोचने + सः प्रत्ययः, धातोः चकारस्य कत्वं > मुक्षः + ङीप् प्रत्ययः स्त्रियां > मुक्षी + √जनी प्रादुर्भावे + डः प्रत्ययः (अन्येष्वपि दृश्यते – अष्टा०, ३/२/१०१) ।

## मुखं

खनत्यन्नादिकमनेनेति मुखं आस्यम् ।

– उ०को०, ५/२०

√खनु – अवदारणे + अल् प्रत्ययः, धातोर्मुडागमश्च तस्योदात्तत्वं (डित्खनेर्मुट चोदात्तः – उ०को०, ५/२०) ।

## मुचिरः

यो मुञ्चति स्वपदार्थमन्येभ्यो ददाति स मुचिरः दानशीलो वा । – उ०को०, १/५१

√मुच्लृ – मोचने + किरच् प्रत्ययः (इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१)।

## मुदः

मोदन्ते यासु ताः । – यजु०, १८/३८

(प्र०ब०व०) – √मुद – हर्षे + क्विप् प्रत्ययः ।

## मुदिरः

मोदतेऽसौ मुदिरः कामुको वा ।

– उ०को०, १/५१

√मुद – हर्षे + किरच् प्रत्ययः (इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१)।

## मुद्गः

मोदतेऽसौ मुद्गः अन्नभेदो वा ।

– उ०को०, १/१२८

√मुद – हर्षे + गक् प्रत्ययः (मुदिग्रोर्गग्गौ – उ०को०, १/१२८) ।

## मुद्गलः

मुद्गान् लाति गृह्णातीति मुद्गलो मुनिः यस्य गोत्रापत्यं मौदगल्यं इति प्रसिद्धम् ।

– उ०को०, १/१२८

मुद्ग + √ला – आदाने + कः प्रत्ययः ।

## मुद्रा

मोदन्ते हृष्यन्ति यया सा मुद्रा यन्त्रिता सुवर्णादि धातुमया वा ।– उ०को०, २/१३

√मुद – हर्षे + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## मुनिः

मन्यते जानातीति मुनिः मननशीलः ।

– उ०को०, ४/१२३

√मन – ज्ञाने + इन् प्रत्ययः धातोः उकारश्च (मनेरुच्च – उ०को०, ४/१२३) ।

## मुमुचानः

मुञ्चत्यसौ मुमुचानः मोचकः ।

– उ०को०, २/९३

✓मुच्लृ – मोचने + आनच् प्रत्ययः सन्वत्वात् धातोर्द्वित्वं (मुचियुधिभ्यां सन्वच्च – उ०को०, २/९३) ।

## मुष्कः

मुष्यत आव्रियत इति मुष्कः अण्डकोषः सङ्घातो वा । – उ०को०, ३/४१

✓मुस – संघाते खण्डने च + कक् प्रत्ययः (सृवृभूशुषिमुषिभ्यः कक् – उ०को०, ३/४१) ।

## मुष्टिहा

यो मुष्टिना हन्ति ।

– ऋ० ५/५८/४, ६/२६/२

✓मुष – स्तेये + क्तिच् प्रत्ययः > मुष्टि + ✓हन् – हिंसागत्योः + क्विप् प्रत्ययः ।

## मुसलः

मुस्यति खण्डयति मोषयति चोरयति वा स मुसलः मुषलो वा । मुसलमिति लोहाग्र भागिकुहनसाधनं, मुषलश्चौरो वा ।

– उ०को०, १/१०६

✓मुष – स्तेये एवं ✓मुस – खण्डने च + कल प्रत्ययः (वृषादिभ्यश्चित् – उ०को०, १/१०६) ।

## मुस्त्रं

मुस्यति खण्डयतीति मुस्त्रं नेत्रोदकं वा।

– उ०को०, २/१३

✓मुस – खण्डने + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## मुहिरः

मुह्यति यस्मै वा यो मुह्यति स मुहिरः काम्यः जनो वा । – उ०को०, १/५१

✓मुह – वैचित्ये + किरच् प्रत्ययः (इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१) ।

## मुहुः

मुह्यति भ्रान्तो भवतीति मुहुः पौनः पुन्येऽर्थेऽव्ययं वा । – उ०को०, २/१२०

✓मुह – वैचित्ये + उसिः प्रत्ययः (मुहेः किच्च – उ०को०, २/१२०) ।

## मुहूर्त्तं

हूर्च्छति कुटिलं भवतीति मुहूर्त्तं घटिकाद्वयकालो वा । – उ०को०, ३/८९

✓हुर्च्छी – कौटिल्ये + क्तः प्रत्ययः बाहुलकात्, धातोर्मुडागमः, छलोपश्च (राल्लोपः – अष्टा०, ६/४/२१) ।

## मुहेरः

मुह्यति विक्षिप्त इव भवतीति मुहेरः मूर्खो वा, मुह्यत्यनेन वृषभादिरिति वा मुहेरः कणमर्दनादौ वृषभमुखबन्धनम् । 'मुहेर' इत्येव भाषायां प्रसिद्धम् ।

– उ०को०, १/६१

✓मुह – वैचित्ये + एरक् प्रत्ययः (मूलेरादयः – उ०को०, १/६१) ।

## मूकः

मूयते बध्यतेऽसौ मूकः वचनवर्जितो वा।

– उ०को०, ३/४१

✓मूञ् – बन्धने + कक् प्रत्ययः बाहुलकात् (सृवृभूशुषिमुषिभ्यः कक् – उ०को०, ३/४१) ।

## मूत्रं

**मुच्यते यत्तत् मूत्रं प्रस्रावो वा।** –उ०को०, ४/१६३

✓मुचि – कल्पने मोचने च + ष्ट्रन् प्रत्ययः, धातोरूकारः चषकारयोः लोपश्च (सिविमुच्योष्टेरू च – उ०को०, ४/१६३)।

## मूर्खः

**मुह्यति विक्षिप्त इव भवतीति मूर्खः।**

– उ०को०, ५/२२

✓मुह – वैचित्ये + खः प्रत्ययः मुहधातोः मूरादेशश्च (मुहे खो मुर्च – उ०को०, ५/२२)।

## मूर्द्धा

**मुर्वति बध्नाति स मूर्द्धा शिरो वा।**

– उ०को०, १/१५९

✓मुवी – बन्धने + कनिन् प्रत्ययः निपातनात् (श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्य-रिज्वन्मातरिश्वन्मघवन्निति – उ०को०, १/१५९), उकारस्य दीर्घः वकारस्य धकारः, ततः टाप् प्रत्ययः स्त्रियाम्।

## मूलं

**मवते बध्नातीति मूलं इति प्रसिद्धम्।**

– उ०को०, ४/१०८

✓मूङ् – बन्धने + क्लः प्रत्ययः (मुशक्यविभ्यः क्लः – उ०को० ४/१०८)।

## मूलेरः

**यो मूलति सर्वोपरि तिष्ठति स मूलेरः भूपतिर्वा।** – उ०को०, १/६१

✓मूल – प्रतिष्ठायां + एरक् प्रत्ययः (मूलेरादयः – उ०को०, १/६१)।

## मूषिकः

**मुष्णाति पदार्थानिति मूषिकः आखुर्वा।**

– उ०को०, २/४२

✓मुष – स्तेये + किकन् प्रत्ययः, धातोर्दीर्घश्च (मुषेर्दीर्घश्च – उ०को०, २/४२)।

## मृगः

**यो मार्ष्टि सः।** – ऋ०, ५/७५/४

**यो मार्ष्ट्यन्विच्छति वधाय जीवानिति सः, ईश्वरपक्षे तुयो मार्ष्टि व्यवस्थापनाय जीवानिति सः।** – यजु०, ५/२०

**यो मार्ष्टि कस्तूर्या सः।** – यजु०, २९/४८

✓मृजूष् – शुद्धौ गत्यर्थे च + अच् प्रत्ययः। जकारस्य गत्वम्।

## मृगयुः

**मृगान् याति प्राप्नोतीति मृगयुः व्याधः।**

– उ०को० १/३७

मृग + ✓या – प्रापणे + कुः प्रत्ययः निपातनात् (मृगय्वादयश्च – उ०को०, १/३७)।

## मृडङ्कणः

**मृडति सुखयतीति मृडीकः सुखदाता मृडङ्कणः बालो वा।** – उ०को०, ४/२४

✓मृड – सुखने + कङ्कण् (मृडः कीकन्कङ्कणौ – उ०को०, ४/२४)।

## मृडीकः

**मृडति सुखयतीति मृडीकः सुखदाता मृडङ्कणः बालो वा।** – उ०को०, ४/२४

मृड – सुखने + कीकन् प्रत्ययः (मृडः कीकन्कङ्कणौ – उ०को०, ४/२४)।

## मृणालः

**मृणति हिनस्तीति मृणालः मृणालं पद्ममूलं वा।** – उ०को०, १/११८

✓मृण – हिंसायां + कालन् प्रत्ययः (तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् – उ०को०, १/११८)।

## मृतं

**म्रियते येन तत् मृतं याचितं भैक्ष्यं वा ।**

– उ०को०, ३/८८

✓मृङ् – प्राणत्यागे + तन् प्रत्ययः ( तनिमृङ्भ्यां किच्च – उ०को०, ३/८८ ) ।

## मृत्युः

**म्रियते इति मृत्युः शरीरवियोगो वा ।**

– उ०को०, ३/२१

✓मृङ् – प्राणत्यागे + त्युक् प्रत्ययः ( भुजिमृङ्भ्यां युक्त्युकौ – उ०को०, ३/२१ ) ।

## मृदङ्गः

**मृद्नाति यं स मृदङ्गः वाद्यभेदो वा ।**

– उ०को०, १/१२१

✓मृद – क्षोदे + अङ्गच् प्रत्ययः ( विडादिभ्यः कित् – उ०को०, १/१२१ ) ।

## मृदरः

**मुदं दृणातीति मृदरः व्याधिर्विलं वा ।**

– उ०को०, ५/४१

मृद् < मृ + ✓दृ – विदारणे + अच् प्रत्ययः ( कृदरादयश्च – उ०को०, ५/४१ ) ।

## मृदुः

**म्रदते म्रदितुं शक्यते स मृदुः मादकः कोमलं वा । – उ०को०, १/२८**

✓म्रद – मर्दने + कुः प्रत्ययः सम्प्रसारणञ्च ( प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च – उ०को०, १/२८ )।

## मृष्टः

**यो मर्षति मर्षयति वा । – यजु०, ५/३२**

✓मृष – तितिक्षायां, सहने, हिंसाक्लेशनयोश्च + क्तः प्रत्ययः बाहुलकात् ।

## मेचकः

**मचते शब्दयतीति मेचकः कृष्णवर्णो मयूरपक्षचिह्नं वा । – उ०को०, ५/३७**

✓मचि – कल्कने + वुन् प्रत्ययः धातोः उपधाया एत्वं ( पचिमच्योरिच्चोपधायाः – उ०को०, ५/३७ )।

## मेढ्रं

**मेहत्यनेन तदुपस्थेन्द्रियम् । – यजु०, ६/१४**

✓मिह – सेचने + ष्ट्रन् प्रत्ययः ( दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे – अष्टा०, ३/२/१८२ ) ।

## मेधाय

**यो मेहति सिञ्चति तस्मै । – यजु०, २२/२६**

( च०ए०व० ) – ✓मिह – सेचने + अच् प्रत्ययः।

## मेधिराः

**मे मेधन्ते शास्त्राणि ज्ञात्वा दुष्टान् हिंसन्ति ते । – ऋ०, १/११/७**

( प्र०ब०व० ) – ✓मेधृ – मेधाहिंसन सङ्गमेषु + किरच् प्रत्ययः बाहुलकात् ( इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१ ) ।

## मेनका

**यया मन्यते सा । – यजु०, १५/१६**

✓मन – ज्ञाने + अच् प्रत्ययः धातोरेत्वं ( नशिमन्योरलिटि – अष्टा०वा०, ६/४/१२० ) अथवा ✓मान – पूजायां + अङ् प्रत्ययः ( गुरोश्च हलः – अष्टा०, ३/३/१०३ ) धातोरुपधाया एत्वं छन्दसि > मेन + कन् प्रत्ययः स्वार्थे ततः स्त्रियां टाप् च।

## मेरुः

**मिनोति प्रक्षिपतीति मेरुः सुमेरुः पर्वतो वा । – उ०को०, ४/१०१**

✓मिञ् – प्रक्षेपणे + रुः प्रत्ययः, धातोः दीर्घश्च ( मीपीभ्यां रुः – उ०को०, ४/१०१ ) ।

## मेषः

**यो मिषति स्पर्द्धते सः । – यजु०, १९/९०**

✓मिष – स्पर्द्धायां + अच् प्रत्ययः ।

## मैनालं

**यो मैनं कामदेवमलति वारयति तं जितेन्द्रियम् ।** – यजु०, ३०/१६

मैन (कामदेव इतिनाम) – √अल – भूषणपर्याप्तिवारणेषु + अण् प्रत्ययः ।

## म्लानिः

**म्लायतीति म्लानिः आनन्दक्षयो वा ।**

– उ०को०, ४/५१

√म्लै – हर्षक्षयो + निः प्रत्ययः, बाहुलकात्, धातोः आत्वं (बहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् – उ०को०, ४/५१) ।

## यकृत्

**यजतीति यकृत् कालखण्डं वा ।**

– उ०को०, ४/५८

√यज – देवपूजासंगतिकरणदानेषु + ऋतिन् प्रत्ययः बाहुलकात् धातोः जकारस्य ककारः (शकेर्ऋतिन् – उ०को०, ४/५८) ।

## यक्ष्मः

**यक्षयते पूजयतीति यक्ष्मः राजरोगो वा ।**

– उ०को०, १/१४०

√यक्ष – पूजायां + मन् प्रत्ययः (अर्त्तिस्तुसुहुसृधृक्षिक्षुमायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०) ।

## यक्ष्मा

**यक्षयति पूजयतीति यक्ष्मा राजरोगो वा।**

– उ०को०, ४/१५१

√यक्ष – पूजायां + मनिन् प्रत्ययः बाहुलकात् (नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन् – उ०को०, ४/१५१) ।

## यजतः

**यजन्ति सङ्गच्छन्ते येन तस्य ।**

– ऋ०, ५/४४/१०

**यजतीति यजतः ऋत्विग्वा ।**

– उ०को०, ३/११०

√यज – देवपूजासंगतिकरणदानेषु + अतच् प्रत्ययः (भृमृदृशियजिपर्विपच्यमितमिनमिहर्य्यिभ्योऽतच् – उ०को०, ३/११०) ।

## यजत्रं

**इज्यते यजति वा तद् यजत्रं अग्निहोत्रं होता वा ।** – उ०को०, ३/१०५

√यज – देवपूजासंगतिकरणदानेषु + अत्रन् प्रत्ययः (अमिनक्षियजिवधिपतिभ्योऽत्रन् – उ०को०, ३/१०५) ।

## यजमानः

**यः परमेश्वरं सर्वोपकारं धर्मं च यजति तस्य विदुषः ।** – यजु०, १/१

**यजति विदुषः पूजयति सद्गुणान् सङ्गच्छते ददाति वा तस्मै ।** – यजु०, ५/१२

**ये यजन्ति ते विद्वांसः ।** – यजु०, ११/३२

**यो यजति देवान् विदुषः सत्करोति सङ्गच्छते सुखानि ददाति वा तस्य ।**

– यजु०, २२/२२

√यज – देवपूजासंगतिकरणदानेषु + शानन् प्रत्ययः (पूङ्यजोः शानन् – अष्टा०, ३/२/१२८) ।

## यजिः

**यजतीति यजिः सङ्गन्ता होता वा ।**

– उ०को०, ४/११८

√यज – देवपूजासंगतिकरणदानेषु + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

## यजिष्ठः

**अतिशयेन यष्टा संगन्ता ।**

– ऋ०, १/१२८/१

√यज – देवपूजासङ्गतिकरणदानेषु + इष्ठन् प्रत्ययः।

## यजुः

यजन्ति तेन तस्मै प्रति यजुर्वेदम् ।

– यजु०, १/३०

यजति येन स यजुर्वेदः । – यजु०, १८/२९

यजति येन तद् यजुः वेदविशेषो वा ।

– उ०को०, २/११७

✓यज – देवपूजासंगतिकरणदानेषु + उसिः प्रत्ययः (अर्तिपृवपियजितनिधनितपिभ्यो नित् – उ०को०, २/११७) ।

## यज्युः

यजतीति यज्युः अध्वर्युर्वा।– उ०को०, ३/२०

✓यज – देवपूजासंगतिकरणदानेषु + युच् प्रत्ययः (यजिमनिशुन्धिवदसिजनिभ्यो युच् – उ०को०, ३/२०) ।

## यज्ञः

यष्टुं सङ्गन्तुमर्हः । – ऋ०, १/१६४/३५

यजति सङ्गच्छते येन तम्।– ऋ०, १/१७०/४

यो यजति सत्येन सङ्गच्छते ।

– ऋ०, ६/४०/१

इज्यते यस्मिन् सः । – यजु०, १/२३

यो यजति सङ्गच्छते स यज्ञो गृहस्थस्तत्सम्बुद्धौ । – यजु०, ८/२२

यो यजति विद्वद्भिरिज्यते वा स यज्ञः ।

– स० प्र० (प्रथमसमुल्लासः)

✓यज – देवपूजासंगतिकरणदानेषु + नङ् प्रत्ययः (यजयाचयतविच्छप्रच्छरक्षो नङ् – अष्टा०, ३/३/९०) ।

## यज्ञनीः

यज्ञं त्रिविधं नयति प्रापयतीति सः ।

– ऋ०, १/१५/१२

यज्ञं नयति प्रापयतीति यज्ञनीयस्तम् ।

– यजु०, २/६

यज्ञ + ✓णीञ् – प्रापणे + क्विप् प्रत्ययः (सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१) ।

## यज्ञप्रीः

यो यज्ञं प्राति पूरयति सः ।

– यजु०, २६/३१

यज्ञ + ✓प्रा – प्रपूरणे + क्विप् प्रत्ययः धातोः आकारस्य इत्वमिति ।

## यज्ञवाहसं

या यज्ञं परमेश्वरोपासनं शिल्पविद्यासिद्धं वा वहति प्रापयति ताम् । – यजु०, ४/११

यज्ञान् सङ्गतान् राजधर्मादीन् वहति यस्मिन् राज्ये तस्मिन् । – यजु०, ९/३७

यज्ञ + ✓वह – प्रापणे + असुन् प्रत्ययः ।

## यतिः

यततेऽसौ यतिः नियमधारी संन्यासी वा।

– उ०को०, ४/११८

✓यती – प्रयत्ने + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

## यद्

यजति सर्वैः पदार्थैः सङ्गतो भवतीति यद् । – उ०को०, १/१३२

✓यज – देवपूजासंगतिकरणदानेषु + अदिः प्रत्ययः, डित्वात् जकारलोपः (त्यजितनियजिभ्यो डित् – उ०को०, १/१३२) ।

## यन्तारः

ये यान्ति प्राप्नुवन्ति ते । – ऋ०, ७/१६/७ (प्र०ब०व०) – ✓यमु – उपरमे + तृच् प्रत्ययः ।

## यन्त्रं

यन्त्र्यते यन्त्रयन्ति सङ्कोचयन्ति विलिखन्ति चालयन्ति वा येन तत् । – ऋ०, १/३४/१

यन्त्रयति सङ्कुचयति चालयति निबध्नाति वा येन तत् । – यजु०, ४/१८

यच्छति उपरमति येन तद् यन्त्रं कलातिशेषो कलाविशेषो वा ।

– उ०को०, ४/१६७

✓यमु – उपरमे + त्रः प्रत्ययः ( गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः – उ०को०, ४/१६७ ) ।

## यमाः

ये दुष्टान् यच्छन्ति निगृह्णन्ति ते यमाः न्यायाधीशाः । – स०प्र०( चतुर्थ समुल्लासः )

✓यमु – उपरमे + अच् प्रत्ययः ।

## यमसूः

या यमं सूर्य्यं सूते सा विद्युत्।– ऋ०, ३/३९/३

या यमान् नियन्तॄन् सूते ताम्।– यजु०, ३०/१५

यम + ✓षूङ् – प्राणिगर्भविमोचने + क्विप् प्रत्ययः।

## यमुना

यच्छतीति यमुना नदी भेदो वा ।

– उ०को०, ३/६१

✓यमु – उपरमे + उनन् प्रत्ययः ( अजियमिशीङ्भ्यश्च – उ०को०, ३/६१ ) । तत् स्त्रियां टाप् प्रत्ययश्च।

## ययीः

याति प्रापयति स ययीः अश्वो वा ।

– उ०को०, ३/१५९

✓या – प्रापणे + ईः प्रत्ययः द्वित्वञ्च ( यापोः किद् द्वे च – उ०को०, ३/१५९ ) ।

## ययुः

यो याति सः। – यजु०, २२/१९

यान्ति प्राप्नुवन्ति देशान्तरमनेनेति ययुः अश्वो वा । – उ०को०, १/२१

✓या – प्रापणे + कुः प्रत्ययः धातोः द्वित्वञ्च ( यो द्वे च – उ०को०, १/२१ ) ।

## यवनः

यौति मिश्रयत्यमिश्रयति वा स यवनः म्लेच्छभेदो वा । – उ०को०, २/७४

✓यु – मिश्रणामिश्रणयोः + युच् प्रत्ययः ( सुयुरुवृञो युच् – उ०को०, २/७४ ) ।

## यवागूः

यौति मिश्रयतीति यवागूः दुग्धे पक्वयवचूर्णं वा । – उ०को०, ३/८१

✓यु – मिश्रणामिश्रणयोः + आगूच् प्रत्ययः ( सृयुवचिभ्योऽन्युजागूजक्नुचः – उ०को०, ३/८१ ) ।

## यवाशिरं

यो यवानश्नाति तम् । – ऋ०, २/२२/१

यवा अश्यन्ते यस्मिन् तम् । – ऋ०, ३/४२/७

यव (अन्ननाम) – ✓अश् – भोजने + किरच् प्रत्ययः ( अशेर्नित् – उ०को०, १/५२ ) ।

## यवासः

यौति मिश्रयतीति यवासः कण्टकवृक्षभेदो वा । – उ०को०, ४/२

✓यु – मिश्रणामिश्रणयोः + आसः प्रत्ययः ( ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्णुजिष्ठजिसन्स्यनिथिन्नुल्यसासानुकः – उ०को०, ४/२ ) ।

## यविष्ठ्य

यो वेगेन पदार्थान् यौति संयुनक्ति संहतान् भिनत्ति वा स युवातिशयेन युवा यविष्ठो

यविष्ठ एव यविष्ठयस्तत्सम्बुद्धौ ।

– ऋ०, १/३६/६

युवन् + इष्ठन् प्रत्ययः > यविष्ठ + स्वार्थे यत् प्रत्ययः (नवसूर्त्तमर्त्तयविष्ठेभ्यो यत् – अष्टा०वा०, ५/४/३६)।

## यशः

अश्यते दीव्यते क्रीडादि क्रियते येन तत् यशः कीर्तिर्वा । – उ०को०, ४/१९१

✓अश – क्रीडाविजिगीषव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु अथवा ✓अशूङ् – व्याप्तौ + असुन् प्रत्ययः धातोः युडागमश्च (अशेर्देवने युट् च – उ०को०, ४/१९१)।

## यष्टिः

यजतीति यष्टिः यष्टी वा काष्ठदण्डो वा । – उ०को०, ४/१८०

✓यज – देवपूजासङ्गतिकरणदानेषु + तिः प्रत्ययः बाहुलकात् जकारस्य षकारः (वसेस्तिः – उ०को०, ४/१८०)।

## यह्वः

यजतीति यह्वः यजमानो वा ।

– उ०को०, १/१५४

✓यज – देवपूजासङ्गतिकरणदानेषु + वन् प्रत्ययः निपातनात्, जकारस्य हकारः (शेवायह्वजिह्वाग्रीवाऽप्वामीवा – उ०को०, १/१५४)।

## याजिः

यजतीति याजिः यष्टा वा ।

– उ०को०, ४/१२५

✓यज – देवपूजासङ्गतिकरणदानेषु + इञ् प्रत्ययः धातोः दीर्घश्च (वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् – उ०को०, ४/१२५)।

## याता

यततेऽसौ याता भ्रातृणां भार्याः परस्परं यातारो भवन्ति । – उ०को०, २/९७

✓यती – प्रयत्ने + तृच् प्रत्ययः धातोर्वृद्धिश्च (यतेर्वृद्धिश्च – उ०को०, २/९७)।

## यातुः

याति प्रापयतीति यातुः अध्वगः कालो वा । – उ०को०, १/७३

✓या – प्रापणे + तुः प्रत्ययः (कमिमनिजनिगाभयाहिभ्यश्च – उ०को०, १/७३)।

## यातुधानः

यातवो यातनाः पीडा धीयन्ते येषु तान् दस्यून् । – ऋ०, १/३५/१०

यातूनि दुराचरणशीलानि दधति ताः ।

– ऋ०, १/१११/८

ये यान्ति परपदार्थान् दधति तेषाम् ।

– यजु०, १३/७

यान्ति येषु ते यातवो मार्गाः तेभ्योः धनं येषान्तेभ्यः प्रवृत्तम् । – यजु०, ३०/८

यातु + ✓डुधाञ् – धारणपोषणयोः + ल्युट् प्रत्ययः।

## यातुमावतः

यान्ति प्राप्नुवन्ति ये यातवः मत्सदृशा इति मावन्तः। यातवश्च ते मावन्तश्च तान् । – ऋ०, १/३७/२०

(द्वि०ब०व०) – यातु + अस्मत् + वतुप् प्रत्ययः (वतुप् प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् – अष्टा०वा०, ५/२/३९), आकारादेशः (आसर्वनाम्नः – अष्टा०, ६/३/९१) मपर्यन्त स्यास्मदः मादेशः (प्रत्ययोत्तरपदयोश्च – अष्टा०, ७/२/९८)।

## यात्रा

ययात इति यात्रा गमनं वा।– उ०को०, ४/१६८

√या – प्रापणे + त्रन् प्रत्ययः ( हुयामाश्रुभसिभ्यस्त्रन् – उ०को०, ४/१६८ ), स्त्रियां टाप् प्रत्ययश्च ।

## यानान्

**यान्ति येषु तान् । – यजु०, २९/२६**

( द्वि०ब०व० ) – √या – प्रापणे + ल्युट् प्रत्ययः।

## यामः

**यान्ति गच्छति येन स यामो रथः ।**
**– ऋ०, १/३४/१**

**यान्ति येषु मार्गेषु तेषु । – ऋ०, १/८७/३**

**यो याति सः । – ऋ०, ४/५१/४**

**यान्ति येन यानेन तस्मिन् । – यजु०, ११/१३**

**यायते प्राप्यते स यामः प्रहरो वा ।**
**– उ०को०, १/१४०**

√या – प्रापणे + मन् प्रत्ययः ( अर्त्तिस्तुसुहूसृधृ-क्षिक्षुभायावपदियक्षिनीभ्यो मन् – उ०को०, १/१४० )।

## यामन्

**यति गच्छति प्राप्नोति स यामा तस्मि-न्नस्मिन् संसारे । – ऋ०, १/३३/२**

**यान्ति गच्छन्ति यस्मिन्मार्गे । – ऋ०, ३/२/१४**

**यान्ति यस्मिँस्तस्मिन्वर्त्तमाने समये ।**
**– ऋ०, ७/३२/२६**

**यान्ति येन यस्मिन् वा तस्मिन् ।**
**– ऋ०, ७/५८/२**

√या – प्रापणे + मनिन् प्रत्ययः बाहुलकात् ( आतो मनिन्क्वनिब्वनिपश्च – अष्टा०, ३/२/७४ ) ।

## यामिः

**याति कार्याणि प्रापयतीति यामिः ।**
**– उ०को०, ४/४३**

√या – प्रापणे + मिः प्रत्ययः बाहुलकात् ( नियोमिः – उ०को०, ४/४३ ) ।

## यावयद्द्वेषाः

**यवयन्ति दूरीकृतानि द्वेषांस्यप्रियकर्माणि यया सा । – ऋ०, १/११३/१२**

√यु – मिश्रणामिश्रणयोः + शतृ प्रत्ययः + √द्विष – अप्रीतौ + असुन् प्रत्ययः ।

## यावसः

**यौति मिश्रयत्यमिश्रयति वा स यावसः तृणसन्ततिर्वा । – उ०को०, ३/११९**

√यु – मिश्रणामिश्रणयोः + असच् प्रत्ययः ( वहियुभ्यां णित् – उ०को०, ३/११९ ) ।

## युग्मं

**युज्यते तत् युग्मम् । – उ०को०, १/१४६**

√युजिर् – योगे + मक् प्रत्ययः जकारस्य गकारः ( युजिरुचितिजां कुश्च – उ०को०, १/१४६ ) ।

## युजं

**प्रियस्य यो युनक्ति स युक् सखा तस्य सख्युः । – ऋ०, १/१०/९**

**युज्यन्ति व्याप्त्या सर्वान् पदार्थान् ते युजो दिक्कालाकाशादयस्तत्र भवः ।**
**– ऋ०, १/२२/१९**

**यो युनक्ति मुहूर्त्तादि कालावयवः पदार्थैः सह तेन संयुक्ताः सन्तः । – ऋ०, १/२३/९**

**यो युज्यते तम् । – ऋ०, १/३३/१०**

**ये युञ्जते तान् । – ऋ०, ४/३२/६**

**यो न्यायेन युनक्ति तेन । – ऋ०, ७/३१/६**

√युजिर् – योगे + क्विप् प्रत्ययः ।

## युधः

**यो योधयति तेन । – ऋ०, १/५३/७**

**युध्यन्ति यस्मिन् सङ्ग्रामे तस्मै ।**
**– ऋ०, १/६१/१३**

**ये युध्यन्ते ते । – यजु०, १७/३४**

योऽ युध्यते सः । – यजु०, १७/३५

✓युधि – सम्प्रहारे + कः प्रत्ययः ।

## युधानः

युध्यतेऽसौ युधानः शत्रुर्वा । – उ०को०, २/९०

✓युधि – सम्प्रहारे + आनच् प्रत्ययः ( युधिबुधिदृशः किच्च – उ०को०, २/९० ) ।

## युध्मः

युध्यते यो येन वा स युध्मः वाणो वा ।

– उ०को०, १/१४५

✓युधि – सम्प्रहारे + मक् प्रत्ययः ( इषियुधीन्धिद-सिश्याधूसूभ्यो मक् – उ०को०, १/१४५ ) ।

## युयुधानः

युध्यतेऽसौ युयुधानः योद्धा ।

– उ०को०, २/९३

✓युधि – सम्प्रहारे + आनच् प्रत्ययः सन्वत्वात् द्वित्वं ( मुचियुधिभ्यां सन्वच्च – उ०को०, २/९३ ) ।

## युवा

यौति मिश्रयति पदार्थैः सह पदार्थान् वियोजयति वा । – ऋ०, १/१२/६

यौति मिश्रयत्यमिश्रयति वा स युवा मध्यावस्थक तरुणो जनो वा ।

– उ०को०, १/१५६

✓यु – मिश्रणामिश्रणयोः + कनिन् ( कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः – उ०को०, १/१५६ ) ।

## युवाकुः

यो यावयति मिश्रयति संयोजयति सर्वाभि-र्विद्याभिः सह जनान् सः।– ऋ०, १/१२०/३

ये युवां कामयन्ते ते । – यजु०, ३३/५८

✓यु – मिश्रणामिश्रणयोः + काकुः प्रत्ययः बाहुलकात् ( कठिकुषिभ्यां काकुः – उ०को०, ३/७७ ) धातोरङ्गस्य उवङादेशश्च ।

## युष्मद्

योषति सेवतेऽसौ युष्मद् ।

– उ०को०, १/१३९

✓युष( सौत्रधातु ) – सेवनार्थे + मदिक् प्रत्ययः ( युष्यसिभ्यां मदिक् – उ०को०, १/१३९ ) ।

## यूका

यौतीति यूका शिरः केशजन्तूर्वा ।

– उ०को०, ३/४७

✓यु – मिश्रणामिश्रणयोः + कन् प्रत्ययः, धातोः दीर्घश्च – उ०को०, ३/४७ ) स्त्रियां टाप् प्रत्ययश्च।

## यूथः

यौति मिश्रयत्यमिश्रयति वा स यूथः समुदायो वा । – उ०को०, २/१२

✓यु – मिश्रणामिश्रणयोः + थक् प्रत्ययः निपातनात् ( तिथपृष्ठगूथयूथप्रोथाः – उ०को०, २/१२ ), धातोः दीर्घश्चेति ।

## यूपः

यौति मिश्रयतीति यूपः यज्ञशालास्तम्भो वा । – उ०को०, ३/२७

✓यु – मिश्रणामिश्रणयोः + पः प्रत्ययः ( कुयुभ्यां च – उ०को०, ३/२७ ) ।

## यूपवाहाः

ये यूपं वहन्ति प्रापयन्ति । – ऋ०, १/१६२/६

ये यूपं वहन्ति ते । – यजु०, २५/२९

( प्र०ब०व० ) – यूप + ✓वह – प्रापणे + अण् प्रत्ययः ।

## यूपव्रस्काः

यूपाय स्तम्भाय ये वृश्चन्ति ते ।

– ऋ०, १/१६२/६

(प्र०ब०व०) – युप + ✓ओव्रश्चू – छेदने + क्विप् प्रत्ययः, चकारस्य कुत्वञ्च ।

## योगः

युज्यते यस्मिन् सः । – ऋ०, १/३४/९

युञ्जते यस्मिन् । – यजु०, ११/१४

युञ्जन्ति यस्मिंस्तस्मै । – यजु०, ३०/१४

युज्यते स योगः समाधिः कालो वा ।

– उ०को०, ४/२१६

✓युजिर् – योगे + घञ् प्रत्ययः अथवा ✓युजिर् – योगे + असुन् प्रत्ययः जकारस्य गत्वं, (अञ्च्यञ्जियुजिभृजिभ्यः कुश्च – उ०को०, ४/२१६) ।

## योजना

युज्यन्ते सर्वाणि वस्तूनि येषु भुवनेषु तानि योजनानि । – ऋ०, १/३५/८

✓युजिर् – योगे + ल्युट् प्रत्ययः शस् इत्यस्य छन्दसि बाहुलकेन लोपत्वं (शेश्छन्दसि–अष्टा०, ६/१/७०)।

## योनिः

मिश्रयामि अग्नौ प्रक्षिप्य नियोजयामि वा। – यजु०, १/२२

युवन्ति यस्यां सा योनिर्गृह जन्मान्तरं वा तस्याम् । – यजु०, २/२०

यौति संयोजयति पृथक् करोति वा स योनिः कारणमुपस्थेन्द्रियं वा ।

– उ०को०, ४/५१

✓यु – मिश्रणामिश्रणयोः + निः प्रत्ययः, (बहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्–उ०को०, ४/५१)।

## योषाः

यौतीति योषाः स्त्री वा ।– उ०को०, ३/६२

✓यु – मिश्रणामिश्रणयोः + सः प्रत्ययः (वृतृवदिवचिवसिहनिकमिकषिभ्यः सः – उ०को०, ३/६२) ततः स्त्रियां टाप् च ।

## योषित्

जुष्यते सेव्यते प्रीणयति वा सा योषित् स्त्री वा । – उ०को०, १/९७

✓युष – (सौत्रधातुः) < ✓जुष – प्रीतिसेवनयोः (वर्णविकारोऽत्र) + इतिः प्रत्ययः धातोः ओत्वञ्च (हृसृरुहियुषिभ्य इतिः – उ०को०, १/९७) ।

## रंहः

रमते येन तत् रंहः वेगो वा ।

– उ०को०, ४/२१४

✓रमु – क्रीडायां + असुन् प्रत्ययः हुगागमश्च (रमेश्च – उ०को० , ४/२१४) ।

## रक्षः

अन्यान् प्रपीड्य स्वात्मानमेव ये रक्षन्ति ते । – यजु०, ३४/५१

रक्षतीति रक्षः पालको दुष्टो वा ।

– उ०को०, ४/१८९

✓रक्ष – पालने + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) ।

## रक्षोहा

यथा येन धार्मिकेण पुरुषेण रक्षांसि हन्यन्ते तथा । – यजु०, ५/२३

यान् रक्षांसि दुष्टान् हन्ति सः ।

– यजु०, ५/२४

यथा यूयं रक्षांसि दुष्टान् दस्व्वादीन् हथ तथा तान् । – यजु०, ५/२५

यथा यूयं ये रक्षांसि दुःखानि हथ तथा।

– यजु०, ५/२५

यो दुष्टानां रोगाणां हन्ता ।– यजु०, १२/८०

यो रक्षांसि दुष्टान् हन्ति सः।– यजु, १७/३६

यो रक्षांसि दुष्टान् प्राणिनो हन्ति सः ।

– यजु०, २६/२६

रक्षस् + ✓हन् – हिंसागत्योः + क्विप् प्रत्ययः ।

## रघुद्रवः

ये रघून्यास्वादनीयान्यन्नानि द्रवन्ति ते ।

– ऋ०, १/१४०/४

ये रघु लघु द्रवन्ति गच्छन्ति ते ।

– यजु०, १५/४२

(प्र०ब०व०) – रघु < लघु + ✓द्रु – गतौ + क्विप् प्रत्ययः ।

## रघुपत्मजहाः

यो लघुपतनं जहाति सः । – ऋ०, ६/३/५

लघु – (रलयोरभेदत्वात्) > रघु + ✓पत्लृ – गतौ + मन् प्रत्ययः (अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०) > रघुपत्म + ✓ओहाक् – त्यागे, धातोः द्वित्वञ्च (जहातेर्द्वे च – उ०को०, २/३४) ततः क्विप् प्रत्ययश्च ।

## रघुपत्वानः

ये रघून् पथः पतन्ति ते । – ऋ०, १/८५/६

(प्र०ब०व०) – रघु < लघु + ✓पत्लृ – गतौ + वनिप् प्रत्ययः ।

## रघुष्यद्

ये मार्गान् स्यन्दते ते । – ऋ०, १/८५/६

ये रघुषु स्यन्दन्ते । – ऋ०, १/१४०/४

यो रघु लघु स्यन्दति तम् । – ऋ०, ३/२६/२

या लघु स्यन्दति सा । – ऋ०, ५/७३/५

रघु < लघु + ✓स्यन्दू – प्रस्रवणे + क्विप् प्रत्ययः ।

## रङ्कः

रमतेऽसौ रङ्कः कृपणो मन्दो वा ।

– उ०को०, ३/४०

✓रमु – क्रीडायां + कः प्रत्ययः बाहुलकात् (कृदाधारार्चिकलिभ्यः कः – उ०को०, ३/४०) ।

## रजः

रजति तत् रजः लोकः सूक्ष्म धूलिः स्त्री पुष्पं गुणो वा । – उ०को०, ४/२१७

✓रञ्ज – रागे + असुन् प्रत्ययः, (भूरञ्जिभ्यां कित् – उ०को०, ४/२१७) धातोरनुनासिकलोपः (रजकरजनरजस्सूपसंख्यानम्–अष्टा०वा०, ६/४/२४)।

## रजकः

रजतीति रजकः वस्त्रशोधको वा ।

– उ०को०, २/३२

✓रञ्ज – रागे + क्वुन् प्रत्ययः (क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२) धातोरनुनासिकलोपः (रजकरजनरजस्सूपसंख्यानम् – अष्टा०वा०, ६/४/२४) ।

## रजतं

रजति प्रियं भवतीति रजतं रुप्यं शुक्लं वा । – उ०को०, ३/१११

✓रञ्ज – रागे +, अतच् प्रत्ययः (पृषिरञ्जिभ्यां कित् – उ०को०, ३/१११) धातोरनुनासिकलोपश्च।

## रजनं

रजति वस्त्राण्यनेन तत् रजनं कुसुम्भं वा स्त्रियां ङीष् रजनी हरिद्रा वा ।

– उ०को०, २/७९

✓रञ्ज – रागे + क्युन् प्रत्ययः ( रञ्जेः क्युन् – उ०को०, २/७९ )धातोरनुनासिकलोपः ( रजकरजनरजस्सुपसंख्यानम् – अष्टा०वा०, ६/४/२४ ) ।

## रजनिः

**रजतीति रजनिः रात्रिर्वा । – उ०को०, २/१०२**

✓रञ्ज – रागे + अनिः प्रत्ययः बाहुलकात् ( अर्त्तिसृधम्यम्यश्यवितृभ्योऽनिः – उ०को०, २/१०२ ) धातोरनुनासिकलोपः ( रजकरजन रजस्सुपसंख्यानम् – अष्टा०वा०, ६/४/२४ ) ।

## रजःशया

**या रजःसु सूर्यादि लोकेषु शेते सा ।**

**– यजु०, ५/८**

रजस् + ✓शीङ् – शये + अच् प्रत्ययः ( अधिकरणे शेते – अष्टा०, ३/२/१५ ) ततः टाप् प्रत्ययः स्त्रियाम्।

## रजस्तुः

**यो रजांसि लोकान् तुरति तूर्णगमनागमनहेतुम् । – ऋ०, १/६४/१२**

**यो रज उदकं तौति वर्धयति सः ।**

**– ऋ०, ६/६६/७**

रजस् + ✓तुर – त्वरणे + क्विप् प्रत्ययः ।

## रज्जुः

**सृजन्त्युदकनिस्सारणायेति रज्जुः जलोद्धरणं वा । – उ०को०, १/१५**

✓सृज – विसर्गे + उः प्रत्ययः, धातोः असुमागमः आदिसकारलोपश्च ( सृजेरसुम् च – उ०को०, १/१५ ), आगम सकारस्य जत्वं।

## रज्जुसर्जं

**यो रज्जूः सृजति तम् । – यजु०, ३०/७**

रज्जु + ✓सृज – विसर्गे + अण् प्रत्ययः ।

## रण्डा

**रमतेऽसौ रण्डा विधवा नारी वा ।**

**– उ०को०, १/११४**

✓रमु – क्रीडायां + डः प्रत्ययः ( अमन्ताड्डः – उ०को०, १/११४ ) स्त्रियां टाप् प्रत्ययश्च ।

## रण्वा

**या रण्वति सुखं प्रापयति सा ।**

**– ऋ०, १/६५/३**

✓रव – गत्यर्थे + अच् प्रत्ययः ( नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः – अष्टा०, ३/१/१३४ ), धातोर्नुमागमश्च ( इदितोनुम्धातोः – अष्टा०, ७/१/५८ ) ।

## रण्वसन्दृक्

**या रण्वान् रमणीयान् पदार्थान् सन्दर्शयति सा । – ऋ०, ३/६१/५**

रण्व + सम् + ✓दृशिर् – प्रेक्षणे + क्विन् प्रत्ययः।

## रतूः

**ऋतीयते घृणां करोतीति रतूः सत्यं दिव्यनदी वा । – उ०को०, १/९२**

✓ऋत – ( सौत्रधातुः ) – गत्यर्थे + उः प्रत्ययः धातोरमागमः ( ऋतेरम् च – उ०को०, १/९२ ) ।

## रत्नं

**रमणीयं ज्ञानं साधनं वा।– ऋ०, १/१४१/१०**

**रमयति हर्षयतीति रत्नम् ।– उ०को०, ३/१४**

✓रमु – क्रीडायां + न प्रत्ययः, धातोः मस्य तश्चादेशः ( रमेस्त च – उ०को०, ३/१४ ) ।

## रत्नधाः

**रमणीयानि पृथिव्यादीनि सुवर्णादीनि च रत्नानि दधाति धापयतीति रत्नधा, अतिशयेन रत्नधा इति रत्नधातमस्तम् ।**

**– ऋ०, १/१/१**

रत्नानि रमणार्थानि पृथिव्यादीनि वस्तूनि दधातीति सः । – ऋ०, १/१५/३

रत्नानि रमणीयानि सुखानि दधाति येन सोऽतिशयितः । – ऋ०, १/२०/१

रत्नानि रमणीयानि वस्तूनि दधाति ।

– ऋ०, १/१६४/४९

यो रत्नानि दधाति सः । – ऋ०, २/१/७

रत्नानि धनानि धीयन्ते यया तस्यै ।

– ऋ०, ४/३४/१

ये रत्नानि धनानि दधति ते ।

– ऋ०, ४/३४/६

या रत्नानि द्रव्याणि दधाति ताभिः ।

– ऋ०, ४/३४/७

ये रत्नानि द्रव्याणि दधति तैः ।

– ऋ०, ४/३४/८

रत्नानि धीयन्ते यस्मिँस्तत् ।

– ऋ० ४/३५/९, ४/३४/४

रत्नानि धीयन्ते यस्मिन् कोषे तस्मै ।

– ऋ०, ४/३४/११

ये रत्नानि दधति तैः । – ऋ०, ४/३५/७

रत्नानि धीयन्ते यस्मिँस्तस्मै । – ऋ०, ७/९/५

यो रत्नानि धनानि दधाति सः ।

– ऋ०, ७/१६/६

यो रत्नानि रमणीयानि विज्ञानानि हीरकादीनि भुवनानि वा दधातीति तम्।

– यजु०, ४/२५

रत्न + ✓डुधाञ् – धारणपोषणयोः + क्विप् प्रत्ययः।

## रत्निः

ऋच्छति गच्छतीति रत्निः बद्धमुष्टिहस्तो वा । – उ०को०, ४/२

✓ऋ – गतौ + कलिच् च प्रत्ययः (ऋतन्यञ्जि-वन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुज-लिजिष्णुजिष्ठसन्स्यनिथिन्नुल्यसासानुकः – उ०को०, ४/२) ।

## रथं

गमनहेतौ रमणसाधने विमानादौ ।

– ऋ०, १/४/१३

बहवो रमणसाधका रथा विद्यन्ते यासु ताः । – ऋ०, १/९/८

रमयति येन तस्मिन् । – ऋ०, १/१६/२

रमन्ते येन यानेन तस्मिन् । – ऋ०, १/३४/२

त्रिषु भूमिजलान्तरिक्षमार्गेषु रमन्ते येन तस्य।

– ऋ०, १/३४/९

यस्मिन् रमते तम् । – ऋ०, १/३५/४

रमणाय तिष्ठति तस्मिन् ।

– ऋ०, १/१२०/११

रमण साधनः । – ऋ०, १/१६१/३

रमणीयं यानम् । – ऋ०, १/१६१/६

रमते येन तद् विमानादियानम् ।

– ऋ०, ५/७५/१

रयते जानाति येन स रथः।– यजु०, ३/३६

रमण साधने याने ।

रमते यस्मिन् येन वा स रथः यानं शरीरं पादो वेतसो वा । – उ०को०, २/२

✓रमु – क्रीडायां + क्थन् प्रत्ययः (हनिकुषिनी-रमिकाशिभ्यः क्थन् – उ०को०, २/२) ।

## रथतूर्भिः

ये रथान् विमानादि यानानि तूर्वन्ति शीघ्रं गमयन्ति तैः । – ऋ०, १/८८/२

(तृ०ब०व०) – रथ + √तुर् – त्वरणे + क्विप् प्रत्ययः ।

## रथन्तरं

रथैस्तरन्ति येन तत् । – यजु०, १०/१०

रथै रमणीयैर्यानैस्तरन्ति । – यजु०, ११/८

यद्रथै रमणीयैस्तारयति तत्।– यजु०, १३/५४

यदस्मिन् लोके तारकं वस्त्वस्ति तत् ।
– यजु०, १५/५

यत्र रथेन तरति तत् तेन । – यजु०, २१/२३

यो रथैः समुद्रादींस्तरति तस्मै ।
– यजु०, २९/६०

रथ + √तॄ – प्लवनसंतरणयोः + अप् प्रत्ययः (ऋदोरप् – अष्टा०, ३/३/५७) नुडागमश्च छन्दसि।

## रथप्रां

यो रथानि यानानि पूर्यतो तम् ।
– ऋ०, ६/४९/४

यो रथान् यानानि प्राति व्याप्नोति तम् ।
– यजु०, ३३/५५

रथ + √प्रा – प्रपूरणे + क्विप् प्रत्ययः ।

## रथयुजं

ये रथं युज्यते ते । – ऋ०, १/१३९/३

रथ + √युजिर् – योगे + क्विप् प्रत्ययः ।

## रथवाहनं

रथं वहति येन तत् । – यजु०, १२/७१

रथ + √वह – प्रापणे + ल्युट् प्रत्ययः ।

## रथिरं

यो रथिषु रमते तम् । – ऋ०, ७/७/४

रथ + इरन् प्रत्ययः मत्वर्थे प्रशंसायां वा (मेधारथाभ्यामिरन्निरचौ – अष्टा०वा०, ५/२/१०९) ।

## रथेष्ठाः

यो रथे तिष्ठति सः । – ऋ०, १/१७३/४

यो रथे तिष्ठति तेन । – ऋ०, २/१६/३

यो रथे तिष्ठति । – ऋ०, ६/२१/१

यो रथे तिष्ठति सः । – यजु०, २२/२२

रथे + √ष्ठा – गतिनिवृत्तौ + क्विप् प्रत्ययः (सप्तम्या अलुक्) ।

## रदावसुः

यो रदेषु विलेखनेषु वसति तत्सम्बुद्धौ ।
– ऋ०, ७/३२/१८

√रद – विलेखने + अच् प्रत्ययः > रदः + √वस – निवासे + उः प्रत्ययः बाहुलकात् पूर्वस्य दीर्घत्वम्।

## रध्रचोदः

यो रध्रान् सरोधकान् चुदति प्रेरयति सः।
– ऋ०, २/२१/४

√रध – हिंसायां + रक् प्रत्ययः बाहुलकात् > रध्र + √चुद-प्रेरणे + अण् प्रत्ययः ।

## रभसः

रभतेऽसौ रभसः वेगो हर्षो वा ।
– उ०को०, ३/११७

√रभ – राभस्ये + असच् प्रत्ययः (अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् – उ०को०, ३/११७) ।

## रमकः

रमतेऽसौ रमकः रमणशीलो वा ।
– उ०को०, २/३३

√रमु – क्रीडायां + क्वुन् प्रत्ययः (रमेरश्च लो वा – उ०को०, २/३३) ।

## रमण्यं

रमतेऽस्मिंस्तत् रमण्यं गृहं वा ।
– उ०को०, ३/१०१

✓रमु – क्रीडायां + अन्यः प्रत्ययः (शृरम्योश्च – उ०को०, ३/१०१)।

## रमतिः

**रमन्तेऽस्मिन् स रमतिः कालः कामो वा। – उ०को०, ४/६३**

✓रमु – क्रीडायां + अतिः प्रत्ययः (रमेर्नित् – उ०को०, ४/६३)।

## रयिषाट्

**यो रयिं द्रव्यं सहते। – ऋ०, १/५८/३**

रयि(उदकनाय) + ✓षह – मर्षणे + ण्विः प्रत्ययः (छन्दसि सहः – अष्टा०, ३/२/६३)।

## रयिवृधः

**ये रयिं वर्धयन्ति ते। – यजु०, २७/२३**

(प्र०ब०व०) रयि + ✓वृधु – वृद्धौ + क्विप् प्रत्ययः।

## रयिस्थानः

**रयिस्तिष्ठन्ति यस्मिन्त्सः। – ऋ०, ६/४७/६**

रयि + ✓ष्ठा – गतिनिवृत्तौ + ल्युट् प्रत्ययः।

## रयिषाचः

**ये रयिणा सह समवयन्ति ते। – यजु०, २७/२३**

रयि + ✓षच – समवाये + अण् प्रत्ययः।

## रवणः

**रौति शब्दयतीति रवणः कोकिलः पक्षी वा। – उ०को०, २/७४**

✓रु – शब्दे + युच् प्रत्ययः (सुयुरुवृञो युच् – उ०को०, २/७४)।

## रवथः

**रौतीति रवथः कोकिलो वा। – उ०को०, ३/११३**

रु – शब्दे + अथः प्रत्ययः (शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः – उ०को०, ३/११३)।

## रविः

**रौतीति रविः सूर्यो वा। – उ०को०, ३/१३९**

✓रु – शब्दे + इः प्रत्ययः (अचः इः – उ०को०, ३/१३९)।

## रशना

**रशादेशश्च अश्नुते व्याप्नोतीति रशना स्त्रियः कटिभूषणं वा। – उ०को०, २/७५**

✓अशूङ् – व्याप्तौ + युच् प्रत्ययः, धातोः रशादेशः (अशेः रश च – उ०को०, २/७५), स्त्रियां टाप् प्रत्ययश्च।

## रश्मिः

**अश्नुते व्याप्नोतीति रश्मिः किरणो रज्जुर्वा। – उ०को०, ४/४६**

✓अशूङ् – व्याप्तौ संघाते च + मिः प्रत्ययः, अश धातोः रशादेशः (अश्नोते रश च – उ०को०, ४/४६)।

## रसना

**रसयत्यास्वादयति यया सा रसना जिह्वा। – उ०को०, २/७५**

✓रस – आस्वादनस्नेहनयोः + ल्यु प्रत्ययः (कृत्यल्युटो बहुलम् – अष्टा०, ३/३/११३), स्त्रियां टाप् प्रत्ययश्च।

## रस्नं

**रसति शब्दयतीति रस्नं द्रव्यं वा। – उ०को०, ३/१२**

✓रस – शब्दे + नः प्रत्ययः (तृषिशुषिरसिभ्यः कित् – उ०को०, ३/१२)।

## रहः

**रमन्तेऽस्मिन्निति रहः एकान्तो विश्वासदेशो वा। – उ०को०, ४/२१५**

✓रमु – क्रीडायां + असुन् प्रत्ययः, हुगागमश्च (रमेश्च – उ०को०, ४/२१५)।

## राः

राति ददाति रायते दीयते वा सा राः धनं सुवर्णं वा । – उ०को०, २/६६

√रा – दाने + डैः प्रत्ययः (रातेर्डैः – उ०को०, २/६७) डित्वाट्टिलोपः > रैः, ततः एजन्त धातुरुपदेशस्याकारादेशः (आदेचि उपदेशेऽशिति- अष्टा०, ६/१/४५)

## राका

रातिं ददाति सुखं या सा ।

– ऋ०, ५/४२/१२

राति ददातीति राका पौर्णमासी नदीभेदो वा । – उ०को०, ३/४०

√रा – दाने + कः प्रत्ययः (कृदाधारार्चिकलिभ्यः कः – उ०को०, ३/४०) ।

## राक्षा

राजते दीप्यते सा राक्षा लाक्षा ।

– उ०को०, ३/६२

√राजृ – दीप्तौ + सः प्रत्ययः बाहुलकात् धातोः जत्वस्य कत्वं (वृतॄवदिवचिवसिहनिकमिकषिभ्यः सः – उ०को०, ३/६२) स्त्रियां टाप् च ।

## राजन्यः

राजते दीप्यतेऽसौ राजन्यः अग्निर्वा ।

– उ०को०, ३/१००

√राजृ – दीप्तौ + अन्यः प्रत्ययः (राजेरन्यः – उ०को०, ३/१००) ।

## राजा

यो राजते दीप्यते प्रकाशते सः ।

– ऋ०, १/३२/१५

ये राजन्ते सत्कर्मगुणैः प्रकाशन्ते ते ।

– ऋ०, १/४१/३

राजते प्राप्तो भवतीति राजा भूपतिश्चन्द्रमा वा । – उ०को०, १/१५६

√राजृ – दीप्तौ + कनिन् प्रत्ययः (कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः उ०को०, १/१५६) ।

## राजातनः

राजानमततीति राजातनः पुष्पं वा ।

– उ०को०, २/७८

राजन् (राजा) + √अत – सातत्यगमने + युच् प्रत्ययः बाहुलकात् बहुलमन्यत्रापि – उ०को०, २/७८) ।

## राजासन्द्यै

राजानः सीदन्ति यस्यां तस्यै। – यजु०, १९/१६ (च०ए०व०) – राजन् + आङ् + सम् + √दो – अवखण्डने + डः प्रत्ययः ततः स्त्रियां ङीप् । अथवा राजन् + आ + √षद्लृ – विशरणगत्यवसादनेषु + दन् प्रत्ययः बाहुलकात् धातोर्नुमागमश्च ततः स्त्रियां ङीप् प्रत्ययः ।

## राजिः

राजते दीप्यतेऽसो राजिः पङ्क्तिर्वा ।

– उ०को०, ४/१२५

√राजृ – दीप्तौ + इञ् प्रत्ययः (वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् – उ०को०, ४/१२५) ।

## राट्

यो राजते । – ऋ०, ६/१२/५

√राजृ – दीप्तौ + क्विप् प्रत्ययः (सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१) ।

## रातिः

या राति ददाति सा । – ऋ०, १/१२२/७

√रा – दाने + क्तिन् प्रत्ययः (मन्त्रेवृषेषपचमनविदभूवीरा उदात्तः – अष्टा०, ३/३/९६) ।

## रातिषाचः

प्रदद्युः ये रातिं सचन्ते सम्बध्नन्ति ते ।

– ऋ०, ७/३४/२२

**या रातिं दानं सचन्ते ताः।**– ऋ०, ७/३४/२३

**ये रातिं विद्यादिदानं सचन्ते ते ।**

– ऋ०, ७/३५/११

(प्र०ब०व०) – राति + √षच – समवाये + अण् प्रत्ययः ।

## रात्रिः

**राति सुखं ददातीति रात्रिः प्रसिद्धा वा ।**

– उ०को०, ४/६७

√रा – दाने + त्रिप् प्रत्ययः (राशदिभ्यां त्रिप् – उ०को०, ४/६७) ।

## राधः

**राध्नुवन्ति सुखानि येन तद्धनम् ।**

– ऋ०, १/९/५

**राध्नुवन्ति संसेधयन्ति सुखानि येन तस्मै धनाय ।** – ऋ०, १/१७/७

**राध्नुवन्ति संसिध्यन्ति सुखानि पृथिव्यादि धनेषु तेषाम् ।** – ऋ०, १/३०/५

**राध्नुवन्ति सुखानि येन तद्विद्यासुवर्णादिधनम् ।** – यजु०, १०/७

**राध्नुवन्ति सम्यङ् निवर्तयन्ति सुखानि येभ्यः साधनेभ्यस्तानि धनानि।**–यजु०,३/१३

√राध – संसिद्धौ + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) ।

## रामठं

**रमतेऽस्मिन्निति रामठं हिङ्गुर्वा ।**

– उ०को०, १/१०१

√रमु – क्रीडायां + अठः प्रत्ययः धातोः वृद्धिश्च (रमेर्वृद्धिश्च – उ०को०, १/१०१) ।

## राम्याणां

**रमयन्ति आनन्दयन्ति तेषाम् ।**

– यजु०, ३३/२६

(ष०ब०व०) – √रमु – क्रीडायां + घञ् प्रत्ययः > राम + यक् प्रत्ययश्च ।

## रायस्पोषवनि

**यया रायो विद्याधन समूहस्य पोषं पुष्टिं वनति संभजति सा ।** – यजु०, ५/१२

**यथा रायो धनसमूहस्य पोषं पुष्टिं वनन्ति सेवन्ते यस्मात्तथा ।** – यजु०, ५/२७

**रायो धनस्य पोषो दृढता तस्याः संविभाजिनम् ।** – यजु०, ६/३

√रा – दाने + क्विप् प्रत्ययः युगागमश्च (आतो युक्० – अष्टा०, ७/३/३३) > रायः + √पुष – पुष्टौ + घञ् प्रत्ययः > रायस्पोष + √वन – सम्भक्तौ + इन् प्रत्ययः (छन्दसि वनसनरक्षिमथाम् – अष्टा०, ३/२/७) ।

## रायस्पोषाय

**रायो विद्या सुवर्णादि धनस्य पोषाय, पुष्यन्ति यस्मिंस्तस्मै ।** – यजु०, ३/६३

(च०ए०व०) – √रा – दाने + क्विप् प्रत्ययः, युगागमः (आतो युक्० – अष्टा०, ७/३/३३) > रायः + √पुष – पुष्टौ + अच् प्रत्ययः ।

## राशिः

**अश्नुते व्याप्नोतीति राशिः समूहो वा ।**

– उ०को०, ४/१३३

√अशूङ् – व्याप्तौ + इण् प्रत्ययः धातोः रुडागमश्च (अशिपणाय्योरुडायलुकौ च – उ०को०, ४/१३३)।

## राष्ट्रदाः

**राष्ट्रं ददातीति ।** – यजु०, १०/२

√राजृ – दीप्तौ + ष्ट्रन् प्रत्ययः > राष्ट्र + √डुदाञ् – दाने + कः प्रत्ययः ।

## रासभः

**रासति शब्दतीति रासभः खरो वा ।**

– उ०को०, ३/१२५

√रासृ – शब्दे + अभच् प्रत्ययः (रासिवल्लिभ्यां च – उ०को०, ३/१२५) ।

## रास्ना

रसति शब्दयतीति रास्ना गन्धद्रव्यं वा ।
– उ०को०, ३/१५

√रासृ – शब्दे + नः प्रत्ययः ( रास्नासास्नास्थूणावीणा – उ०को०, ३/१५ ) ।

## रास्पिरासः

ये रा दानानि स्पृणन्ति ते ।– ऋ०, ५/४३/१४

( प्र०ब०व० ) – √रा – दाने + कः प्रत्ययः > रा + √स्पृ – प्रीतिपालनयोः + कः प्रत्ययः ।

## राहुः

यो रहति परित्यजति दुष्टान् राहयति त्याजयति वा स राहुरीश्वरः ।
– *स० प्र० ( प्रथमसमुल्लासः )*

रहति त्यजति दोषानिति राहुः ग्रहविशेषो वा । – उ०को०, १/३

√रह – त्यागे + उुण् प्रत्ययः ( दृसनिजनिचरिचटिरहिभ्यो उुण् – उ०को०, १/३ ), दीर्घश्च ।

## रिक्थं

रिणक्ति पृथक् करोतीति यत्तद् रिक्थं दायादधनं सुवर्णं वा । – उ०को०, २/७

√रिचिर् – विरेचने + थक् प्रत्ययः ( पातृतुदिवचिरिचिसिचिभ्यस्थक् – उ०को०, २/७ ), धातोः चकारस्य कुत्वम् ।

## रिपुः

अनिष्टं रपति वदतीति रिपुः शत्रुः ।
– उ०को०, १/२६

√रप – व्यक्तायां वाचि + कुः प्रत्ययः, धातोरुपधायाः इत्वं ( रपेरिच्चोपधायाः - उ०को०, १/२६ ) ।

## रिप्रं

रीयते तत् रिप्रं कुत्सितम् ।– उ०को०, ५/५५

√रीङ् – स्रवणे कुत्सने च + रः प्रत्ययः, धातोर्ह्रस्वः पुडागमश्च ( लीरीङोर्ह्रस्वः पुट च तरौ श्लेषणकुत्सनयोः – उ०को०, ५/५५ ) ।

## रिप्रवाहः

ये रिप्रं पापं वहन्ति तान् । – यजु०, ३५/१९

रिप्र + √वह – प्रापणे + ण्विः प्रत्ययः ( वहश्च – अष्टा०, ३/२/६४ ) ।

## रिशादशः

रिशा रोगा अदसोऽत्तारो यैस्ते ।
– ऋ०, १/१९/५

रिशान् शत्रून् रोगान् वा समन्ताद्दस्यन्त्युपक्षयन्ति ये तत्सम्बुद्धौ ।
– ऋ०, १/३९/४

ये रिशान् हिंसकान् रोगानदन्ति ते ।
– ऋ०, १/६४/५

यो रिशान् हिंसकान् शत्रूनत्ति नाशयति सः । – ऋ०, १/७८/४

ये रिशाञ्छत्रून् दसन्ति नाशयन्ति ते ।
– ऋ०, १/१८६/८

रिशान् दोषान् शत्रूंश्चादन्ति हिंसन्ति तान्।
– यजु०, ३/४४

√रिश – हिंसायां + कः प्रत्ययः ( इगुपधज्ञाप्रीकिरः कः – अष्टा०, ३/१/१३५ ) > रिशः + √दसु – उपक्षये + क्विप् प्रत्ययः अथवा रिश + √अद – भक्षणे + असुन् प्रत्ययः ( सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९ )।

## रिष्वः

रेषति हिनस्तीति रिष्वः हिंसकः ।
– उ०को०, १/१५३

√रिष – हिंसायां + वन् प्रत्ययः निपातनात् ( सर्वनिघृष्वरिष्वलष्वशिवपद्वह्वेष्वा अतन्त्रे – उ०को०, १/१५३ ) ।

## रुक्मः

रोचते प्रदीप्तवर्णो भवति स रुक्मः वर्णभेदो वा । – उ०को०, १/१४६

✓रुच – दीप्तावभिप्रीतौ च + मक् प्रत्ययः, चकारस्य कुत्वञ्च (युजिरुचितिजां कुश्च – उ०को०, १/१४६) ।

## रुचिः

रुच्यते सा रुचिः दीप्तिर्वा ।

– उ०को०, ४/१२०

✓रुच – दीप्तावभिप्रीतौ च + इन् प्रत्ययः (इगुपधात् कित् – उ०को०, ४/१२०) ।

## रुचितं

रोचते तत् रुचितं मिष्टं वा ।

– उ०को०, ४/१८९

✓रुच – दीप्तावभिप्रीतौ च + कितच् प्रत्ययः (रुचिवचिकुचिकुटिभ्यः कितच् – उ०को०, ४/१८६) ।

## रुचिरं

यद्रोचते प्रीतिकरं भवति तद् रुचिरं शोभनम् । – उ०को०, १/५१

✓रुच – दीप्तावभिप्रीतौ च + किरच् प्रत्ययः (इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहि-मुहिमुचिरुचिरुधिबन्धिशुषिभ्य किरच् – उ०को० १/५१) ।

## रुद्रः

ये रोदयन्त्यन्यायकारिणो जनांस्तत्सम्बुद्धौ।

– ऋ०, १/३९/४

दुष्टरोदनकारकाश्चतुश्चत्वारिंशद्वर्षकृतब्रह्मचर्यविद्याः । – ऋ०, १/३९/७

शत्रून् दुष्टान् रोदयतां सम्बन्धिनो रुद्राः ।

– ऋ०, १/७२/४

शत्रूणां रोदयितुर्महावीरस्य ।

– ऋ०, १/८५/१

दुष्टान् रोदयद्भिः प्राणैरिव वीरैः ।

– ऋ०, १/१००/५

दुष्टान् शत्रून् रोदयितः । – ऋ०, १/११४/२

रुतः सत्योपदेशान् राति ददाति तत्सम्बुद्धौ।

– ऋ०, १/११४/३

दुष्टानां रोदयित्रे । – ऋ०, १/१२२/१

दुष्टानां रोदयिता । – ऋ०, २/१/६, २/३१/१, २/३३/१०, २/३४/२, ७/४०/५

यो रुद्रोगं द्रावयति तम् । – ऋ०, ४/४९/१०

दुष्टानां रोदयितारम् । – ऋ०, ५/४२/११

दुष्टानां रोदयितारः । – ऋ०, ५/५७/१

रुद्रेषु दुष्टरोदयितृषु कुशलाः ।

– ऋ०, ५/५८/७

रुतो रोदनाद्रावयितारौ । – ऋ०, ५/७०/२

दुष्टानां रोदयतिरौ । – ऋ०, ५/७०/३

दुष्टानां रोदयितारौ । – ऋ०, ५/७३/८

दुष्टानां रोदयितुः । – ऋ०, ६/५०/४

पापफलदानेन पापिनां रोदयितारं पापफलभोगेन रोदकं जीवं वा ।

– ऋ०, ७/४१/१

रोदयत्यन्यायकारिणो जनान् स रुद्रः स्तोता, तत्सम्बुद्धौ । – यजु०, ३/५७

दुष्टानां रोदयितारं परमेश्वरम् ।

– यजु०, ३/५८

यो रोदयति शत्रूँस्तत्सम्बुद्धौ शूरवीरः ।

– यजु०, ३/६१

दुष्टानां रोदयिता विद्वान् । – यजु० ४/२१
विद्वांसो वीराः शत्रुरोदयितारो रुद्रा भवन्ति यत्र तस्मै । – यजु०, ६/३२
शत्रूणां रोदयिता शूरवीरः ।– यजु०, ९/३९
दुष्टानां रोदयितः । – यजु०, १०/२०
शत्रूणां दुष्टानां रोदयिता । – यजु०, १०/२८
दुष्टानां शत्रूणां रोदयिता । – यजु०, १६/१
दुष्टानां रोदयिता । – यजु०, ३३/४८
प्रशस्ताः कृतचतुश्चत्वारिंशद्वर्षब्रह्मचर्या शत्रून् रोदयन्ति ते । – यजु०, ३३/५०
यो रोदयत्यन्यायकारिणो जनान् स रुद्रः।
– स० प्र० (प्रथमसमुल्लासः)
पापिनो रोदयतीति रुद्रः ईश्वरः। प्राणादिदश रुद्रा जीवो वा ।
– उ०को०, २/२२

१- ✓रुदिर् – अश्रुविमोचने + रक् प्रत्ययः णिः लुक् च (रोदेर्णिलुक् च – उ०को०, २/२२)।
२- रुत् (रोगं) + ✓द्रु – गतौ + डः प्रत्ययः (अन्येष्वपि दृश्यते – अष्टा०, ३/२/१०१)।
३- ✓रु – शब्दे + क्विप् प्रत्ययः तुगागमश्च > रुत् + ✓रा – दाने + कः प्रत्ययश्च ।

## रुधिक्रां

यो रुधीनावरकान् क्रामति तम् ।
– ऋ०, २/१४/५

(द्वि०ए०व०) – ✓रुधिर् – आवरणे + क्विप् प्रत्ययः > रुधि + ✓क्रमु – पादविक्षेपे + विट् प्रत्ययः (जनसनखनक्रमगमो विट् – अष्टा०, ३/२/६७) धातोः आकारादेशश्च (विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१) ।

## रुधिरं

रुध्यते चर्म्मणा यत्तत् रुधिरं शोणितम्।
– उ०को०, १/५१

✓रुध – रोधने + किरच् प्रत्ययः (इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१)।

## रुम्रः

रमन्तेऽस्मिन् स रुम्रः अरुणः शोभनो वा। – उ०को०, २/१४

✓रमु – क्रीडायां + रक् प्रत्ययः धातोरुपधायाः उत्वञ्च (चकिरम्योरुच्चोपधायाः –उ०को०, २/१४)।

## रुरुः

रौति शब्दं करोतीति रुरुः मृगभेदो वा ।
– उ०को०, ४/१०३

✓रु – शब्दे + क्रुन् प्रत्ययः (रुशातिभ्यां क्रुन् – उ०को०, ४/१०३) ।

## रुवथः

रौतीति रुवथः श्वा वा ।– उ०को०, ३/११५

✓रु – शब्दे + अथः प्रत्ययः (रुविदिभ्यां ङित् – उ०को०, ३/११५) ।

## रुशमाः

ये रुशान् हिंसकान् मिन्वति ।
– ऋ०, ५/३०/१२

✓रुश – हिंसायां + कः प्रत्ययः (इगुपधज्ञाप्रीकिरः कः – अष्टा०, ३/१/१३५) > रुश + ✓मिञ् – प्रक्षेपणे + क्विप् प्रत्ययः, प्रत्ययोत्पत्तेरलोन्त्यस्य स्थाने आकारदेशः (मीनातिमिनोतिदीङां ल्यपि च – अष्टा०, ६/१/४९) ।

## रुह्वा

रोहति वीजादुत्पद्यत इति रुह्वा वृक्षो वा।
– उ०को०, ४/११४

✓रुह – बीजजन्मनिप्रादुर्भावे च + क्वनिप् प्रत्ययः (शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् – उ०को०, ४/११४) ।

## रूपं

रौति शब्दयतीति रूपं आकृतिः स्वभावः सौन्दर्यं वा । – उ०को०, ३/२८

१- √रु – शब्दे + प प्रत्ययः निपातनात् दीर्घादेशश्च (खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः – उ०को०, ३/२८)।

२- √रूप – विमोहने + क्विप् प्रत्ययः, दीर्घादेशश्च।

## रेक्णः

**रिणक्ति व्ययं करोति यत् तत् रेक्णः सुवर्णं वा । – उ०को०, ४/१९९**

√रिचिर् + विरेचने + असुन् प्रत्ययः, धातोः एत्वं घित्वात् कुत्वञ्च (चजोः कु घिण्ण्यतोः – अष्टा०, ७/३/५२) ।

## रेणुः

**रिणाति गच्छति हिनस्ति हन्यते वा स रेणुः धूलिः । – उ०को०, ३/३८**

√रि – गतिरेषणयोः + णुः प्रत्ययः धातो एत्वञ्च (अजिवृरीभ्यो निच्च – उ०को०, ३/३८) ।

## रेतः

**रीयते स्रवतीति रेतः वीर्यं वा ।**

**– उ०को०, ४/२०२**

√रीङ् – स्रवणे + असुन् प्रत्ययः, तुडागमश्च (स्रुरीभ्यां तुट् च – उ०को०, ४/२०२) धातोरीकारस्य एत्वञ्च।

## रेतोधाः

**यो रेत उदकमिव वीर्यं दधाति सः ।**

**– ऋ०, ३/५६/३**

**यो रेतो वीर्य दधाति सः । – ऋ०, ५/६९/२**

**यो रेतः श्लेषमालिङ्गनं दधाति सः ।**

**– यजु०, २३/२०**

**ये रेतो वीर्यं दधति ते । – यजु०, ३३/७४**

रेतस् + √डुधाञ् – धारणपोषणयोः + क्विप् प्रत्ययः।

## रेपः

**रप्यत उच्यत इति रेपः अवद्यं वचो वा ।**

**– उ०को०, ४/१९०**

√रप – व्यक्तायां वाचि + असुन् प्रत्ययः, धातोः एत्वञ्च (रपेरत एच्च – उ०को०, ४/१९०) ।

## रेफः

**रिफति निन्दतीति रेफः । – उ०को०, ५/५४**

√रिफ – कात्थनयुद्धनिन्दाहिंसादानेषु + असुन् प्रत्ययः, धातोरिकारस्य एत्वञ्च (अवद्यावमाधमावरेफाः कुत्सिते – उ०को०, ५/५४) ।

## रोचनस्थां

**रोचने प्रदीप्ते तिष्ठति । – ऋ०, ३/२/१४**

रोचन + √ष्ठा – गतिनिवृत्तौ + क्विप् प्रत्ययः ।

## रोचना

**रोचन्ते यस्मिँस्तत् । – ऋ०, ३/४४/४**

**रोचतेऽसौ रोचना गोरोचनमौषधं वा ।**

**– उ०को०, २/७८**

√रुच – दीप्तावभिप्रीतौ + युच् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/७८) ।

## रोचिः

**केवलादपि रोचिः ज्वाला वा ।**

**– उ०को०, २/१११**

√रुच – दीप्तावभिप्रीतौ + इसिः प्रत्ययः (वसौ रुचेः संज्ञायाम् – उ०को०, २/१११) ।

## रोदः

**रोदतीति रोदः । – उ०को०, ४/१८९**

√रुदिर् – अश्रुविमोचने + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) ।

## रोधः

**रुणद्धि येन स रोधः तटो वा ।**

**– उ०को०, ४/१८९**

√रुधिर् – आवरणे + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) ।

## रोमः

**रौति शब्दयतीति रोमः । – उ०को०, ४/१५१**

✓रु – शब्दे + मनिन् प्रत्ययः ( नामन्सीमन्व्योम-न्रोमन्लोमन्पाप्मन्ध्यामन् – उ०को०, ४/१५१ ) ।

## रोहन्तः

रोहतीति रोहन्तः वृक्षभेदो वा ।

– उ०को०, ३/१२७

✓रुह – बीजजन्मनिप्रादुर्भावे च + झच् प्रत्ययः ( रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि – उ०को०, ३/१२७), झकारस्यान्तादेशः ( झोऽन्तः – अष्टा०, ७/१/३ ) ।

## रोहिः

रोहतीति रोहिः व्रतो वा ।

– उ०को०, ४/११९

✓रुह – बीजजन्मनिप्रादुर्भावे च + इन् प्रत्ययः ( हृपिषिरुहिवृतिविदिदिद्दिकीर्त्तिभ्यश्च – उ०को०, ४/११९ ) ।

## रोहिणः

रोहति बीजेन जायते स रोहिणः चन्दनवृक्षो वा । – उ०को०, २/५५

✓रुह – बीजजन्मनिप्रादुर्भावे च + इनन् प्रत्ययः ( रुहेश्च – उ०को०, २/५५ ) ।

## रोहितः

रोहयन्त्यारोहयन्ति यानानि यास्ताः ।

– ऋ०, १/१४/१२

रोहति प्रादुर्भवतीति रोहितः मृगमत्स्ययोर्भेदो रोहितं रुधिरं वा । – उ०को०, ३/९४

✓रुह – बीजजन्मनिप्रादुर्भावे च + इतन् प्रत्ययः ( रुहेरश्च लो वा – उ०को०, ३/९४ ) ।

## रोहित्

रोहति प्रादुर्भवतीति रोहित् लताविशिष्टा हरिणी वा । – उ०को०, १/९७

✓रुह – बीजजन्मनिप्रादुर्भावे च + इतिः प्रत्ययः ( हृसृरुहियुषिभ्य इतिः – उ०को० १/९७ ) ।

## रौहिषं

रुहन्त्युत्पद्यन्ते यानि तानि रौहिषाणि तृणानि। रौहिषी मृग भेदो वा ।

– उ०को०, १/४७

✓रुह – बीजजन्मनिप्रादुर्भावे च + टिषच् प्रत्ययः, धातोर्वृद्धिश्च ( रुहेर्वृद्धिश्च – उ०को०, १/४७ ) ।

## लक्षणः

लक्षयतीति लक्षणः चिह्नं नाम वा । हंसस्त्री लक्षणा सारसी वा ।

– उ०को०, ३/७

✓लक्ष – दर्शनाङ्कनयोः + नः प्रत्ययः अडागमश्च ( लक्षेरट्मुट् च – उ०को०, ३/७ ) ।

## लक्ष्मणं

लक्षयतीति लक्ष्मणं रामभ्राता लक्ष्मणो वा । – उ०को०, ३/७

✓लक्ष – दर्शनाङ्कनयोः + नः प्रत्ययः, मुडागमश्च ( लक्षेरट्मुट् च – उ०को०, ३/७ ) ।

## लक्ष्मी

यो लक्षयति पश्यत्यङ्क्ते चिह्नयति चराचरं जगदथवा वेदैराप्तैर्योगिभिश्च यो लक्ष्यते स लक्ष्मीः सर्वप्रियेश्वरः ।

– स० प्र० ( प्रथमसमुल्लासः )

लक्षयति पश्यत्यङ्कयति वा सा लक्ष्मीः विभूतिर्वा । – उ०को०, ३/१६०

✓लक्ष – दर्शनाङ्कनयोः + ईः प्रत्ययः, धातोः मुडागमश्च ( लक्षेर्मुट् च – उ०को०, ३/१६० ) ।

## लघट्

लङ्घति शोषयतीति लघट् वायुर्वा ।

– उ०को०, १/१३५

√लङ्घि – शोषणे + अटिः प्रत्ययः, धातोः न लोपः (लङ्घेर्नलोपश्च – उ०को०, १/१३५)।

## लघुः

लङ्घति गन्तुं शक्नोतीति लघुः स्वल्पो वा। – उ०को०, १/२९

√लङ्घि – गतौ + कुः प्रत्ययः धातोर्नलोपः (लङ्घिबंह्योर्नलोपश्च – उ०को०, १/२९)।

## लङ्कः

लङ्कति गच्छतीति लङ्कः प्रियो वा।
– उ०को०, २/३७

√लङ्क – गत्यर्थः + क्वुन् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/३७)।

## लटकः

लटति बाल इव भवतीति लटकः दुर्जनो वा। – उ०को०, २/३२

√लट – बाल्ये + क्वुन् प्रत्ययः बाहुलकात् (क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२)।

## लट्वा

लटति बाल इव भवति सा लट्वा।
– उ०को०, १/१५१

√लट – बाल्ये + क्वन् प्रत्ययः (अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् – उ०को०, १/१५१)।

## लत्तिका

लततीति लत्तिका गोधा वा।
– उ०को०, ३/१४७

√लत – गतौ, हिंसायां ताड़ने च + कन् प्रत्ययः (कृतिभिदिलतिभ्यः कित् – उ०को०, ३/१४७)।

## लभसः

लभतेऽसौ लभसः अश्वबन्धनं वा।
– उ०को०, ३/११७

√लभष् – प्राप्तौ + असच् प्रत्ययः (अत्यविचमितमिनमरभिलभिनभितपिपर्तिनिपणिमहिभ्योऽसच् – उ०को०, ३/११७)।

## लवङ्गः

लुनात्यनेन स लवङ्गः ओषधिर्वा तरत्याद्याकृतिगणः। – उ०को०, १/१२०

√लूञ् – छेदने + अङ्गच् प्रत्ययः (तरत्यादिभ्यश्च – उ०को०, १/१२०)।

## लवाणकः

लुनाति येन तत् लवाणकं दात्रं वा।
– उ०को०, ३/८३

√लूञ् – छेदने + आणकः प्रत्ययः (आणको लूधूशिङ्घिधाञ्भ्यः – उ०को०, ३/८३)।

## लविः

लुनाति छिनत्तीति लविः छेदको लोहो वा। – उ०को०, ४/१३९

√लूञ् – छेदने + इः प्रत्ययः (अच इः – उ०को०, ४/१३९)।

## लशुनं

अश्यते भुज्यते यत्तत् लशुनं औषधरुपः कन्दो वा। – उ०को०, ३/५७

√अश – भोजने + उनन् प्रत्ययः 'अश' धातोर्लशादेशश्च (अशेर्लशश्च – उ०को०, ३/५७)।

## लष्वः

लषति कामतेऽसौ लष्वः नर्त्तको वा।
– उ०को०, १/१५३

√लष – कान्तौ + वन् प्रत्ययः निपातनात् (सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे – उ०को०, १/१५३)।

## लाक्षा

राजते दीप्यते सा लाक्षा। – उ०को०, ६/६२

√राजृ – दीप्तौ + सः प्रत्ययः बाहुलकात्,

( वृतृवदिवचिवसिहनिकमिकषिभ्यः सः – उ०को०, ३/६२ ) धातोः रकारस्य लत्वं ( कपिलकादित्वात् – अष्टा०वा०, ८/२/१८ ) ।

## लाङ्गलं

**लङ्गन्ति प्राप्नुवन्त्यन्नादिकं येन तत् लाङ्गलं हलं वा । – उ०को०, १/१०८**

✓लङ्ग – गत्यर्थे + कल प्रत्ययः धातोर्वृद्धिश्च ( लङ्गेर्वृद्धिश्च – उ०को०, १/१०८ ) ।

## लाङ्गूलं

**लङ्गति गच्छतीति लाङ्गूलं पुच्छं वा ।**
**– उ०को०, ४/९०**

✓लङ्ग – गत्यर्थे + ऊलच् प्रत्ययः, धातोर्वृद्धिश्च ( खर्जिपिञ्जादिभ्य ऊरोलचौ – उ०को०, ४/९० )।

## लिक्षा

**लिश्यतेऽल्पा भवतीति लिक्षा शिरः केशजन्तुर्वा । – उ०को०, ३/६६**

✓लिश – अल्पीभावे + सः प्रत्ययः बाहुलकात् ( स्नुव्रश्चिकृत्यृषिभ्यः कित् – उ०को०, ३/६६ ) ।

## लिगुः

**सर्वत्र लगति सङ्गच्छते तत् लिगुः चित्तं वा । – उ०को०, १/३६**

✓लगे – सङ्गे + कुः प्रत्ययः निपातनात्, धातोः उपधायाः इत्वम् ( खरुशङ्कुपीयुनीलङ्गुलिगु – उ०को०, १/३६ ) ।

## लिपिः

**लिप्यतीति लिपिः लेखो वा । बाहुलकात् वत्वे लिविः इत्यपि । – उ०को०, ४/१२०**

✓लिप – उपदेहे + इन् प्रत्ययः ( इगुपधात् कित् – उ०को०, ४/१२० ) ।

## लिप्तं

**लीयते श्लिष्यत इति लिप्तं श्लिष्टम् ।**
**– उ०को०, ५/५५**

✓लीङ् – श्लेषणे + तः प्रत्ययः, धातोर्ह्रस्वः पुडागमश्च ( लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः – उ०को०, ५/५५ ) ।

## लुषभः

**रोषति हिनस्तीति लुषभः मत्तहस्ती वा ।**
**– उ०को०, ३/१२४**

✓रुष – हिंसायां + अमच् प्रत्ययः, 'रुष' धातोः लुषादेशः ( रुषेर्निल्लुष् च – उ०को० ३/१२४ ) ।

## लूनिः

**लूयतेऽसौ लूनिः ब्रीहिर्वा ।**
**– उ०को०, ४/१०५**

✓लूञ् – छेदने + क्निन् प्रत्ययः ( अन्येभ्योऽपि दृश्यन्ते – उ०को०, ४/१०५ ) ।

## लोकसनि

**लोकान् सनति सम्भजति येन ।**
**– यजु०, १९/४८**

✓लोकृ – दर्शने + घञ् प्रत्ययः > लोक + ✓षण – सम्भक्तौ + इन् प्रत्ययः छन्दसि ( छन्दसि वनसनरक्षिमथाम् – अष्टा०, ३/२/२७ ) ।

## लोकाः

**लोकन्ते पश्यन्ति ते जनाः ।– यजु०, ४०/३**
( प्र०ब०व० ) – लोकृ – दर्शने + घञ् प्रत्ययः ।

## लोतः

**लुनातीति लोतः अश्रुचिह्नं वा ।**
**– उ०को०, ३/८६**

✓लूञ् – छेदने + तन् प्रत्ययः ( हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् – उ०को०, ३/८६ ) ।

## लोत्रं

**लुनाति छिनन्ति येन तत् लोत्रं चोरचिह्नं वा । – उ०को०, ४/१७३**

✓लूञ् – छेदने + उत्रः प्रत्ययः ( अशित्रादिभ्य इत्रोत्रौ – उ०को०, ४/१७३ ) ।

## लोम

लूयते छिद्यते तत् लोम गात्रकेशा वा ।
– उ०को०, ४/१५१

√लूञ् – छेदने + मनिन् प्रत्ययः निपातनात् (नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन् – उ०को०, ४/१५१) ।

## लोष्टं

लोष्टते सङ्घातो भवतीति लोष्टं मृत्पिण्डो वा । – उ०को०, ३/९२

√लोष्ट – संघाते + क्तः प्रत्ययः (लोष्टपलितौ – उ०को०, ३/९२) ।

## वकुलः

वङ्कते कुटिलो भवतीति वकुलः वृक्षभेदो वा । – उ०को०, १/४१

वङ्कि – कौटिल्ये + उरच् प्रत्ययः बाहुलकात् (मद्गुरादयश्च – उ०को०, १/४१), प्रत्यय रेफस्य लत्वञ्च धातोः नलोपश्च ।

## वक्त्रं

वक्ति येन तद् वक्त्रं मुखं वा ।
– उ०को०, ४/१६७

√वच – परिभाषणे + त्रः प्रत्ययः, धातोः चकारस्य कुत्वं (गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः – उ०को०, ४/१६७) ।

## वक्रः

वञ्चति प्रलम्भते स वक्रः कुटिलः क्रूरो वा। – उ०को०, २/१३

√वञ्चु – गतौ प्रलम्भने च + रक् प्रत्ययः धातो न लोपः चकारस्य कुत्वञ्च (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## वक्षः

वक्त्यस्मिन्निति वक्षः, वक्षः स्थलं वा ।
– उ०को०, ३/६२

वक्ति येन तद् वक्षः हृदयं वा ।
– उ०को०, ४/२२०

१- √वच – परिभाषणे + सः प्रत्ययः चकारस्य कुत्वञ्च (वृतॄवदिवचिसिहनिकमिकषिभ्यः सः – उ०को०, ३/६२) ।

२- √वच – परिभाषणे + असुन् प्रत्ययः, सुडागमश्च (पचिवचिभ्यां सुट् च – उ०को०, ४/२२०) ।

## वक्षणेस्थाः

या वाहने तिष्ठन्ति ताः । – ऋ०, ५/१९/५ (प्र०ब०व०) – √वह – प्रापणे + ल्युट् प्रत्ययः सुडागमश्च (वहिहाधाञ्भ्यश्छन्दसि – उ०को०, ४/२२१) > वक्षण > वक्षणे (स०ए०व०) + √ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः, ततः स्त्रियां टाप् प्रत्ययश्च ।

## वक्षा

वहति भारमिति अनड्वान् वा ।
– उ०को०, ४/२२१

√वह – प्रापणे + असुन् प्रत्ययः सुडागमश्च छन्दसि (वहिहाधाञ्भ्यश्छन्दसि – उ०को०, ४/२२१) ।

## वग्नुः

वक्तीति वग्नुः वाचालो वा ।
– उ०को०, ३/३३

√वच – परिभाषणे + नुः प्रत्ययः, धातोः गागमः (वचेर्गश्च – उ०को०, ३/३३) ।

## वङ्क्रिः

वङ्कतेऽसौ वङ्क्रिः वाद्यभेदो गृहदारु वा।
– उ०को०, ४/६६

√वङ्कि – कौटिल्ये + क्रिन् प्रत्ययः (वङ्क्र्यादयश्च – उ०को०, ४/६६)।

## वचक्नुः

वक्तीति वचक्नुः वाचालः प्राज्ञो वा।
– उ०को०, ३/८१

√वच – परिभाषणे + क्नुच् प्रत्ययः (सृयुवचिभ्यो-ऽन्युजागूजक्नुचः – उ०को०, ३/८१)।

## वज्रः

वजति प्राप्नोति वा स वज्रः हरिकं शस्त्रं वा। – उ०को०, २/२८

√वज – गतौ + रन् प्रत्ययः (ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्रेरामालाः – उ०को०, २/२८)।

## वज्रभृत्

यो वज्रं शस्त्रास्त्रसमूहं बिभर्ति सः।
– ऋ०, १/१००/१२

यो वज्रं बिभर्ति। – ऋ०, ६/१७/२

वज्र + √डुभृञ् – भरणे + क्विप् प्रत्ययः।

## वज्रधरः

वज्रं धारयति इति वज्रधरः।– उ०को०, २/२२

वज्र + √धृञ – धारणे + अच् प्रत्ययः।

## वञ्चथः

वञ्चति प्रलम्भयतीति वञ्चथः धूर्तः।
– उ०को०, ३/११३

√वञ्चु – प्रलम्भने + अथः प्रत्ययः (शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः – उ०को०, ३/११३)।

## वटिः

वाटयति ग्रथ्नाति स वटिः विभाजको वा। – उ०को०, ४/११८

√वटि - विभाजने + इन् प्रत्ययः (सर्वधातुभ्य इन् - उ०को०, ४/११८)।

## वटुः

वटति गुणकर्माणि विभजतीति वटुः द्विजसुतो वा। – उ०को०, १/८

√वट – विभाजने परिभाषणे च + उः प्रत्ययः बाहुलकात् (अणश्च – उ०को०, १/८)।

## वठरः

वक्तीति वठरः मूर्खो वा।– उ०को०, ५/३९

√वच – परिभाषणे + अरः प्रत्ययः, धातोः चकारस्य ठत्वं (वचिमनिभ्यां चिच्च – उ०को०, ५/३९)।

## वणिक्

पणायति व्यवहरतीति वणिक्, वणिजौ, वणिजः वैश्यो वा।
– उ०को०, २/७०

√पण – व्यवहारे + इजिः प्रत्ययः, धातोः आदेः पस्य वादेशः (पणेरिज्यादेश्च तः – उ०को०, २/७०)।

## वण्डः

वनति शब्दयति सम्भजति त्रा स वण्डः छिन्नहस्तको वा। – उ०को०, १/११४

√वन – शब्दार्थे सम्भक्तौ च + डः प्रत्ययः (अमन्ताड्डः – उ०को०, १/११४)।

## वतण्डः

वनति संभजति धर्ममिति वतण्डः ऋषिविशेषो वा। – उ०को०, १/१२९

√वन – शब्दार्थे सम्भक्तौ च + अण्डन् प्रत्ययः धातोः तकारान्तादेशः (अण्डन् कृसृभृवृञः – उ०को०, १/१२९)।

## वत्सः

वदतीति वत्सः बालो वा।– उ०को०, ३/६२

√वद – परिभाषणे + सः प्रत्ययः (वृतॄवदिवचिवसिहनिकमिकषिभ्यः सः – उ०को०, ३/६२)।

## वत्सं

वसत्यस्मिन्निति वत्सं निवासस्थानं वा।
– उ०को०, ३/६२

✓वस – निवासे + सः प्रत्ययः धातोः तकारान्तादेशः (वृतॄवदिवचिवसिहनिकमिकषिभ्यः सः – उ०को०, ३/६२)।

## वत्सरः

वसन्त्यस्मिन्निति वत्सरः वर्षो वा।

– उ०को०, ३/७१

✓वस – निवासे + सरन् प्रत्ययः धातोः सकारस्य स्थाने तकारः (वसेश्च – उ०को०, ३/७१)।

## वदन्तिः

वदतीति वदन्तिः कोलाहलो वा।

– उ०को०, ३/५०

✓वद – व्यक्तायां वाचि + झिच् प्रत्ययः बाहुलकात् (भुवो झिच् – उ०को०, ३/५०) झकारस्य अन्तादेशः (झोऽन्तः – अष्टा०, ७/१/३)।

## वदरं

वदतीति वदरं वदर्य्याः फलं वा।

– उ०को०, ३/१३१)।

✓वद – व्यक्तायां वाचि + अरः प्रत्ययः बाहुलकात् (ऋच्छेररः – उ०को०, ३/१३१)।

## वदान्यः

उद्यते वदतीति वा स वदान्यः वाग्मी त्यागी वा। – उ०को०, ३/१०४

✓वद – व्यक्तायां वाचि + आन्यः प्रत्ययः (वदेरान्यः – उ०को०, ३/१०४)।

## वधः

यानि वधेन स्नापयन्ति शस्त्राणि तैः।

– ऋ०, १/१६५/६

ये वधेन स्नान्ति पवित्रा भवन्ति ते।

– ऋ०, ५/४१/१३

वध + ✓ष्णा – शौचे + कः प्रत्ययः।

## वधकः

हन्तीति वधकः हिंसकः।– उ०को०, २/३६

✓हन् – हिंसागत्यो + क्वुन् प्रत्ययः, 'हन्' धातोः वधादेशः (हनो वध च – उ०को०, २/३६)।

## वधत्रं

हन्ति येन तद् वधत्रं आयुधं वा।

– उ०को०, ३/१०५

✓हन् – हिंसागत्योः + अत्रन् प्रत्ययः, 'हन्' धातोः वधादेशः निपातनात् (अमिनक्षियजिवधिपतिभ्योऽत्रन् – उ०को०, ३/१०५)।

## वधूः

वहति सुखानि प्रापयतीति वधूः नवोढा स्त्री वा। – उ०को०, १/८३

✓वह – प्रापणे + ऊः प्रत्ययः धातोः हकारस्य धत्वं (वहेर्धश्च – उ०को०, १/८३)।

## वनं

वन्यते सेव्यते तद्वनं जगत् तस्मात्किरणेभ्यो वा। – ऋ०, १/२९/७

वनन्ति सम्भजन्ति सुखानि यैस्तानि।

– ऋ०, ३/५१/५

✓वन – शब्दे, याचने, सम्भक्तौ च + कः प्रत्ययः।

## वनधितिः

वनानां धृतिः। – ऋ०, १/१२१/७

वन + ✓धि – धारणे + क्तिन् प्रत्ययः स्त्रियाम्।

## वनर्षदः

ये वनेषु रश्मिषु सीदन्ति ते।

– यजु०, ३३/९

वन + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः रुडागमश्च छन्दसि।

## वनसदे

यो वनेषु सीदति तस्मै। – यजु०, १७/१२

(च०ए०व०) – वन + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## वनिः

**वनति संभजतीति वनिः अग्निर्वा ।**

– उ०को०, ४/१४०

✓वन – सम्भक्तौ + इः प्रत्ययः (खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च – उ०को०, ४/१४०) ।

## वनिष्णुः

**वनोति याचतेऽसौ वनिष्णुः अपानवायुर्वा।**

– उ०को०, ४/२

✓वनु – याचने + इष्णुच् प्रत्ययः (ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्णुजिष्ठजिसन्स्यनिथिन्नुल्यसासानुकः – उ०को०, २/४) ।

## वनेजाः

**किरण समुदाये जायते सः ।**– ऋ०, ६/३/३

वने (स०ए०व०) + ✓जनि – प्रादुर्भावे + डः प्रत्ययः, सप्तम्या अलुक् (सप्तम्यां जनेर्डः – उ०को०, ३/२/९७) ।

## वनेराट्

**या वने सेवनीय किरणे वा राजते ।**

– ऋ०, ६/१२/३

वने (स०ए०व०) + ✓राजृ – दीप्तौ + क्विप् प्रत्ययः ।

## वनीयकः

**वनिं याचनमिच्छति वनीयतीति वनीयकः प्रार्थकः ।** – उ०को०, ४/१४१

वनिः + णिच् + ण्वुल् प्रत्ययश्च ।

## वन्दनश्रुत्

**येन वायुना वन्दनं भाषणं शृणोति श्रावयति वा तत्सम्बुद्धौ ।** – ऋ०, १/५५/७

✓वन्दि – अभिवादनस्तुत्योः + ल्युट् प्रत्ययः नुमागमश्च > वन्दन + ✓श्रु – श्रवणे + क्विप् प्रत्ययः ।

## वन्द्रः

**वन्दतेऽभिवदति स्तौति वा स वन्द्रः सत्कर्त्ता वा ।** – उ०को०, २/१३

✓वन्दि – अभिवादनस्तुत्योः + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## वन्धुरेष्ठाः

**यो वन्धुरे बन्धने तिष्ठति सः ।**

– ऋ०, ३/४३/१

✓बन्ध – बन्धने + उरच् प्रत्ययः (मद्गुरादयश्च – उ०को०, १/४१) > बन्धुरः, वर्णव्यत्ययेन बस्य वकारत्वात् > वन्धुरः स०ए० वचने > वन्धुरे + ✓ष्ठा – गतिनिवृत्तौ + क्विप् प्रत्ययः ।

## वन्नः

**वनति सम्भजतीति वन्नः विभागी ।**

– उ०को०, २/२८

✓वन् – संभक्तौ + रन् प्रत्ययः निपातनात् (ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः – उ०को०, २/२८) ।

## वपाः

**वपन्ति यया क्रियया सा वपा सा प्रशस्ता विद्यते यस्य सः ।** – यजु०, २०/३६

**वपन्ति याभिः क्रियाभिस्ताः।**– यजु०, २१/३१

**यो वपति क्षेत्राणि कृषीवल इव विद्यादिशुभान् गुणांस्तान् ।** – यजु०, ३०/७

**वपन्ति यस्यां भूमौ ताम् ।** – यजु०, ३५/२०

✓डुवप – बीजसन्ताने + कः प्रत्ययः ततः स्त्रियां टाप् प्रत्ययः ।

## वपुः

वपति बीजादिकमस्मान्तत् वपुः शरीरं वा । – उ०को०, २/११७

✓वप – बीजसन्ताने + उसिः प्रत्ययः ( अर्त्तिपृ वपियजितनिधनितपिभ्यो नित् – उ०को०, २/११७ ) ।

## वप्रः

वपति बीजं छिनत्ति वा स वप्रः पिता केदारः प्राकारो रोधो वा।– उ०को०, २/२७

✓वप – बीजसन्ताने + रन् प्रत्ययः ( वृधिवपिभ्यां रन् – उ०को०, २/२७ ) ।

## वप्रिः

वपन्ति यस्मिन् स वप्रिः क्षेत्रं वा ।

– उ०को०, ४/६६

✓वप – बीजसन्ताने + क्रिन् प्रत्ययः ( वङ्क्रमादयश्च – उ०को०, ४/६६ ) ।

## वयः

येन व्येति व्याप्नोति तत् । – यजु०, २१/१५

यो वेति गच्छति सः । – यजु०, २३/१२

यो वेति गच्छति स पक्षी ।– यजु०, २३/२१

वेति गच्छतीति वयः कालकृताऽवस्था वा । – उ०को०, ४/१८९

✓वय – गतौ + असुन् प्रत्ययः ( सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९ ) ।

## वयस्कृत्

यो वयोवृद्धावस्थापर्यन्तं विद्यासुखयुक्तमायुः करोति सः । – ऋ०, १/३१/१०

यो वयः करोति तम् । – यजु०, ३/१८

वय + ✓डुकृञ् – करणे + क्विप् प्रत्ययः ।

## वयुनं

वीयते गम्यतेऽत्रेति वयुनं मन्दिरं वा ।

– उ०को०, ३/६१

✓वय – गतौ + उनन् प्रत्ययः ( अजियमिशीङ्भ्यश्च – उ०को०, ३/६१ ) ।

## वयुनावित्

यो वयुनानि प्रज्ञानानि वेत्ति ।

– ऋ०, ५/८१/१

यो वयुनानि प्रशस्तानि कर्माणि वेत्ति सः । – यजु०, ५/१४

यो वयुनानि प्रज्ञानानि वेत्ति सः ।

– यजु०, १२/४

वयुना + ✓विद् – ज्ञाने + क्विप् प्रत्ययः, वयुना इत्यत्र दीर्घादेशः ( अन्येषामपि दृश्यते – अष्टा०, ६/३/१३६ ) ।

## वयोधाः

यो वयो जीवनं दधातीति ।– ऋ०, १/७३/१

यो वयः प्रजननं दधाति । – ऋ०, २/३/९

यो वयो जीवनं दधाति सः ।

– ऋ०, ३/४९/३

यः कमनीयानि वयांसि जीवनधनादीनि दधाति सः । – ऋ०, ४/३/२१

यो वयो जीवनं कमनीयं वस्तु दधाति सः । – ऋ०, ४/१७/१७

यो वयः कमनीयमादुर्दधाति सः ।

– ऋ०, ५/४३/१३

यो वयो जीवनं दधाति । – ऋ०, ६/६/७

यो वयो जीवनं दधाति तम् ।

– ऋ०, ६/४९/९

ये वयांसि दधति ते । – ऋ०, ६/७५/९

वयो जीवनं दधाति येन तेन।– यजु०, १५/७

यः सर्वेषां जीवनं दधाति सः ।

– यजु०, १५/५२

ये दीर्घं वयो जीवनं दधति ते ।

– यजु०, २९/४६

वयो दधातीति वयोधा तरुणो वा ।

– उ०को०, ४/२२९

वयस् + √डुधाञ् – धारणपोषणयोः + असिः प्रत्ययः (वयसि धाञः – उ०को०, ४/२२९) ।

## वयोनाधैः

वयांसि जीवनादीनि गायत्र्यादिछन्दांसि वा नह्यन्ति यैः प्राणैस्तैः। ये वयः कामयमानं जीवनं नह्यन्ति तैः । – यजु०, १४/७

(तृ०ब०व०) – वयस् + √णह – बन्धने + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१) धातोर्हस्य धादेशः (नहो धः – अष्टा०, ८/२/३४) ।

## वयोवृधः

ये वयः कमनीयं जीवनं वर्धयतः ।

– ऋ०, ५/५/६

ये वयसा वर्धन्ते, वयो वर्धयन्ति वा ।

– ऋ०, ५/५४/२

वयस् + √वृधु – वृद्धौ + क्विप् प्रत्ययः ।

## वरटः

वृणोतीति वरटः कीटभेदो वरटा हंसयोषिद्वा । – उ०को०, ४/८१

√वृञ् – वरणे + अटन् प्रत्ययः (शकादिभ्योऽटन् – उ०को०, ४/८१) ।

## वरणः

वृणोति स्वीकरोतीति वरणः उदकं वृक्षभेदो वा । – उ०को०, २/७४

√वृञ् – वरणे + युच् प्रत्ययः (सुयुरुवृञो युच् - उ०को०, २/७४) ।

## वरण्डः

वृणोति स्वीकरोतीति वरण्डः मुखरोगः सन्दोहो वा । – उ०को०, १/१२९

√वृञ् – वरणे + अण्डन् प्रत्ययः (अण्डन् कृसृभृवृञः – उ०को०, १/१२९) ।

## वरत्रा

वृणोत्युदकादिकं यया या वा सा वरत्रा चर्मरज्जुर्वा । – उ०को०, ३/१०७

√वृञ – वरणे + अत्रन् प्रत्ययः (वृञश्चित् – उ०को०, ३/१०७) ततः स्त्रियां टाप् प्रत्ययश्च ।

## वरतन्तुः

वरामुत्तमां विद्यां तनोति सः वरतन्तुः मुनिः। – उ०को०, १/६९

वर + √तनु – विस्तारे + तुन् प्रत्ययः (सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् – उ०को०, १/६९) ।

## वरसत्

यो वरेषु श्रेष्ठेषु सीदति सः ।

– ऋ०, ४/४०/५

यो वरेषूत्तमेषु पदार्थेषु सीदति सः ।

– यजु०, १०/२४

य उत्तमेषु विद्वत्सु सीदति सः ।

– यजु०, १२/१४

√वृञ् – वरणे + अप् प्रत्ययः (ग्रहवृदृनिश्चिगमश्च – अष्टा०, ३/३/५८) > वर + √षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## वरसानः

वृणोतीति वरसानः कृतदारो वा ।

– उ०को०, २/८६

✓वृञ् – वरणे + असानच् प्रत्ययः बाहुलकात् (छन्दस्यसानच् शृजॄभ्याम् – उ०को०, २/८६)।

## वराहुं

वरमाह्वयतः शब्दायमानान्।– ऋ०, १/८१/५

वराणां धर्म्याणां व्यवहाराणां धार्मिकाणां जनानाञ्च हन्तारं दस्युं शत्रुम्।

– ऋ०, १/१२१/११

वर + आङ् + ✓ह्वेञ् – स्पर्धायां शब्दे च अथवा ✓हन् – हिंसागत्योः + डुः प्रत्ययः (डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम् – अष्टा०वा०, ३/२/१८०)।

## वरिवोवित्

परिचरणं विन्दति प्राप्नोति येन तेन पराक्रमेण। – ऋ०, १/१७५/५

वरिवः सेवनं विन्दन्ति येन तम्।

– ऋ०, २/४१/९

वरिवः सत्यं व्यवहारं वेत्त्यनया सोऽतिशायिता। – यजु०, ८/४

येन वरिवः परिचरणं विन्दन्ति तम्।

– यजु०, २०/८३

ये वरिवः परिचरणं विदन्ति जानन्ति यद्वा वरिवो धनं वेदयन्ति प्राजयन्ति ते।

– यजु०, ३३/९४

वरिवस् + ✓विद् – ज्ञाने लाभे च + क्विप् प्रत्ययः।

## वरुणः

वरः श्रेष्ठतमो जगदीश्वरो वरत्वहेतुर्वायुर्वा।

– ऋ०, १/२४/८

यः सर्वान् शिष्टान् मुमुक्षून्धर्मात्मनो वृणोत्यथवा यः शिष्टैर्मुमुक्षुभिर्धर्मात्मभिर्व्रियते वर्य्यते वा स वरुणः परमेश्वरः।

– स० प्र० (प्रथमसमुल्लासः)

वृणोति व्रियते वाऽसौ वरुणः उत्तमं जलं वृक्षभेदो वा। – उ०को०, ३/५३

✓वृञ् – वरणे + उनन् प्रत्ययः (कृवृदारिभ्य उनन् – उ०को०, ३/५३)।

## वरुत्रं

वृणोतीति वरुत्रं प्रावरणं वा।

– उ०को०, ४/१७३

✓वृञ् – वरणे + उत्रः प्रत्ययः (अशित्रादिभ्य इत्रोत्रौ – उ०को०, ४/१७३)।

## वरुथः

वृणोति येन स्वीकरोति स वरुथः लोहेन रथावरणं वा। – उ०को०, २/६

✓वृञ् – वरणे + ऊथन् प्रत्ययः (जॄवृञ्भ्यामूथन् – उ०को०, २/६)।

## वरेण्यः

वर्त्तुमर्हमतिश्रेष्ठम्। – ऋ०, १/९/५

व्रियते स्वीक्रियतेऽसौ वरेण्यः श्रेष्ठो वा।

– उ०को०, ३/९८

✓वृञ् – वरणे + एण्यः प्रत्ययः (वृञ एण्यः – उ०को०, ३/९८)।

## वर्चस्

वर्चन्ते दीप्यन्ते सर्वे पदार्था यस्मिन् वेदाध्ययने तेन। – यजु०, २/२४

वर्चन्ते दीप्यन्तेऽनेन तद् वर्च्चो विद्याप्रापणम्। – यजु०, ३/९

वर्चते दीप्यतेऽसौ वर्चः तेजः पुरीषं वा।

– उ०को०, ४/१८९

✓वर्च – दीप्तौ + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९)।

## वर्चोदाः

वर्चो विद्यां दीप्तिं वा ददातीति ।

– यजु०, २/२६

यो वर्च्चो विज्ञानं ददातीति तत्प्राप्तिहेतुर्वा।

– यजु०, ३/१७

दीप्तिं ददातीति । – यजु०, ४/३

वर्चो बलं ददाति तत्सम्बुद्धौ।– यजु०, ७/२७

वर्चो विद्याबलं ददातीति । – यजु०, ७/२७

वर्चस् + ✓डुदाञ् – दाने + असुन् प्रत्ययः ।

## वर्चोधां

या वर्चो विद्यां दीप्तिं दधाति ताम् ।

– यजु०, ४/११

वर्चस् + ✓डुधाञ् – धारणपोषणयोः + कः प्रत्ययः ततः स्त्रियां टाप् प्रत्ययश्च ।

## वर्णः

वृणोति व्रियते वा सः वर्णः ब्राह्मणादिः शुक्लादिः स्तुतिर्यशो रूपमक्षरं स्वीकारश्च । – उ०को०, ३/१०

✓वृञ् – वरणे + नः प्रत्ययः (कृवृपॄजॄसिद्रूपन्यनिस्वपिभ्यो नित् – उ०को०, ३/१०) ।

## वर्णसिः

वृणोतीति वर्णसिः जलं वा ।

– उ०को०, ४/१०७

✓वृञ् – वरणे + असिः प्रत्ययः (सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः – उ०को०, ४/१०७), धातोर्नुगागमश्चेति ।

## वर्णुः

व्रियते सम्भजतीति वर्णुः गदो देशभेदो वा । – उ०को०, ३/३८

✓वृङ् – सम्भक्तौ + णुः प्रत्ययः (अजिवृरीभ्यो निच्च – उ०को०, ३/३८) ।

## वर्तनिः

वर्तन्ते यस्मिँस्तं मार्गम् । – ऋ०, ३/७/२

वर्तन्ते यस्मिँस्तं न्यायमार्गम् ।

– ऋ०, ७/१८/१६

वर्त्तते यस्मिन्निति वर्तनिः मार्ग एकपदी वा । – उ०को०, २/१०६

✓वृतु – वर्तने + अनिः प्रत्ययः (वृतेश्च – उ०को०, २/१०६) ।

## वर्त्तिः

वर्त्तन्ते व्यवहरन्ति यस्मिन्मार्गे ।

– ऋ०, १/३४/४

वर्तन्ते यस्मिन् गमनागमनकर्माणि तत् ।

– ऋ०, १/९२/१६

वर्त्तते सा वर्त्तिः दीपोपकरणं वा ।

– उ०को०, ४/१११

वर्त्तते तत्र येन वा स वर्त्तिः योगक्रिया साधनद्रव्यं मार्गो वा । – उ०को०, ४/१४१

१- ✓वृतु – वर्तने + इन् प्रत्ययः (हृपिषिरुहिवृतिविदिछिदिकीर्त्तिभ्यश्च – उ०को०, ४/१११)।

२- वृतु + इः प्रत्ययः छन्दसि (वृतेश्छन्दसि – उ०को०, ४/१४१) ।

## वर्त्तिका

वर्त्ततेऽसौ वर्त्तिका पक्षिभेदो वा ।

– उ०को०, ३/१४६

✓वृतु – वर्तने + + तिकन् प्रत्ययः (वृतेस्तिकन् – उ०को०, ३/१४६) ततः स्त्रियां टाप् प्रत्ययश्च ।

## वर्ध्र

वर्द्धते तत् वर्ध्रं चर्म्म वा ।– उ०को० २/२७

✓वृधु – वृद्धौ + रन् प्रत्ययः (वृधिवपिभ्यां रन् – उ०को०, २/२७) ।

## वर्पः

व्रियते स्वीक्रियते तत् वर्पः रूपम् । वर्णव्यत्यये वर्फः, शेफः इत्यपि सिद्धम्।

– उ०को०, ४/२०१

✓वृङ् – सम्भक्तौ + असुन् प्रत्ययः पुडागमश्च (वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च – उ०को०, ४/२०१) ।

## वर्वरः

वृणातीति वर्वरः प्राकृतजनो वा ।

– उ०को०, २/१२१

✓वृञ् – वरणे + ष्वरच् प्रत्ययः (कॄगॄशॄवॄ-ञ्चतिभ्यः ष्वरच् – उ०को०, २/१२१) ।

## वर्वरीकः

वृणोति स्वीकरोतीति वर्वरीकः कुटिल-केशो जनो वा । – उ०को०, ४/१९

✓वृञ – वरणे + ईकन् प्रत्ययः रुगागमः द्वित्वञ्च (शॄपॄवृजां द्वे रुक् चाभ्यासस्य – उ०को०, ४/१९)।

## वर्विः

वृणोतीति वर्विः भक्षको वा ।

– उ०को०, ४/५३

✓वृञ् – वरणे + विन् प्रत्ययः (वृदृभ्यां विन् – उ०को०, ४/५३) ।

## वर्षं

वर्षं संवत्सरो वृष्टिरार्यावर्तो मेघो वा ।

– उ०को०, ३/६२

✓वृञ् – वरणे + सः प्रत्ययः (वृतॄवदिवचिव-सिहनिकमिकषिभ्यः सः – उ०को०, ३/६२) ।

## वर्षाः

वर्षन्ति मेघा यासु ताभिः ।– यजु०, २१/२५

यो वर्षति तस्मै । – यजु०, २२/२६

यासु मेघा वर्षन्ति ताः । – यजु०, २३/५६

✓वृषु – सेचने + अच् प्रत्ययः ततः टाप् प्रत्ययः स्त्रियाम् ।

## वर्षाहूः

या वर्षा आह्वयति सा भेकी ।

– यजु०, २४/३८

वर्षा + ✓ह्वेञ् – स्पर्द्धायां शब्दे च + क्विप् प्रत्ययः।

## वलयः

वलते संवृणोतीति वलयः करभूषणं वा।

– उ०को०, ४/९९

✓वलि – संवरणे + कयन् प्रत्ययः (वलिमलितनिभ्यः कयन् – उ०को०, ४/९९) ।

## वलाका

वलते संवृणोत्यसौ वलाका वकपङ्क्तिः कामिनी, वलाको वकपक्षी वा ।

– उ०को०, ४/१४

✓वल – संवरणे + संचरणे च + आकः प्रत्ययः (वलाकादयश्च – उ०को०, ४/१४) ।

## वलिः

वलते संवृणोतीति वलिः महाराजो वा ।

– उ०को०, ४/११८

✓वल – संवरणे सञ्चलने च + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

## वलीकं

वलते संवृणोत्यनेन तत् वलीकं गृहच्छाद-नसामग्री वा । – उ०को०, ४/२५

✓वल – संवरणे + कीकन् प्रत्ययः (अलीकादयश्च – उ०को०, ४/२५) ।

## वलूकः

वलते संवृणोतीति वलूकः पक्षी कमलमूलं वा । – उ०को०, ४/४०

✓वल – संवरणे सञ्चरणे च + ऊकः प्रत्ययः (वलेरूकः – उ०को०, ४/४०) ।

## वल्कं

वलते संवृणोति येन तत् वल्कं वल्कलं वा । – उ०को०, ३/४२

✓वल – संवरणे सञ्चरणे च + कः प्रत्ययः निपातनात् (शुकवल्कोल्काः – उ०को०, ३/४२) ।

## वल्गुः

वलते प्राणयतीति वल्गुः नपुंसके शोभनम्।
– उ०को०, १/१९

✓वल – संवरणे + उ प्रत्ययः धातोः गुगादेशश्च (वलेर्गुक् च – उ०को०, १/१९) ।

## वल्मीकं

वलते संवृतो भवतीति वल्मीकं छिद्रमृषिभेदो वा । – उ०को०, ४/२५

✓वल – संवरणे + कीकन् प्रत्ययः बाहुलकात्, मुडागमश्च (अलीकादयश्च – उ०को०, ४/२५) ।

## वल्लभः

वल्लते संवृणोतीति वल्लभः प्रियो वा ।
– उ०को०, ३/१२५

✓वल – संवरणे + अभच् प्रत्ययः (रासिवल्लिभ्यां च – उ०को०, ३/१२५) ।

## वल्लूरं

वल्लते संवृणोतीति वल्लूरं शुष्कमांसं वा।
– उ०को०, ४/९०

✓वल – संवरणे + ऊरः प्रत्ययः (खर्जिपिञ्जादिभ्य ऊरोलचौ – उ०को०, ४/९०) ।

## वषट्कारान्

ये वषट्धर्म्यां क्रियां कुर्वन्ति तान् ।
– यजु०, ११/२०

(द्वि०ब०व०) – वषट् + ✓डुकृञ् – करणे + अण् प्रत्ययः ।

## वषट्कृतिं

वषट् करोति येन यज्ञेन तस्मिन् ।
– ऋ०, १/१४/८

वषट् क्रिया क्रियते यस्यां रीत्यां ताम् ।
– ऋ०, १/३१/५

वषट् + ✓डुकृञ् – करणे + क्तिन् प्रत्ययः स्त्रियाम्।

## वर्ष्मन्

यो वर्षति तत्सम्बुद्धौ । – ऋ०, ४/५४/४

✓वृषु – सेचने + मनिन् प्रत्ययः (सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५) ।

## वंसगः

वंसं धर्मसेविनं संविभक्तपदार्थान् गच्छतीति । – ऋ०, १/७/८

यो वंसं सम्भजनीयं गच्छति गमयति वा स वृषभः । – ऋ०, १/५५/१

यो वंसान् संभक्तान् पदार्थान् गच्छति प्राप्नोति सः । – ऋ०, १/५८/५

यो वंसान् सत्याऽसत्यविभाजकान् गच्छति।
– ऋ०, ५/३६/१

यो वंसं सम्भजनीयं व्यवहारं गच्छति सः।
– ऋ०, ६/१६/३९

✓वन-सम्भक्तौ + सः प्रत्ययः > वंस + ✓गम्लृ-गतौ + डः प्रत्ययः (अन्येष्वपि दृश्यते–अष्टा०, ३/२/१०१)।

## वसतिः

वसन्ति यस्यां वया । – ऋ०, १/६६/५

यो निवसति सः । – ऋ०, ६/३/३

यत्र वसन्ति सा । – यजु०, १८/१५

वसन्ति यत्रेति वसतिः वा गृहं रात्रिर्वा ।
– उ०को०, ४/६०

✓वस – निवासे + अतिः प्रत्ययः (वहिवस्यर्त्तिभ्यश्चित् – उ०को०, ४/६०) ।

## वसन्तः

यः सुगन्धादिभिर्वासयति । – यजु०, १३/५४

वसन्ति सुखेन यस्मिंस्तेन । – यजु०, २१/२३

यो वसति यत्र वा स वसन्तः ऋतुभेदो वा । – उ०को०, ३/१२८

✓वस – निवासे + झच् प्रत्ययः (तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च – उ०को०, ३/१२८) धातोः झस्यान्तादेशः (झोऽन्तः – अष्टा०, ७/१/३) ।

## वसापावानः

वसां निवासं पान्ति ते । – यजु०, ६/१९

(प्र०ब०व०) – ✓वस – निवासे + अच् प्रत्ययः, ततः स्त्रियां टाप् > वसा + ✓पा – रक्षणे + वनिप् प्रत्ययः ।

## वसिः

आच्छादयत्यनेनेति वसिः वस्त्रं वा ।

– उ०को०, ४/१४०

✓वस – आच्छादने + इः प्रत्ययः (खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च–उ०को०, ४/१४०)।

## वसिष्ठं

यो वसति धर्मादिकर्मसु सोऽतिशयितस्तम्।

– ऋ०, १/११२/९

✓वस – निवासे + इष्ठन् प्रत्ययः तृजन्तादतिशायने इष्ठन् प्रत्ययः, तृचो लोपश्च (तुरिष्ठेमेयःस्सु – अष्टा०, ६/४/१५४) ।

## वसुः

वसन्ति सर्वाणि भूतानि यस्मिन् वा वसति सर्वेषु भूतेषु यस्तत्सम्बुद्धौ ।– ऋ०, १/१०/४

सुखेषु वसन्ति येन तद्धनं विद्याऽऽरोग्यादिसुवर्णादि वा । – ऋ०, १/१०/६

वसन्ति सर्वाणि भूतानि यस्मिन् यो वा सर्वेषु भूतेषु वसति तत्सम्बुद्धौ ।

– ऋ०, १/३०/१०

वसन्ति सुखेन यत्र तद्विज्ञानम् ।

– ऋ०, १/५६/८

ये विद्यासु वसन्त्यन्यान् वासयन्ति ते ।

– ऋ०, ३/३९/८

यः शरीरादिषु वसति । – ऋ०, ४/४०/५

ये वसन्ति तत्सम्बुद्धौ । – ऋ०, ४/५५/१

यः सर्वत्र वसति । – ऋ०, ५/५१/१३

वसन्ति सर्वाणि भूतानि यस्मिन् यो वा सर्वेषु भूतेषु वसन्ति ते । – यजु०, ३/२५

योऽस्मिन् शरीरे वसति । – यजु०, २२/३०

वसन्ति भूतानि यस्मिन्त्स वसुस्तत्सम्बुद्धौ।

– यजु०, २३/१९

वसन्ति भूतानि यस्मिन्नथवा यः सर्वेषु भूतेषु वसति स वसुरीश्वरः ।

– स० प्र० (प्रथमसमुल्लासः)

आच्छादयति दुखं येन तद् वसुः धनं वा।

– उ०को०, १/१०

✓वस – आच्छादने + उः प्रत्ययः (शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१०) ।

## वसुदावन्

यो वसूनि द्रव्याणि ददाति तत्सम्बुद्धौ ।

– ऋ०, २/६/४

यो वसूनि धनानि सुपात्रेभ्यो ददाति तत्सम्बुद्धौ। – यजु०, १२/४३

यो वसूनि ददाति सः । – ऋ०, २/२७/१२

वसु + ✓डुदाञ् – धारणपोषणयोः + वनिप् प्रत्ययः।

## वसुरोचिः

वसूनग्न्यादीन् रोचतेऽसौ वसुरोचिः यज्ञो वा। बाहुलकात् केवलादपि रोचिः ज्वाला वा॥ – उ०को०, २/१११

वसु + ✓रुच – दीप्तावभिप्रीतौ च + इसिः प्रत्ययः वृद्धिश्च ( वसौ रुचेः सञ्ज्ञायां – उ०को०, २/१११ )।

## वसुवित्

यो वसूनि सर्वाणि वस्तूनि वेत्ति ।
– ऋ०, १/१८/२

यो वसूनि विन्दन्ति स वसुवित् सोऽतिशयितस्तम् । – ऋ०, १/४५/७

वसूनि सर्वाणि द्रव्याणि विदन्ति ये येन वा । – ऋ०, १/९१/१२

वसूनि विन्दति प्राप्नोति ।– ऋ०, १/१६४/४९

अतिशयेन वसु वेत्ति तम्।– ऋ०, ६/१६/४१

यो वसूनि विन्दति प्राप्नोति तम् ।
– ऋ०, ७/४१/६

यो वसूनि सर्वाणि वस्तूनि यथावद् वेत्ति वेदयति वा सः । – यजु०, ३/२९

वसून् पृथिव्यादिलोकान् वेत्ति सोऽतिशयितस्तम् पृथिव्यादि लोकान् वेदयतीति वा सूर्यरूपेणाग्निरेतान् प्रकाश्य प्रापयति स वसुवित्। अतिशयेन वसुविदिति वसुवित्तम् तम् । – यजु०, ३/३८

यो वसूनि द्रव्याणि वेदयति प्रापयति सोऽतिशयितः । – यजु०, ३/३९

येन वसूनि विविधानि धनानि विन्दन्ति तम् । – यजु०, ३८/३९

वसु + ✓विद्लृ – ज्ञानेविचारणे सत्तायां लाभे च + क्विप् प्रत्ययः ।

## वसूयवः

ये वसून् पृथिव्यादीन् युवन्ति मिश्रयन्त्यमिश्रयन्ति ते विद्वांसः । – ऋ०, १/४९/४

ये वसूनि युवन्ति मिश्रयन्त्यमिश्रयन्ति ते विद्वांसः । – ऋ०, ३/२६/१

( प्र०ब०व० ) – वसु + ✓यु – मिश्रणामिश्रणयोः + क्विप् प्रत्ययः धातोः पूर्वपदस्य दीर्घः ( अन्येषामपि दृश्यते – अष्टा०, ६/३/१३६ ) ।

## वस्तं

वसति यत्रेति वस्तं स्थानं वा ।
– उ०को०, ३/८९

✓वस – आच्छादने + क्तः प्रत्ययः बाहुलकात् ( अञ्जिघृसिभ्यः क्तः – उ०को०, ३/८९ ) ।

## वस्तिः

वस्त आच्छादयति सा वस्तिः। वसनस्य दशाः कोणो नाभेरधोभागो वा ।
– उ०को०, ४/१८०

✓वस – आच्छादने + तिः प्रत्ययः ( वसेस्तिः – उ०को०, ४/१८० ) ।

## वस्तुः

वसति येन तद् वस्तु द्रव्यं वा ।
– उ०को०, १/७०

✓वस – निवासे + तुन् प्रत्ययः ( वसेरगारे णिच्च – उ०को०, १/७० ) ।

## वस्त्रं

वस्त आच्छाद्यत इति वस्त्रम् ।
– उ०को०, ४/१५९

✓वस – आच्छादने + ष्ट्रन् प्रत्ययः ( सर्वधातुभ्यः ष्ट्रन् – उ०को०, ४/१५९ ) ।

## वस्त्रमथिं

यो वस्त्राणि मथ्नाति तम् । – ऋ०, ४/३८/५

✓वस् – आच्छादने + ष्ट्रन् प्रत्ययः > वस्त्र + ✓मथ

– विलोडने + इन् प्रत्ययः ( छन्दसि वनसनरक्षिमथाम् – अष्टा०, ३/२/२७ ) ।

## वस्नः

वसति येन स वस्नः मूल्यं वेतनं वा ।
– उ०को०, ३/६

✓वस – निवासे + नः प्रत्ययः ( धापॄवस्यज्यतिभ्यो नः – उ०को०, ३/६ ) ।

## वस्यः

वसीयोऽतिशयेन वासयितृ ।– ऋ०, २/२/१३

येऽतिशयेन वसन्ति ते वसीयांसस्तान् ।
– यजु०, ३/५८

✓वस – निवासे + ईयसुन् प्रत्ययः ( अतिशये ) ततः ईकारलोपः ।

## वहतिः

वहति प्रापयति पदार्थान् प्राप्नोति वेति वहतिः पवनो वा । – उ०को०, ४/६०

✓वह – प्रापणे + अतिः प्रत्ययः ( वहिवस्यर्त्तिभ्यश्चित् – उ०को०, ४/६० ) ।

## वहतुः

वहति भारमिति वहतुः अनड्वान् वा ।
– उ०को०, १/७७

✓वह – प्रापणे + तुः प्रत्ययः ( एधिवह्योश्च तुः – उ०को०, १/७७ ) ।

## वहन्तः

वहति कार्याणि प्रापयतीति वहन्तः वायुर्वा।
– उ०को०, ३/१२८

✓ वह – प्रापणे + झच् प्रत्ययः ( तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च – उ०को०, ३/१२८ ), झकारस्यान्तादेशः ( झोऽन्तः – अष्टा०, ७/१/३ )।

## वह्निः

वहन्ति प्रापयन्ति वार्त्ताः पदार्थान् यानानि च यैस्ते । – ऋ०, १/१४/६

वहति प्रापयति यथायोग्य सुखानि स वह्निः । – यजु०, १/८.

वहतीति वह्निः अग्निर्वा ।– उ०को०, ४/५१

✓वह – प्रापणे + निः प्रत्ययः ( वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् – उ०को०, ४/५१ ) ।

## वहित्रं

वहति येन तद् वहित्रं वाहनं वा ।
– उ०को०, ४/१७३

✓वह – प्रापणे + इत्रः प्रत्ययः ( अशित्रादिभ्य इत्रोत्रौ – उ०को०, ४/१७३ ) ।

## वह्यं

उह्यते यत्तद् वह्यं मनुष्यविशेषो वा ।
– उ०को०, ४/११२

✓वह –प्रापणे + यक् प्रत्ययः बाहुलकात् ( अघ्न्यादयश्च – उ०को०, ४/११२ ) ।

## वह्येशयाः

या वह्ये प्रापणीये शेरते ताः ।
– ऋ०, ७/५५/८

( प्र०ब०व० ) – ✓वह – प्रापणे + यत् प्रत्ययः ( वह्यं करणम् – अष्टा०, ३/१/१०२ ) > वह्य > वह्ये ( स०ए०व० ) + ✓शीङ् – शये + अच् प्रत्ययः ( अधिकरणे शेते – अष्टा०, ३/२/१५ ) ।

## वाक्

वचन्ति वाचयन्ति सर्वा विद्या यया ताम्। सत्यलक्षणां वेदचतुष्टयीम् ।– यजु०, २/१८

यया वक्ति सा । – यजु०, ५/३६

वक्ति यया सा वाणी । – यजु०, १८/२९

वक्ति यया सा । – यजु०, २०/६

यो वदति सः । – यजु०, ३९/५

वक्ति शब्दानुच्चारयति यया सा वाक् ।
– उ०को०, २/५७

✓वच् – परिभाषणे + क्विप् प्रत्ययः धातोः दीर्घश्च

(क्विप् वचिप्रच्छिश्रिसुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च – उ०को०, २/५७)।

## वागुरा

वान्ति मृगान् प्राप्नुवन्ति यया सा वागुरा।
– उ०को०, १/४१

√वा – गतिगन्धनयोः + उरच् प्रत्ययः बाहुलकात् (मद्गुरादयश्च – उ०को०, १/४१), धातोः गुगागमश्चेति निपातनात् ततः स्त्रियां टाप् प्रत्ययः।

## वाघत्

वाक् हन्यते ज्ञायते येन तस्मै विदुष ऋत्विजे मनुष्याय। – ऋ०, १/३१/१४

सुशिक्षिताभिर्वाग्भिरविद्या हन्यते येन स मेधावी। – यजु०, १५/२२

यशिशक्षया वाचा हन्ति जानाति सः।
– यजु०, २०/८२

वाक् + √हन् – हिंसागत्योः + अतिः प्रत्ययः, हकारस्य घकारश्च (वाघत इति मेधावी नाम च)।

## वाजः

वजन्ति प्राप्नुवन्ति जयपराजयौ येषु युद्धेषु तेषाम्। – ऋ०, १/११/१

वजन्ति प्राप्नुवन्ति सुखानि यस्मिन् व्यवहारे तस्य। – ऋ०, १/११/३

वाजयन्ति ज्ञापयन्ति गमयन्ति वा यासु क्रियासु ताः प्रशस्ता वाजिन्यो विद्यन्तेऽस्यां सा। – ऋ०, १/९२/१५

√वज – गतौ + घञ् प्रत्ययः (अकर्तरि च कारके संज्ञायाम् – अष्टा०, ३/३/१९)।

## वाजजित्

वाजमन्नं जयति येन सः। – यजु०, २/७

वाजं युद्धं जयति येन तम्। – यजु०, २/७

वाजं सर्वस्य वेगं जयति स ईश्वरः।

वाजं जयति येन वा सः भौतिकः।
– यजु०, २/१४

यो येन वा वाजं संग्रामं जयति तम्।
– यजु०, २/१४

वाज + √जि – जये + क्विप् प्रत्ययः तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९)।

## वाजदाः

यो वाजमन्नादिकं ददाति सः।
– ऋ०, ३/३६/५

वाज + √डुदाञ् – दाने + क्विप् प्रत्ययः।

## वाजप्रमहः

वाजैर्विज्ञानादिभिर्विद्वद्‌भिर्वा प्रकृष्टतया मह्यते पूज्यते यस्तत्सम्बुद्धौ।–ऋ०, १/१२१/१५

वाज + प्र + √मह – पूजायां + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९)।

## वाजंभरः

ये वाजं वेगं बिभर्त्ति तम्। – ऋ०, १/६०/५

वाजं + √भृञ् – भरणे + खच् प्रत्ययः (संज्ञायां भृतॄवृजिधारिसहितपिदमः – अष्टा०, ३/२/४६)।

## वाजसाः

वाजान् युद्धसमूहान् सनन्ति संभज्य विजयन्ते याभ्यां तावतिशयितौ।
– ऋ०, १/२८/७

यो वाजान् प्रशस्तान् बोधान् सम्भजते सोऽतिशयितः। – ऋ०, १/७८/३

वाजान् धनाढ्यान् पदार्थान् सनन्ति विभजन्ति यस्मिन्तस्मिन् सङ्ग्रामे।
– ऋ०, ३/३०/२२

यो वजान् सङ्ग्रामान् विभजति सः।
– यजु०, ९/५

वाजान् सङ्ग्रामान् सनन्ति सम्भजन्ति येन स: । – यजु०, ९/६

वाजान्यन्नानि सम्भजन्ति यया तस्यां युधि।
– यजु०, ३६/११

वाज + √षण् – सम्भक्तौ + विट् प्रत्यय: ( जनसनखनक्रमगमो विट् – अष्टा०, ३/२/६७) तत: धातोरात्वञ्च ( विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१ ) ।

## वाट्

ये वहन्ति ते । – ऋ०, ३/३०/२०

वहन्ति सुखानि यया क्रियया सा वाट् निपातोऽयम् । – यजु०, २/१८

येन वहति स: । – यजु०, १८/३८

√वह – प्रापणे + ण्वि: प्रत्यय: ( वहश्च – अष्टा०, ३/२/६४ ) ।

## वात:

वाति गच्छतीति । – यजु०, १८/४१

यो वाति तस्मै । – यजु०, २२/२६

वातीति वात: वायुर्व्याधिर्वा ।
– उ०को०, ३/८६

√वा – गतिगन्धनयो: + तन् प्रत्यय: ( हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् – उ०को०, ३/८६ ) ।

## वातप्रमी:

वात इव प्रमिणोति प्रक्षिपतीति वातप्रमी: अतिशीघ्रगामी हरिणविशेषो वा ।
– उ०को०, ४/१

वात + प्र + √मिञ् – प्रक्षेपणे + ई: प्रत्यय: ( वातप्रमी: – उ०को०, ४/१ ) ।

## वातापे

वात इव सर्वान् पदार्थान् व्याप्नोति तत् ।
– ऋ०, १/१८७/८

( सम्बोधनवाची ) – वात + √आप्लृ – व्याप्तौ + इन् प्रत्यय: ( सर्वधातुभ्य इन् – उ०को०, ४/११८ )।

## वाति

वाति गच्छतीति वाति: सूर्यश्चन्द्रो वा ।
– उ०को०, ५/६

√वा – गतिगन्धनयो: + अति: प्रत्यय: ( वातेर्नित् – उ०को०, ५/६ ) ।

## वादि:

वादयति व्यक्तमुच्चारयति स वादि: विद्वान् वा । – उ०को०, ४/१२५

√वद – संदेशवचने व्यक्तायां वाचि च + इञ् प्रत्यय: ( वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् – उ०को०, ४/१२५ ), धातोर्दीर्घश्च।

## वादित्रं

वाद्यते तद् वादित्रं तूर्यादिर्वा ।
– उ०को०, ४/१७१

√वद – सन्देशवचने, व्यक्तायां वाचि च + णित्रन् प्रत्यय: धातो: दीर्घश्च ( भूवादिगृभ्यो णित्रन् – उ०को०, ४/१७१ ) ।

## वापि:

वपन्ति यत्रेति वापि: वापी वा जलाशयभेदो वा । – उ०को०, ४/१२५

√वप – बीजसन्ताने + इञ् प्रत्यय: ( वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् – उ०को० ४/१२५ ), धातो: दीर्घश्च ।

## वामं

वमत्युद्गिरति येन तम् । – ऋ०, १/३३/३

√टुवम – उद्गिरणे + घञ् प्रत्यय: ( हलश्च – अष्टा०, ३/३/१२१ ) ।

## वाम:

वाति गच्छति गन्धनं वा गृह्णातीति वाम: शोभन: दुष्ट: पार्श्वभेदो वा ।
– उ०को० १/१४०

√वा – गतिगन्धनयो: + मन् प्रत्यय: ( अर्त्तिस्तुसुहुसृधृ-

क्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०)।

## वामभाजः

ये वामं भजन्ति ते । – ऋ०, ६/७१/६

(प्र०ब०व०) – वाम + ✓भज – संवायां + ण्विः प्रत्ययः (भजोण्विः – अष्टा०, ३/३/६२) ।

## वायसः

वयते गच्छतीति वायसः काको वा ।

– उ०को०, ३/१२०

वेति खादतीति वयः, वय एव वायसः काकः । – उ०को०, ४/१८९

✓वय – गतौ + असच् प्रत्ययः धातोर्दीर्घश्च (वयश्च – उ०को०, ३/१२०) अथवा ✓वा – गतिगन्धनयोः + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) युगागमश्च (आतो युक्चिण्कृतोः – अष्टा०, ७/३/३३) ।

## वायुः

यो वाति सः । – ऋ०, ६/४/५

योऽयं भौतिको वाति । – यजु०, १/१६

वायो वाति जानाति सूचयति सदसत्पदार्थान्निति वा वायुस्तत्सम्बुद्धौ।– यजु०, ६/१६

वायुवद्गत्यादिसिद्धये, यद्वा वाति प्रापयति योगबलेन व्यवहारानिति वायुर्योगविचक्षणस्तस्मै तादृश सम्पन्नाय।– यजु०, ७/८

यो वाति चराऽचरञ्जगद्धरति बलिनां बलिष्ठः स वायुः।– स० प्र० (प्रथम समु०)।

यो वाति जानाति धारयत्यनन्तबलत्वात् सर्वं जगत् स वायुः ।

– ऋ० भा० भू० सन्ध्योपासनम्

वाति गच्छति जानाति वेति वायुः पवनः परमेश्वरो वा । – उ०को०, १/१

✓वा– गतिगन्धनयोः + उण् प्रत्ययः (कृवापाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१), युगागमश्च (आतोयुक्चिण्कृतोः – अष्टा०, ७/३/३३) ।

## वारङ्गः

यो वृणोति गृह्णाति स वारङ्गः खड्गादिमुष्टिर्वा । – उ०को०, १/१२२

✓वृञ् – वरणे + अङ्गच् प्रत्ययः, धातोर्वृद्धिश्च (सृवृञोर्वृद्धिश्च – उ०को०, १/१२२) ।

## वारणेषु

वारयन्ति यैर्युद्धैस्तेषु, वा वारयन्ति ये चोरदस्युव्याघ्रादयो येषु तेषु।– यजु०, ३/३२

(स०ब०व०) – ✓वृञ् – आवरणे + युच् प्रत्ययः (सुयुरुवृञो युच् – उ०को०, २/७५), धातोरुपधा- वृद्धिश्च ।

## वारिः

वारयति निवारयतीति वारिः गजबन्धनी शृङ्खला वा । जले नपुंसकं वारि ।

– उ०को०, ४/१२५

✓वृञ् – आवरणे + इञ् प्रत्ययः, धातोर्दीर्घश्च (वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् – उ०को०, ४/१२५) ।

## वार्त्ताकः

वर्त्तते येन स वार्त्ताकः । – उ०को०, ४/१५

✓वृतु – वर्त्तने + आकः प्रत्ययः बाहुलकात् (पिनाकादयश्च – उ०को०, ४/१५) धातोः वृद्धिश्च ।

## वार्त्ताकुः

वर्त्ततेऽसौ वार्त्ताकुः हिङ्गुली, वृत्ताक इति प्रसिद्धम् वा । – उ०को०, ३/७९

✓वृतु – वर्त्तने + काकुः प्रत्ययः धातोर्वृद्धिश्च (वृतेर्वृद्धिश्च – उ०को०, ३/७९) ।

## वावदूकः

भृशं वक्तीति वावदूकः वक्ता ।

– उ०को०, ४/४१

✓वद – व्यक्तायां वाचि + ऊकः प्रत्ययः निपातनात् (उलूकादयश्च – उ०को०, ४/४१), धातोः द्वित्वं दीर्घश्च ।

## वाशि

वास्यते शब्दयतीति वाशिः काष्ठभेदिनी वा । – उ०को०, ४/११८

वास्यते शब्दयतीति वाशिः अग्निर्वा ।

– उ०को०, ४/१२५

१- ✓वाशृ – शब्दे + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

२- ✓वाशृ – शब्दे + इञ् प्रत्ययः (वसिवपियजिराजिव्रजिसदिहनिवाशिवा दिवारिभ्य इञ् – उ०को०, ४/१२५) ।

## वाशुरा

वाश्यते शब्दं करोतीति वाशुरा रात्रिर्वा।

– उ०को०, १/३८

✓वाशृ – शब्दे + उरच् प्रत्ययः (मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् – उ०को०, १/३८) ।

## वाश्रं

वाश्यते शब्दयतीति वाश्रं पुरीषं दिवसो मन्दिरं चतुष्पथं वा । – उ०को०, २/१३

✓वाशृ – शब्दे + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को० २/१३) ।

## वाष्पं

वाधते दुःखयतीति वाष्पं, नेत्रजलं ऊष्मा वा । – उ०को०, ३/२८

✓वाधृ – विलोडने दुःखे च + पः प्रत्ययः (खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः – उ०को०, ३/२८), धातोः धकारस्य षत्वम् ।

## वासः

वसन्ति यस्मिन् तद्वासो दिनं तस्य मध्ये। दिवस उपलक्षणेन रात्रिरपि ग्राह्या ।

– ऋ०, १/३४/१

वसते आच्छादयन्ते शरीरं येन तद्वस्त्रादिकम् । – यजु०, २/३२

वस्त आच्छादयति शरीरादिकमनेन तत् वासः वस्त्रं वा । – उ०को०, ४/२१८

✓वस – आच्छादने + असुन् प्रत्ययः, णित्वात् धातोर्वृद्धिश्च (वसेर्णित् – उ०को०, ४/२१८) ।

## वासरः

वासयतीति वासरः मङ्गलादिवारो वा ।

– उ०को०, ३/१३२

✓वास – उपसेवायां + अरः प्रत्ययः (अर्त्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् – उ०को०, ३/१३२)।

## वासिः

वस्त आच्छादयति वसति वा स वासिः।

– उ०को०, ४/१२५

✓वस – आच्छादने निवासे च + इञ् प्रत्ययः (वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् – उ०को०, ४/१२५), धातोर्दीर्घश्च ।

## वासुः

वसति जगदस्मिन् वा सर्वस्मिन् यो वसति स वासुः । – उ०को०, १/१

✓वस – निवासे + उण् प्रत्ययः बाहुलकात्, धातोर्वृद्धिश्च (कृवसपाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१) ।

## वास्तु

**वसन्ति प्राणिनो यत्र तद् वास्तु गृहं वा ।**
– उ०को०, १/७०

✓वस – निवासे + तुन् प्रत्ययः णित्वात् धातोर्वृद्धिश्च (वसेरगारे णिच्च – उ०को०, १/७०) ।

## वाहसः

**वहतीति वाहसः अजगरो वा ।**
– उ०को०, ३/११९

✓वह – प्रापणे + असच् प्रत्ययः णित्वात् धातोर्दीर्घश्च (वहियुभ्यां णित् – उ०को० ३/११९) ।

## वाहीकः

**वहतीति वाहीकः गौरश्वः ।**
– उ०को०, ४/२५

✓वह – प्रापणे + कीकन् प्रत्ययः बाहुलकात् धातोर्वृद्धिश्च (अलीकादयश्च – उ०को०, ४/२५)।

## विः

**यथा वयन्ति गच्छन्ति ये ते वयः पक्षिणस्तै।**
– ऋ०, १/४६/३

**वाति वायुवद्गच्छतीति विः पक्षी वा ।**
– उ०को०, ४/१३४

✓वा – गतिगन्धनयोः + इञ् प्रत्ययः, डित्वात् धातोराकारलोपः (वातेडिच्च – उ०को०, ४/१३४)।

## विकस्तं

**विविधतया कस्यते शिष्यते यत् तत् ।**
– यजु०, ११/३९

(द्वि०ए०व०) – वि + ✓कस – गतिशासनयोः + क्तः प्रत्ययः (अञ्जिघृसिभ्यः क्तः – उ०को०, ३/८९) ।

## विकिरिद्र

**विशेषेण किरिः सूकर इव द्रायति शेते विशिष्टं किरिं द्राति निन्दति वा तत्सम्बुद्धौ।**
– यजु०, १६/५२

वि + ✓कॄ – विक्षेपे + इः प्रत्ययः (कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च – उ०को०, ४/१४३) > विकिरि + ✓द्रै – स्वप्ने/✓द्रा – कुत्सायां गतौ + कः प्रत्ययः ।

## विकुस्रः

**विकसति विशेषतता गच्छतीति विकुस्रः चन्द्रमा वा ।** – उ०को०, २/१५

वि + ✓कस – गतौ + रक् प्रत्ययः, धातोरुपधाया उत्वञ्च (वौ कसेः – उ०को०, २/१५) ।

## विक्षिणत्केभ्यः

**ये शत्रून् विक्षयन्ति तेभ्यः ।**– यजु०, १६/४६ (च०ब०व०) – वि + ✓क्षणु – हिंसायां + क्तन् प्रत्ययः बाहुलकात् ।

## विक्षिपः

**यो विक्षिपति विक्षेपं प्राप्नोति सः ।**
– यजु०, ३९/७

वि + ✓क्षिप – प्रेरणे + कः प्रत्ययः ।

## विगाहं

**विविधान् पदार्थान् गाहन्ते विलोडयन्ति येन तम् ।** – ऋ०, ३/३/५

वि + ✓गाहू – विलोडने + घञ् प्रत्ययः (हलश्च – अष्टा०, ३/३/१२१) ।

## विचक्षाः

**विशेषेण चष्टेऽसौ विचक्षाः उपाध्यायो वा ।** – उ०को०, ४/२३३

वि + ✓चक्षिङ् – व्यक्तायां वाचि + असिः प्रत्ययः बाहुलकात् (चक्षेर्बहुलं शिच्च – उ०को०, ४/२३३)।

## विटपः

**वेटति शब्दयति वायुनेति विटपः शाखा-**

विस्तारो वा । – उ०को०, ३/१४५
✓विट – शब्दे + कपः प्रत्ययः ( विटपविष्टप-विशिपोलपाः – उ०को०, ३/१४५ ) ।

## विडङ्ग

विडत्याक्रोशतीति विडङ्गः, ओषधिविशेषो वा । – उ०को०, १/१२१
✓विड – आक्रोशे + अङ्गच् प्रत्ययः ( विडादिभ्यः कित् – उ०को०, १/१२१ ) ।

## विडालः

विडत्यक्रोशतीति विडालः मार्जारो वा ।
– उ०को०, १/११८
✓विड – आक्रोशे + कालन् प्रत्ययः ( तमिविशि-विडिमृणिकुलिकपिपलिपञ्जिभ्यः कालन् – उ०को०, १/११८ ) ।

## वितद्रुः

विशेषेण तनोतीति वितद्रुः नदी वा ।
– उ०को०, ४/१०२
वि + ✓तनु – विस्तारे + रुः प्रत्ययः, धातोर्नस्य दकारः ( जत्र्वादयश्च – उ०को०, ४/१०२ ) ।

## वितरं

विविधानि दुःखानि तरन्ति येन कर्मणा तत् । – ऋ०, १/१२४/५
विविधतया तरन्ति येन तम्।– ऋ०, ६/१/११
वि + ✓तॄ – प्लवनसंतरणयोः + अप् प्रत्ययः ( ऋदोरप् – अष्टा०, ३/३/५७ ) ।

## वितस्तिः

विशेषेण तस्यत्युपक्षिपति वा सा वितस्तिः द्वादशाङ्गुलं परिमाणं वा ।
– उ०को०, ४/१८२
वि + ✓तसु – उपक्षये + तिः प्रत्ययः ( वौ तसेः – उ०को०, ४/१८२ ) ।

## वित्तधं

यो वित्तं धनं दधाति तम् ।– यजु०, ३०/१०
✓विद्लृ – लाभे + क्तः प्रत्ययः > वित्त + ✓डुधाञ्-धारणपोषणयोः + कः प्रत्ययः ( आतोऽनुपसर्गे कः – अष्टा०, ३/२/३ ) ।

## विथुरः

व्यथते बिभेति यस्मात् सः विथुरः चौरो दुष्टो वा । – उ०को०, १/३९
✓व्यथ – भयसञ्चलनयोः + उरच् प्रत्ययः सम्प्रसारणत्वात् गुणनिषेधः ( व्यथेः सम्प्रसारणं धः किच्च – उ०को०, १/३९ ) ।

## विदथः

वेत्तीति विदथः योगी वा ।
– उ०को०, ३/११५
✓विद् – ज्ञाने + अथः प्रत्ययः ( रुविदिभ्यां ङित् – उ०को०, ३/११५ ) ।

## विदा

विन्दन्ति येन ज्ञानेन । – ऋ०, १/३२/१८
विदन्ति युद्धविद्याविजयान् यया क्रियया तस्यै । – ऋ०, १/१००/१०
( तृ०ए०व० ) – ✓विद् – ज्ञाने + क्विप् प्रत्ययः।

## विदुष्टरः

यो विविधानि दुरिष्टानि तारयति प्लावयति सः । – ऋ०, १/३१/१४
वि + दुष् + ✓तॄ – प्लवनसंतरणयोः + अच् प्रत्ययः।

## विद्वान्

यो वेत्ति सर्वा विद्याः सः । – ऋ०, १/४५/५

**वेत्ति यज्ञ विद्याक्रियाम् । – यजु०, ८/२०**

**यो वेत्ति सर्वं योगं सः । – यजु०, ७/४३**

**यो वेत्ति सः । – यजु०, १२/१५**

✓विद् – ज्ञाने + शतृ प्रत्ययः शतृ स्थाने वसुरादेशः (विदेः शतुर्वसुः – अष्टा०, ७/१/७०) नुमागमः (उगिदचां सर्वनामस्थाने – अष्टा०, ७/१/७०) उपधायाः दीर्घश्च (सान्तमहतः संयोगस्य – अष्टा०, ६/४/१०) संयोगान्तलोपश्च ।

## विद्युतः

**विविधतया द्योतयन्ते यास्ताः । – ऋ०, १/२३/१२**

(प्र०ब०व०) – वि + ✓द्युत – दीप्तौ + क्विप् प्रत्ययः (भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् – अष्टा०, ३/२/१७७) ।

## विधर्त्ता

**यो विविधान् शुभान् गुणान् धरति तत्सम्बुद्धौ । – ऋ०, २/१/३**

**यो विविधान् पदार्थान् धरति सः । – यजु०, ३४/३५**

वि + ✓डुधाञ् – धारणपोषणयोः + तृच् प्रत्ययः ।

## विधुः

**विध्यति दुर्गन्धिं दिवसं वेति बिधुः कर्पूरं चन्द्रमा वा । – उ०को०, १/२३**

✓व्यध – ताडने + कुः प्रत्ययः (पृ भिदिव्यधिगृधिधृषिहृषिभ्यः – उ०को०, १/२३), धातोः सम्प्रसारणञ्च (ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च – अष्टा०, ६/१/१६)।

## विधुरः

**व्यथते बिभेति यस्मात् स विधुरः अत्यन्त वियोगः शरीरत्यागो वा ।– उ०को०, १/३९**

✓व्यथ – भयसञ्चलनयोः + उरच् प्रत्ययः, बाहुलकात् थकारस्य धकारः, सम्प्रसारणत्वात् गुणनिषेधश्च (व्यथेः सम्प्रसारणं धः किच्च – उ०को०, १/३९) ।

## विधून्वानाय

**यो विविधं धुनोति तस्मै । – यजु०, २२/८**

(च०ए०व०) – वि + ✓धूञ् – कम्पने + शानच् प्रत्ययः।

## विपः

**विविधं पातीति विपो मेधावी।– यजु०, ७/१७**

वि + ✓पा – रक्षणे + कः प्रत्ययः (आतश्चोपसर्गे – अष्टा०, ३/१/१३६) ।

## विपणिः

**यः पणायति व्यवहरति स विपणिः वणिजां वीथी वा । – उ०को०, ४/११८**

वि + ✓पण – व्यवहारे स्तुतौ च + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

## विपन्यवः

**विविधं जगदीश्वरस्य गुण समूहं पनायन्ति स्तुवन्ति ये ते । – ऋ०, १/२२/२१**

(प्र०ब०व०) – वि + ✓पण – व्यवहारे स्तुतौ च + युच् प्रत्ययः बाहुलकात् (यजिमनिशुन्धिदसिजनिभ्यो युच् – उ०को०, ३/२०) ।

## विपाट्

**या विविधं पटति गच्छति विपाटयति वा सा । – ऋ०, ३/३३/१**

वि + ✓पट – गतौ + ण्विः प्रत्ययः, धातोर्दीर्घत्वञ्च।

## विपिनं

**यत् वेपते कम्पते यत्र वा तद् विपिनं गहनं वा । – उ०को०, २/५२**

✓वेपृ – कम्पने + इनन् प्रत्ययः धातो एकारस्य इत्वञ्च (वेपितुह्योर्ह्रस्वश्च – उ०को०, २/५२) ।

## विप्रः

विविध ज्ञानेन पदार्थान् प्राति पूरयति स विद्वान् । – ऋ०, १/१४/२

विविधान् पदार्थान् प्रान्ति तैः किरणैः ।

– ऋ०, १/६२/४

विशेषेण प्राति व्याप्नोति तस्य ।

– ऋ०, ५/८१/१

वपति धर्म्ममिति विप्रः मेधावी वा ।

– उ०को०, २/२८

१- √वप – बीजसन्ताने + रन् प्रत्ययः ( ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः – उ०को०, २/२८ ) धातोरुपधाया इत्वम् ।

२- वि + √प्रा – पूरणे + कः प्रत्ययः ( आतश्चोपसर्गे – अष्टा०, ३/१/१३६ ) ।

## विभराः

ये विशेषण विभरन्ति पोषयन्ति ते ।

– ऋ०, ५/३१/६

( प्र०ब०व० ) – वि + √डुभृञ् – भरणे + अच् प्रत्ययः ।

## विभाक्

यो विभजति । – ऋ०, ७/१८/१३

वि + √भज – सेवायां + ण्विः प्रत्ययः ( भजो ण्विः – अष्टा०, ३/२/६२ ) ।

## विभागे

विभजन्ति यस्मिँस्तस्मिन् । – ऋ०, ७/३६/३

विभजन्ति यस्मिन् तस्मिन् व्यवहारे ।

– ऋ०, ७/५६/२१

( स०ए०व० ) – वि + √भज – सेवायां + घञ् प्रत्ययः ।

## विभावरि

विविधं जगत् भाति दीपयति सा विभावरि।

– ऋ०, १/३०/२०

या विविधतया भाति प्रकाशयति तत् सम्बुद्धौ । – ऋ०, १/४८/१

वि + √भा – दीप्तौ + वनिप् प्रत्ययः ( छन्दसीवनिपौ च वक्तव्यौ – अष्टा०वा०, ५/२/१०९ ) ततः स्त्रियां ङीप् प्रत्ययः तथा नस्य रत्वञ्च ( वनो र च – अष्टा०, ४/१/७ ), सम्बुद्धौ ह्रस्वश्च ( अम्बार्थनद्योर्ह्रस्वः – अष्टा०, ७/३/१०७ ) ।

## विभावसुः

विशिष्टां भां दीप्तिं वासयति तत्सम्बुद्धौ।

– ऋ०, १/४४/१०

यो विविधा भा वासयति सः ।

– ऋ०, ३/२/२

येन विविधा भा विद्यादीप्तिर्वास्ते सः ।

– यजु०, १२/३१

यो विविधायां भायां वसति तत्सम्बुद्धौ ।

– यजु०, १२/१०६

यो विविधासु भासु विद्याप्रकाशेषु वा वसति सः । – यजु०, १७/५३

वि + √भा – दीप्तौ + अङ् प्रत्ययः स्त्रियां ( आतश्चोपसर्गे – अष्टा०, ३/३/१०६ ) > विभा + √वस – निवासे + उः प्रत्ययः ( शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च–उ०को०, १/१० )।

## विभावा

यो विशेषेण भाति प्रकाशयति सः ।

– ऋ०, १/५९/७

यो विविधान् पदार्थान् भाति प्रकाशयति सः । – ऋ०, १/६६/१

यः सर्वं विभातीति सः । – ऋ०, १/६९/५

यो विभाति सः । – ऋ०, १/१४८/४

वि + √भा – दीप्तौ + वनिप् प्रत्ययः ( आतो

मनिन्क्वनिप् वनिपश्च – अष्टा०, ३/२/७४) ।

## विभ्राट्

**यो विशेषेण भ्राजते सः ।** – यजु०, ३३/३०

वि + ✓भ्राजृ – दीप्तौ + क्विप् प्रत्ययः (भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् – अष्टा०, ३/२/१७७) ।

## विभ्राष्टिं

**विविधतया भृज्जन्ति परिपचन्ति येन तम्।**

– ऋ०, १/१२७/१

(द्वि०ए०व०) – वि + ✓भ्रस्ज – पाके + क्तिन् प्रत्ययः धातोरात्वञ्च ।

## विमुचं

**विमुचन्ति येन तम् ।** – ऋ०, ५/४६/१

(द्वि०ए०व०)–वि + ✓मुच्लृ–मोचने + कः प्रत्ययः।

## वियत्

**विविधैः प्रकारैर्यतते येन तत्।**– यजु०, १५/५

वि + ✓यती – प्रयत्ने + क्विप् प्रत्ययः ।

## विराट्

**यो विविधेषु गुणेषु कर्मसु वा राजते ।**

– ऋ०, १/१८८/८

**या विविधासु राजते ।** – यजु०, १३/२४

**विविधतया राजते ।** – यजु०, २०/५५

**यद्विविधं राजते तत् ।** – यजु०, २१/१९

**विविधैः पदार्थैं राजते प्रकाशते स विराट् ब्रह्माण्डरूपः ।** – यजु०, ३१/५

**यो विविधं नाम जगद्राजयति प्रकाशयति स विराट् ।** – स० प्र० (*प्रथमसमुल्लासः*)

**विविधं चराचरं जगद् राजयते प्रकाशयते स विराट् सर्वात्मेश्वरः ।**

– ऋ० भा० भू० सन्ध्योपासनम्

वि + ✓राजृ – दीप्तौ + क्विप् प्रत्ययः ।

## विलायकः

**येन विविधतया लीयते श्लिष्यते ।**

– यजु०, २०/३४

वि + ✓लीङ् – श्लेषणे + ण्वुल् प्रत्ययः ।

## विवर्त्तः

**विविधं वर्त्तते यस्मिन् सः ।** – यजु०, १४/२३

**विशेषेण वर्त्तन्ते यस्मिंस्तस्मिन् ।**

– यजु०, २५/३८

वि + ✓वृतु – वर्त्तने + घञ् प्रत्ययः ।

## विशालः

**विशति सर्वत्रेति विशालः ।** – उ०को०, १/११८

✓विश – प्रवेशने + कालन् प्रत्ययः (तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् – उ०को०, १/११८) ।

## विशिपं

**विशन्ति यत्रेति विशिपं मन्दिरं वा ।**

– उ०को०, ३/१४५

✓विश – प्रवेशने + कपः प्रत्ययः (विटपविष्टपविशिपोलपाः – उ०को०, ३/१४५), प्रत्ययादेरित्वञ्च ।

## विश्पलां

**विशः प्रजाः पात्यनेन सैन्येन तल्लाति यया ताम् ।** – ऋ०, १/११२/१०

(द्वि०ए०व०) – ✓विश – प्रवेशने + ✓पा – रक्षणे + कः प्रत्ययः > विश्प + ✓ला – आदाने + कः प्रत्ययः ततः स्त्रियां टाप् प्रत्ययः ।

## विश्वः

**विशन्ति परस्मिँस्तत्सर्वम् ।** – ऋ०, ५/६३/७

**विष्टानि सर्वाण्याकाशादीनि भूतानि**

यस्मिन् स विश्वः यः स विश्वः ।

– ऋ० भा० भू० सन्ध्योपासनम्

विशन्ति प्रविष्टानि सर्वाण्याकाशादीनि भूतानि यो वाऽऽकाशादिषु सर्वेषु भूतेषु प्रविष्टः स विश्व ईश्वरः ।

– स० प्र० (प्रथमसमुल्लासः)

विशति सर्वत्र स विश्वम् जगत् ।

– उ०को०, १/१५१

✓विश – प्रवेशने + क्वन् प्रत्ययः (अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् – उ०को०, १/१५१) ।

## विश्वगूर्तः

विश्वं सर्वं भोज्यं वस्तु निगलितं येन सः। – ऋ०, १/६१/९

विश्व + ✓गृ – निगरणे + क्तः प्रत्ययः, उत्वं (बहुलं छन्दसि – अष्टा०, ७/१/१०३) ततः दीर्घश्च (हलि च – अष्टा०, ८/३/७७) ।

## विश्वचक्षाः

यो विश्वं सर्वं जगच्चष्टे पश्यति सः ।

– यजु०, १७/१८

विश्व + ✓चक्षिङ् – व्यक्तायां वाचि + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) ।

## विश्वजन्या

या विश्वं जनयन्ति ताः । – ऋ०, १/१६९/८

या विश्वमखिलं जगज्जनयति प्रकटयति ताम् । – यजु०, १७/१४

विश्व + ✓जनि – प्रादुर्भावे + यत् प्रत्ययः ।

## विश्वजिते

यो विश्वं जयति तस्मै । – ऋ०, २/२१/१

(च०ए०व०) – विश्व + ✓जि – जये + क्विप् प्रत्ययः तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९) ।

## विश्वतुरा

यद्विश्वं सर्वं तुरति त्वरयति तेन ।

– ऋ०, १/४८/१६

(तृ०ए०व०) – विश्व + ✓तुर – त्वरणे + क्विप् प्रत्ययः ।

## विश्वतूः

विश्वान् शत्रून् तूर्यति हिनस्ति सः ।

– यजु०, ३३/६६

विश्व + ✓तूरी – गतित्वरणहिंसनयो + क्विप् प्रत्ययः ।

## विश्वतूर्त्तिः

या विश्वं सर्वं जगत् त्वरति ।

– ऋ०, २/३/८

विश्व + ✓ञित्वरा – सम्भ्रमे + क्तिन् प्रत्ययः, ऊठादेशः (ज्वरत्वरस्रिव्यविमवामुपधायाश्च – अष्टा०, ६/४/२०) उपधायाः वकार लोपश्चेति ।

## विश्वदोहसः

विश्वं सर्वं जगद्गुणैर्दुहन्ति पिपुरति ते ।

– ऋ०, १/१३०/५

विश्वं सर्वं विज्ञानं दोग्धि यया ताम् ।

– ऋ०, ६/४८/१३

(प्र०ब०व०) – विश्व + ✓दुह – प्रपूरणे + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९) ।

## विश्वधः

विश्वं दधातीति तत्सम्बुद्धौ ।

– ऋ०, १/६३/८

यो विश्वं दधाति । – ऋ०, १/७३/३

यो विश्वं दधाति सः । – ऋ०, १/१४१/६

यो विश्वं दधाति तत्सम्बुद्धौ ।

– ऋ०, ४/१६/१८

यो विश्वं दधाति सः । – ऋ०, ७/२२/७

विश्वं दधातीति । – यजु०, १/२

या विश्वं सर्वं जगद्विद्यागुणैः सह दधाति सा । – यजु०, १/४

या विश्वं सर्वं गृह्णाति गृहाश्रमीय राजव्यवहारं दधाति सा । – यजु०, १३/१८

विश्व + √डुधाञ् – धारणपोषणयोः + कः प्रत्ययः।

## विश्वप्सा

विश्वं सर्वं योग्यं वस्तु प्सायते भक्ष्यते यया । – यजु०, १२/१०

विश्वान् सर्वान् भोगान् यया प्साति तया।
– यजु०, १२/४१

विश्वं प्साति भक्षयतीति विश्वप्सा अग्निर्वा । – उ०को०, १/१५९

विश्व + √प्सा – भक्षणे + कनिन् प्रत्ययः निपातनात् (श्वन्नुक्षन्पूषन्प्लीहन्क्लेदस्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्य-रिज्वन्मातरिश्वन्मघवन्निति – उ०को०, १/१५९)।

## विश्वभराः

यो विश्वं बिभर्ति सः । – यजु०, १२/३२

विश्व + √डुभृञ् – भरणे + असुन् प्रत्ययः ।

## विश्वभोजाः

यो विश्वं भुनक्ति पालयति सः ।
– ऋ०, ५/४१/४

विश्व + √भुज – पालनव्यवहारयोः + असिः प्रत्ययः (विदिभुजिभ्यां विश्वेऽसिः – उ०को०, ४/२३८))।

## विश्वभृतः

ये विश्वं बिभ्रति ते । – यजु०, १०/४

(प्र०ब०व०) – विश्व + √डुभृञ् – भरणे + क्विप् प्रत्ययः तुगागमश्च ।

## विश्वमिन्व

यो विश्वं सर्वं विज्ञानमिन्वति व्याप्नोति तत् । – ऋ०, १/६१/४

विश्वं मिनोति व्याप्नोति यस्सः ।
– ऋ०, २/४०/६

यो विश्वं सर्वजगन्मिनोति ।
– ऋ०, ५/८०/२

यो विश्वं मिनोति तत्सम्बुद्धौ ।
– ऋ०, ७/२८/१

१- विश्व + √मिवि – सेचने + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१), धातोर्नुमागमः (इदितो नुम् धातोः – अष्टा०, ७/१/५८)।

२- विश्वं + √इवि – व्याप्तिप्रीणनयोः + अच् प्रत्ययः, नुमागमः (इदितो नुम् धातोः – अष्टा०, ७/१/५८) विभक्तेरलुक् च।

## विश्ववारः

विश्वं वृणीते संभाजयति तत्सम्बुद्धौ ।
– ऋ०, १/३०/१०

येन विश्वं सर्वं वृणोति तत् ।
– ऋ०, १/४८/१३

यद् विश्वं सर्वभद्रं वृणोति तत् ।
– ऋ०, १/११३/१९

याः सर्वं जगत् वृण्वन्ति ताः ।
– ऋ०, १/१२३/१२

यो विश्वं वृणोति । – ऋ०, ३/१७/१

या विश्वं वृणोति सा । – ऋ०, ५/२८/१

यो विश्वं सर्वमुत्तमं व्यवहारं वृणोति तम्।
– ऋ०, ६/४९/४

विश्वैस्सर्वैर्वरणीयः । – ऋ०, ७/५/८

विश्वान् सर्वानानन्दान् वृणोति तत्सम्बुद्धौ।
– यजु०, ७/७

यो विश्वं वृणोति सः । – यजु०, २७/१३

यो विश्वं वृणोति तम् । – यजु०, ३३/५५

विश्व + √वृञ् – वरणे + अण् प्रत्ययः ।

## विश्वविदं

विश्वे विदन्ति ताम् । – ऋ०, १/१६४/१०

यो विश्वानि सर्वाणि शास्त्राणि वेत्ति तम् । – ऋ०, ३/१९/१

यः समग्रं विन्दति तम् । – ऋ०, ३/२९/७

विश्वं सर्वं सुखं विन्दति याभ्यां ते रोदसी। – ऋ०, ६/७०/६

विश्व + √विद् – ज्ञाने + क्विप् प्रत्ययः ।

## विश्ववेदाः

विश्वानि सर्वाणि शिल्पादिसाधनानि विन्दन्ति यस्मात्तं सर्वप्रज्ञासमाचारज्ञं वा। – ऋ०, १/३६/३

विश्वानि सर्वाणि सुखानि विन्दति यस्मात्तम् । – ऋ०, १/४४/७

ये विश्वानि सर्वाणि कर्माणि वेदयन्ति प्रापयन्ति ते । – ऋ०, १/६४/८

विश्वानि सर्वाणि वस्तूनि विदन्ति येभ्यस्ते। – ऋ०, १/६४/१०

यो विश्वं विज्ञानं वेत्ति सः । – ऋ०, १/१४७/३

यो विश्वं धनं विन्दति स ।– ऋ०, ३/२५/१

यैर्विश्वं विन्दन्ति ते । – ऋ०, ३/२६/४

यो विश्वं विज्ञानं वेत्ति । – ऋ०, ६/४७/११

यो विश्वं वेत्ति स विश्ववेदाः परमेश्वरः, विश्वं सर्वं सुखं वेदयति प्रापयति स भौतिकोऽग्निर्वा । – यजु०, ३/३८

यः परमात्मा विश्वं सर्वं वेत्ति तद्वद्वर्त्तमानः। – यजु०, ७/४५

विश्वं सर्वमौषधं विदितं येन सः । – यजु०, १०/९

यो विश्वं विन्दति सः । – यजु०, २७/१२

विश्वे विद्यते विश्वं वा विन्दति स विश्ववेदाः अग्निर्वा । – उ०को०, ४/२३८

१- विश्व + √विद – सत्तायां ज्ञाने च + असिः प्रत्ययः (विदिभुजिभ्यां विश्वेऽसिः – उ०को०, ४/२३८)।

२- विश्व + √विद् – ज्ञाने, लाभे, सत्तायां विचारणे च + असुन् प्रत्ययः (विदिभुजिभ्यां विश्वेऽसिः – उ०को०, ४/२३८) ।

## विश्वव्यचाः

यथा विश्वस्मिन् व्यचो व्याप्तिर्यस्यास्ति तथा । – यजु०, ५/३३

विश्वं व्यचति प्रकाशेनाभिव्याप्य प्रकटयति सः । – यजु०, १३/५६

विश्वं विचति व्याप्नोति स विद्युद्रूपोऽग्निः । – यजु०, १५/१७

विश्व + √व्यच् – व्याजीकरणे + असुन् प्रत्ययः ।

## विश्वशम्भूः

यः सर्वस्मै जगते शं सुखं भावयति प्रकटयति तम् । – ऋ०, १/२३/२०

या विश्वस्मै शं सुखं भावयन्ति ताः । – यजु०, ४/७

विश्वं सर्वं शं सुखं भावयति । – यजु०, ८/४५

विश्व + शम् + √भू – सत्तायां + क्विप् प्रत्ययः ।

## विश्वसाहं

यो विश्वानि सर्वाणि शत्रुसैन्यानि सहते तम् । – ऋ०, ६/४४/४

विश्व + √षह – मर्षणे + ण्विः प्रत्ययः (छन्दसि सहः – अष्टा०, ३/२/६३) दीर्घत्वञ्चेति ।

## विश्वहा

**विश्वान्सर्वान् हन्ति सः ।– ऋ०, १/१०३/११**

**विश्वं हन्ति जानाति प्राप्नोति वा सः ।**

– ऋ०, २/२४/१५

विश्व + ✓हन् – हिंसागत्योः + क्विप् प्रत्ययः, धातोर्दीर्घश्च ( सौ च – अष्टा०, ६/४/१३ ) ।

## विश्वाचीः

**या विश्वमञ्चति । – ऋ०, ७/४३/३**

**या विश्वं सर्वं जगदञ्चति व्याप्नोति सा।**

– यजु०, १५/१८

**या विश्वमञ्चन्ति प्राप्नुवन्ति ता द्युतीः ।**

– यजु०, १७/५९

विश्व + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः ( ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च – अष्टा०, ३/२/५९ ) धातोर्नकारलोपः ( अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४ ) ङीप् प्रत्ययः स्त्रियां ( अञ्चतेश्चोपसंख्यानम् – अष्टा०वा०, ४/१/६ )।

## विश्वानरः

**यो विश्वानि सर्वाणि भूतानि नयति सः।**

– ऋ०, १/१८६/१

विश्व + ✓नृ – नये + अप् प्रत्ययः ( ऋदोरप् – अष्टा०, ३/३/५७ ) पूर्वपदस्य विश्वस्य च दीर्घः ( नरे संज्ञायाम् – अष्टा०, ६/३/१२८ ) ।

## विश्वाभुवे

**यो विश्वे भवति प्राप्नोति विश्वाभूर्यस्य विश्वं भवति यस्मादिति वा तस्मै ।**

– यजु०, ३३/२३

( च०ए०व० ) – विश्व + ✓भू – सत्तायां, प्राप्तौ च + क्विप् प्रत्ययः, पूर्वपदस्य विश्वस्य च दीर्घः ( अन्येषामपि दृश्यते – अष्टा०, ६/३/१३६ ) ।

## विश्वावसुः

**विश्वं वासयति यः सः । – यजु०, २/३**

विश्व + ✓वस – निवासे + उः प्रत्ययः ( शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१० ) पूर्वपदस्य संहितायां दीर्घश्च ( विश्वस्य वसुराटोः – अष्टा०, ६/३/१२८ ) ।

## विश्वासाहं

**यो विश्वं समग्रं कष्टं सहते तम् ।**

– ऋ०, ६/१९/११

**विश्वान् सर्वान् सहते तम् ।– यजु०, ७/३६**

विश्व + ✓षह – मर्षणे + ण्विः प्रत्ययः ( छन्दसि सहः – अष्टा०, ३/२/६३ ) धातोः दीर्घः तथा पूर्वपदस्य चापि दीर्घः ( अन्येषामपि दृश्यते – अष्टा०, ६/३/१३६ ) ।

## विश्वेदेवाः

**देवा दीव्यन्ति विश्वे सर्वे च ते देवा विद्वांसश्च ते । – ऋ०, १/३/७**

( प्र०ब०व० ) – विश्वे ( स०ए०व० ) + देव ( व्याख्यातः ) एतयोः पदयोः समासः, विभक्तेरलुक्।

## विषाः

**विशेषेण स्यति कर्मान्तं करोतीति विषा बुद्धिर्वा । – उ०को०, ४/३६**

✓विष – विप्रयोगे + कः प्रत्ययः ( विषाविहा – उ०को०, ४/३६ ) स्त्रियां टाप् च, अव्ययत्वञ्चापि प्रथितम् ।

## विषूचिका

**या विविधानर्थान् सूचयति सा ।**

– यजु०, १९/१०

वि + ✓सूच – पैशुन्ये + इकन् प्रत्ययः औणादिकः ततः स्त्रियां टाप् प्रत्ययः ।

## विषूची

**या विषून् व्याप्तानञ्चति सा ।**

– ऋ०, ३/५५/१५

✓विष्लृ – व्याप्तौ + कु प्रत्ययः ( पृभिदिव्यधिगृधिधृषिहृषिभ्यः – उ०को०, १/२३ ) > विषु +

✓अञ्चु – गतिपूजनयोः + क्विन् ( ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च – अष्टा०, ३/२/५९ ) धातोर्नकारलोपः ( अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४ ), ङीप् प्रत्ययः स्त्रियां ( अञ्चतेश्चोपसंख्यानम् – अष्टा०वा०, ४/१/६ ) पूर्वपदस्य च दीर्घः ( चौ – अष्टा०, ६/३/१३८ )।

## विष्टपं

विष्टान् प्रविष्टान् पाति येन तत् ।

– यजु०, १८/५१

विशन्ति यत्र तस्मै मार्गाय ।

– यजु०, ३०/१२

विशन्ति यत्रेति विष्टपं भुवनं वा ।

– उ०को०, ३/१४५

१- ✓विश – प्रवेशने + क्तः प्रत्ययः > विष्ट + ✓पा – रक्षणे + कः प्रत्ययः ।

२- ✓विश – प्रवेशने + तपः प्रत्ययः बाहुलकात्।

३- ✓विश – प्रवेशने + कपः प्रत्ययः तुडागमश्च ( विटपविष्टपविशिपोलपाः – उ०को०, ३/१४५ )।

## विष्टम्भेन

विशेषेण स्तभ्नोति शरीरं येन तेन ।

– यजु०, १५/६

( तृ०ए०व० ) – वि + ✓स्तम्भु – धारणार्थे + क्विप् प्रत्ययः उपसर्गपरतः धातोः सकारस्य षत्वं ( स्तम्भेः – अष्टा०, ८/३/६७ ) ।

## विष्टरश्रवाः

विष्टर आसने शृणोतीति विष्टरश्रवाः ।

– उ०को०, ४/२२७

विष्टर + ✓श्रु – श्रवणे + असिः प्रत्ययः पूर्वपदप्रकृतिस्वरत्वञ्च ( गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वञ्च – उ०को०, ४/२२७ ) ।

## विष्टिरः

ये विशेषेण तरन्ति ते ऋतवः ।

– ऋ०, २/१३/१०

( प्र०ब०व० ) – वि + ✓तॄ – प्लवनसंतरणयोः + क्विप् प्रत्ययः, ऋकारान्तस्य धातोरङ्गस्य इकारादेशः ( ऋत इद्धातोः – अष्टा०, ७/१/१०० ) सुडागमश्च।

## विष्ठाः

या विविधेषु स्थानेषु तिष्ठन्ति ताः ।

– यजु०, १३/३

विशेषेण तिष्ठति यज्ञो यासु ताः ।

– यजु०, २३/५७

( प्र.ब.व. )वि + ✓ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ततः टाप् प्रत्ययः स्त्रियाम् ।

## विष्णुः

वेवेष्टि व्याप्नोति सर्वत्र स विष्णुस्तस्य ।

– ऋ०, १/१५४/१

वेवेष्टि व्याप्नोति चराचरं जगत् स परमात्मा । – ऋ०, ३/५५/१०

यो वेवेष्टि स जगदीश्वरः । – ऋ०, ६/४९/१३

वेवेष्टि व्याप्नोति चराचरं विश्वं तत्सम्बुद्धौ परमेश्वर । – यजु०, १/४

यो वेवेष्टि व्याप्नोत्यन्तरिक्षस्थलवाय्वादि पदार्थान् स यज्ञः । – यजु०, २/२५

यो वेवेष्टि व्याप्नोति चराचरं जगत् स जगदीश्वरः । – यजु०, ५/१५

वेवेष्टि चराचरं जगत् तस्येश्वरस्य ।

– यजु०, १९/५६

वेवेष्टि व्याप्नोति चराऽचरं जगत्सः परमेश्वरः। – यजु०, ३४/४३

वेवेष्टि व्याप्नोति चराचरं जगत् स विष्णुः परमात्मा । – स० प्र० ( प्रथमसमुल्लासः )

वेवेष्टि व्याप्नोति चराचरं जगदिति विष्णुः जगदीश्वरः । – उ०को०, ३/३९

✓विष्लृ – व्याप्तौ + णुः प्रत्ययः ( विषेः किच्च – उ०को०, ३/३९ ) ।

## विष्पट्

**यो विषो व्याप्नुवतः पटति प्राप्नोति सः।**

– ऋ०, १/१८९/६

✓विष्लृ – व्याप्तौ + क्विप् प्रत्ययः > विष् + ✓पट् – गतौ + क्विप् प्रत्ययः ।

## विष्पर्धस्

**ये विशेषण स्पर्धन्ते तान्।**– ऋ०, ५/८७/४

**विशेषेण यः स्पर्द्धते सः ।** – यजु०, १५/५

वि + ✓स्पर्द्ध – संघर्षे + असुन् प्रत्ययः ( सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९ ) ।

## विष्वङ्

**यो विषु सर्वत्राञ्चति प्राप्नोति सः ।**

– यजु०, ३१/४

विषु + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः ( ऋत्विग्दधृग्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च – अष्टा०, ३/२/५९ ) ।

## विष्पृपः

**योद्धृभिर्विविधं यत्सृप्यते तस्य ।**

– यजु०, १/२८

( ष०ए०व० ) वि + ✓सृप्लृ – गतौ + कसुन् प्रत्ययः ( सृपितृदोः कसुन् – अष्टा०, ३/४/१७ ) ।

## विस्रुहः

**विसरन्ति विशेषेण गच्छन्ति।**– ऋ०, ६/७/६

( प्र०ब०व० ) – वि + ✓स्रु – गतौ + क्विप् प्रत्ययः, हुगागमश्च ।

## विस्रुहा

**यो विस्रून् रोगान् हन्ति ।** – ऋ०, ५/४४/३

विस्रु + ✓हन् – हिंसागत्योः + क्विप् प्रत्ययः, धातोरुपधादीर्घश्च ( सौ च – अष्टा०, ६/४/१३ )।

## विहवे

**विशेषेण ह्वयति शब्दयति यस्मिंस्तस्मिन्।**

– ऋ०, ३/८/१०

( स०ए०व० ) – वि + ✓ह्वेञ् – स्पर्द्धायां शब्दे च + अप् प्रत्ययः धातोः सम्प्रसारणञ्च ( ह्वः संप्रसारणञ्च न्यभ्युपविषु – अष्टा०, ३/३/७२ ) ।

## विहा

**विशेषेण जहाति त्यजति दुःखमिति विहा सुखलोको वा ।** – उ०को०, ४/३६

वि + ✓ओहाक् – त्यागे + कः प्रत्ययः ( विषाविहा – उ०को०, ४/३६ ) अव्ययत्वञ्चापि प्रथितम् ।

## विहायाः

**योऽनर्थान् विजहाति सः ।** – ऋ०, ३/३६/२

**विजिहते सद्यो गच्छति येन सः ।**

– ऋ०, ४/११/४

वि + ✓ओहाक् – त्यागे + असुन् प्रत्ययः, युगागमश्च।

## विहोत्राः

**विविधतया ये जुह्वत्याददति वा ते ।**

– यजु०, ५/१४

( प्र०ब०व० ) – वि + ✓हु – दानादानयोः + त्रन् प्रत्ययः ( हुयामाश्रुभसिभ्यस्त्रन् – उ०को०, ४/१६९ )।

## वीकः

**अजति गच्छतीति वीकः वायुः पक्षी वा।**

– उ०को०, ३/४७

✓अज – गतिक्षेपणयोः + कन् प्रत्ययः ( अजियुधुनीभ्यो दीर्घश्च – उ०को०, ३/४७ ), 'अज' धातोर्वी आदेशः ( अजेर्व्यघञपो – अष्टा०, २/४/५६ ) ।

## वीचिः

**वयति तन्तुन् सन्तनोतीति वीचिः तरङ्गो वा ।** – उ०को०, ४/७२

✓वेञ् – तन्तुसन्ताने + ईचिः प्रत्ययः, डित्वात् धातोः टिलोपः ( वेञो डिच्च – उ०को०, ४/७२ ) ।

## वीणा

वेति व्याप्नोति शब्दोऽस्याः सा वीणा वाद्यविशेषो वा । – उ०को०, ३/१५

✓वी – गतिव्याप्तिप्रजनकान्त्यसनखादनेषु + नः प्रत्ययः (रास्नासास्नास्थूणावीणाः – उ०को०, ३/१५), निपातनाण्णत्वम्, स्त्रियां टाप् च ।

## वीध्रं

विशेषेणेन्धते प्रदीप्यते तद् वीध्रं स्वभाव-शुद्धः । – उ०को०, २/२६

वि + ✓ञिइन्धी – दीप्तौ + क्रन् प्रत्ययः (वाविन्धेः – उ०को०, २/२६) ।

## वीरः

अजति वेद्यं जानाति प्रक्षिपति विनाशयति सर्वाणि दुःखानि वा यस्तत्संबुद्धौ ।

– ऋ०, १/३०/५

अजति गच्छति शत्रून् वा प्रक्षिपति स वीरः । – उ०को०, २/१३

✓अज – गतिक्षेपणयोः + रक् प्रत्ययः (स्फायितञ्चि-वञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विति-वृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिद-सिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) 'अज' धातोर्वीआदेशः (अजेर्व्यघञपोः – अष्टा०, २/४/५६)।

## वीरवाहः

ये वीरान् वहन्ति प्रापयन्ति ते ।

– ऋ०, ७/४२/२

वीर + ✓वह – प्रापणे + ण्विः प्रत्ययः (वहश्च – अष्टा०, ३/२/६४) ।

## वीरहणं

यो वीरान् हन्ति तम् । – यजु०, ३०/५

(द्वि०ए०व०) – वीर + ✓हन् – हिंसागत्योः + क्विप् प्रत्ययः ।

## वृकः

यो वृश्चति छिनत्ति तस्य ।– यजु०, ११/१२

वृणोतीति वृकः काकः श्वापदो वा ।

– उ०को०, ३/४१

१- ✓वृञ् –वरणे + कक् प्रत्ययः (सृवृभूशुषिमुषिभ्यः कक् – उ०को०, ३/४१)।

२- ओव्रश्चू-छेदने + अप् प्रत्ययः, सम्प्रसारणं चकारस्य ककारः (चोः कुः - अष्टा० ८/२/३०)

## वृक्षः

यो वृश्च्यते छिद्यते तं कार्यकारणाख्यं वा । – ऋ०, १/१६४/२०

यो वृश्च्यते तम् । – ऋ०, ५/७८/६

ये शत्रून् वृश्चन्ति छिन्दन्ति तेभ्यः पादपेभ्यो वा । – यजु०, १६/४०

यो वृश्च्यते छिद्यते स संसारः ।

– यजु०, १७/२०

वृश्चनीये छेदनीये शत्रुसैन्ये ।

– यजु०, २६/५१

वृश्च्यते छिद्यतेऽसौ वृक्षः ।

– उ०को०, ३/६६

✓वृश्च – छेदने + सः प्रत्ययः (स्नुव्रश्चिकृत्यृषिभ्यः कित् – उ०को०, ३/६६) अथवा ✓वृक्ष – वरणे + अच् प्रत्ययः (अजपि सर्वधातुभ्यः – अष्टा०, ३/१/१३४) ।

## वृजनं

वर्जन्ति दुःखानि येन बलेन तस्मिन् ।

– ऋ०, १/५१/१५

वृजते शत्रून् येन तस्मिन् । – ऋ०, १/६३/३

वर्जन्ति दुःखानि जना यत्र तस्मिन् व्यवहारे। – ऋ०, १/१०१/८

व्रजन्ति जना येषु मार्गेषु । – ऋ०, २/२/१

व्रजन्ति येन यस्मिन् वा । – ऋ०, ६/३५/५

वृजन्ति येषु यैस्सह वा ते।– ऋ०, ७/३२/२७

वर्जन्ति दुःखानि येन तदबलम् ।

– यजु०, ३४/४८

वृक्ते वर्जयतीति वृजनं अन्तरिक्षं वलं वा। – उ०को०, २/८१

✓वृजी – वर्जने + क्युः प्रत्ययः (कॄपॄवृजिमन्दिनिधाञः क्युः – उ०को०, २/८१) ।

## वृजिनः

वृक्ते वर्जयतीति वृजिनः केशः पापं वक्रो वा । – उ०को०, २/४७

✓वृजी – वर्जने + इनच् प्रत्ययः (वृजेः किच्च – उ०को०, २/४७) ।

## वृतञ्चयः

यो वर्त्तते तं चिनोति सः।– ऋ०, २/२१/३

✓वृतु – वर्त्तने + कः प्रत्ययः > वृतं + ✓चिञ् – चयने + खः प्रत्ययः ।

## वृत्रः

वर्त्तते सदैवासौ वृत्रः मेघः शत्रुस्तमः पर्वश्चक्रं वा । – उ०को०, २/१३

✓वृतु – वर्त्तने + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## वृत्रखादः

यो वृत्रं मेघं खादति किरणो वायुर्वा ।

– ऋ०, ३/४५/२

यो वृत्रं खादति स्थिरीकरोति ।

– ऋ०, ३/५१/९

वृत्र + ✓खादृ – भक्षणे + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१) ।

## वृत्रघ्नः

वृत्रं मेघं हन्ति यस्तेन सूर्येणेव ।

– ऋ०, १/१७५/५

यः सूर्यो वृत्रं मेघं हन्ति तद्वर्तमानाय ।

– ऋ०, ३/३१/१४

वृत्र + ✓हन् – हिंसागत्योः + कः प्रत्ययः (घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् – अष्टा०वा०, ३/३/५८), उपधालोपः (गमहनजनखनघसां लोपः क्ङित्यनङि – अष्टा०, ६/४/९८) ततः कुत्वञ्च (हो हन्तेः ञ्णिन्नेषु – अष्टा०, ७/३/५४) ।

## वृत्रतुरः

यो वृत्रं मेघं घनं वा त्वरयति तम् ।

– ऋ०, ४/४२/८

वृत्रानिव शत्रूंस्तुर्वति हिनस्ति येन तम् ।

– ऋ०, ६/२०/१

वृत्रं मेघं तूर्वन्ति यास्ता विद्युत इव ।

– यजु०, ६/३४

वृत्र + ✓तुर्वी – हिंसायां अथवा ✓ञित्वर – सम्भ्रमे + क्विप् प्रत्ययः ।

## वृत्रहा

यो वृत्रं मेघं हन्ति सः । – ऋ०, १/१७/८

यो वृत्रं मेघं शत्रुं वा हन्ति तम् ।

– ऋ०, १/५९/६

यो दुःखप्रदान् शत्रून् मेघदोषान्वा हन्ति सः । – ऋ०, १/९१/५

यो वृत्रं घनं हन्ति प्राप्नोति तत्सम्बुद्धौ ।

– ऋ०, ३/४०/८

यो वृत्रं हन्ति सूर्यस्तद्वत् । – ऋ०, ४/३२/१

यो वृत्रं मेघं हन्ति तम् । – ऋ०, ४/४२/९

यो वृत्रं घनं हन्ति प्राप्नोति सोऽतिशयितस्तत्सम्बुद्धौ । – ऋ०, ५/४०/१

योो वृत्रं हन्ति स: । – ऋ०, ६/१६/१९

यो वृत्रं मेघं हन्ति तमतिशयितम् ।

– ऋ०, ६/१६/४८

येन वृत्रं हन्ति तत् । – ऋ०, ६/२०/९

यो वृत्रं हन्ति । – ऋ०, ६/४७/६

यो वृत्रं मेघं हन्ति स वृत्रहा सूर्य्यस्तद्वत् ।

– यजु०, ७/३७

वृत्रान् शत्रून् हन्ति तत्सम्बुद्धौ ।

– यजु०, ८/३३

यथा सूर्यो वृत्तं हन्ति तथा शत्रुहन्तारम् ।

– यजु०, ११/३३

यो वृत्रं मेघं हन्ति तमतिशयितं सूर्यमिव ।

– यजु०, २०/३०

यो वृत्रं मेघं हन्ति स सूर्य: ।

– यजु०, २०/७५

यो वृत्रं मेघं हन्ति स सूर्य्यस्तद्वद्वर्त्तमान: ।

– यजु०, २०/९०

यो वृत्रं हन्ति । – यजु०, ३३/९६

वृत्र + ✓हन् – हिंसागत्यो: + क्विप् प्रत्यय: (ब्रह्मभ्रूणवृत्रेषु क्विप् – अष्टा०, ३/२/८७) ।

## वृद्धश्रवा

वृद्धं श्रव: श्रवणमन्नं वा सृष्टौ यस्य स: ।

– ऋ०, १/८९/६

वृद्धेभ्य: शृणोतीति वृद्धश्रवा: ।

– उ०को०, ४/२२७

✓वृधु – वृद्धौ + क्त: प्रत्यय: > वृद्ध: + ✓श्रु – श्रवणे + असि: प्रत्यय: (गतिकारकोपपदयो: पूर्वपर-प्रकृतिस्वरत्वञ्च – उ०को०, ४/२२७) ।

## वृद्धि:

वर्ध्यन्ते यास्ता: । – ऋ०, १/१०/१२

वर्द्धन्ते यया सत्क्रियया सा ।

– यजु०, १८/४

✓वृधु – वृद्धौ + क्तिन् प्रत्यय: स्त्रियाम् ।

## वृधसान:

वर्धतेऽसौ वृधसान: पुरुषो वा ।

– उ०को०, २/८७

✓वृधु – वर्धने + असानच् प्रत्यय: (ऋञ्जिवृधिम-न्दिसहिभ्य: कित् – उ०को०, २/८७) ।

## वृन्दं

वृणोतीति वृन्दं समूहो वा।– उ०को०, ४/९८

✓वृञ – वरणे + द: प्रत्यय: निपातनात् (अब्दादयश्च – उ०को०, ४/९८), नुम् गुणाभावे सति इक: उपधायामभावादेव गुणनिषेध: ।

## वृश:

वृणोतीति वृश: ओषधिर्वा ।

– उ०को०, ४/१०४

✓वृञ् – वरणे + शक् प्रत्यय: (जनिदाच्युसृवृमदिष-मिनमिभृञ्भ्य इत्वन्त्वन्त्नण्क्निन्शकस्यढडटोटच: – उ०को०, ४/१०४) ।

## वृश्चिक:

यो वृश्चति छिनत्यङ्गानि तस्य ।

– ऋ०, १/१९१/१६

वृश्चति छिनत्तीति वृश्चिक: विषी जीव-विशेष: शूककीटो वा ।

– उ०को०, २/४०

✓व्रश्चू – छेदने + किकन् प्रत्यय: (व्रश्चिकृषो: किकन् – उ०को०, २/४०) ।

## वृषखादय:

ये वृषान् रसवर्षकान् पदार्थान् खादयन्ति ते । – ऋ०, १/६४/१०

(प्र०ब०व०) – ✓वृषु-सेचने + कः प्रत्ययः > वृष + ✓खादृ – भक्षणे + इक् प्रत्ययः ।

## वृषपाणः

ये वृषन्ति पोषयन्ति ते वृषाः सोमादयः पदार्थास्तेषां पानेषु । – ऋ०, १/५१/१२

वर्षन्ति यैस्तानि वृषाणि पानानि येषां ते। – ऋ०, १/१३९/६

(प्र०ब०व०) – वृष + ✓पा – पाने + ल्युट् प्रत्ययः ।

## वृषभः

यो वर्षति सुखानि सः । – ऋ०, १/३१/५

यः पूर्वोक्तान् वृषान् भाति सः । – ऋ०, १/५४/३

वर्षतीति वृषभः श्रेष्ठपर्यायो वलीवर्दो वा । – उ०को०, ३/१२३

✓वृषु – सेचने + अमच् प्रत्ययः, कित्त्वात् गुण निषेधः (ऋषिवृषिभ्यां कित् – उ०को०, ३/१२३)।

## वृषयः

वृणोतीति वृषयः आश्रयो वा । – उ०को०, ४/१००

✓वृञ् – वरणे + कयन् प्रत्ययः षुगागमश्च (वृह्रोः षुग्दुकौ च – उ०को०, ४/१००) ।

## वृषलः

वर्षति सिञ्चतीति वृषलः शूद्रो वा । – उ०को०, १/१०६

✓वृषु – सेचने + कल प्रत्ययः, चित्त्वात् गुणनिषेधः (वृषादिभ्यश्चित् – उ०को०, १/१०६) ।

## वृषा

वर्षति सुखानि तत्सम्बुद्धौ, वर्षयति जलं वा स वा । – ऋ०, १/७/६

यो वर्षति जलं स वृषा तम्।– ऋ०, १/१६/१

वर्षन्ति ये तत्सम्बुद्धौ । – ऋ०, १/८५/१२

वर्षतीति वृषा सूर्यो वा ।– उ०को०, १/१५६

✓वृषु – सेचने + कनिन् प्रत्ययः (कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः – उ०को०, १/१५६) ।

## वृषायुधः

ये वृषेण वीर्यवता शूरवीरेण सह युध्यन्ते ते। – ऋ०, १/३३/६

वृष + ✓युध – सम्प्रहारे + क्विप् प्रत्ययः, पूर्व पदस्य च दीर्घः (अन्येषामपि दृश्यते – अष्टा०, ६/३/१३७) ।

## वृष्णिः

वर्षतीति वृष्णिः क्षत्रियो वैश्यो वा । – उ०को०, ४/४९

✓वृषु – सेचने + निः प्रत्ययः (सृवृषिभ्यां कित् – उ०को०, ४/४९) ।

## वेणिः

वीयते क्षिप्यते स वेणिः केशविन्यासो वा । – उ०को०, ४/४८

✓अज – गतिक्षेपणयोः + निः प्रत्ययः अजेर्वीभावत्वात् (अजेर्व्यघञपोः – अष्टा०, २/४/५६) > वी + निः प्रत्ययः (वीज्याज्वरिभ्यो निः – उ०को०, ४/४८) धातो एत्वं, ततः निपातनाण्णत्वञ्चेति ।

## वेणुः

अजति गच्छति प्रक्षिपति वा स वेणुः वंशो राजविशेषो वा । – उ०को०, ३/३८

✓अज – गतिक्षेपणयोः + णुः प्रत्ययः (अजिवृरीभ्यो निच्च – उ०को०, ३/३८), अजेर्वीभावः (अजेर्व्यघञपो – अष्टा०, २/४/५६) धातो एत्वञ्च।

## वेतनं

वेत्ति प्राप्नोति खादति वा तद् वेतनं भृतिर्वा। – उ०को०, ३/१५०

√वी – गतिव्याप्तिप्रजनकान्त्यसनखादनेषु + तनन् प्रत्ययः ( विपतिभ्यां तनन् – उ०को०, ३/१५० ) ।

## वेतस:

वयसि तन्तून् संतनोतीति वेतसः वृक्षभेदो वा । – उ०को०, ३/११८

√वेञ् – तन्तुसन्ताने + असच् प्रत्ययः तुडागमश्च ( वेञस्तुट् च – उ०को०, ३/११८ ) ।

## वेत्रं

वेति गच्छतीति वेत्रं लताविशेषो वा ।

– उ०को०, ४/१६७

√वी – गतिव्याप्तिप्रजनकान्त्यसनखादनेषु + त्रः प्रत्ययः ( गुधृवीपचिवचियमिसदिक्षदिभ्यःस्त्रः – उ०को०, ४/१६७ ) धातो एत्वञ्च ।

## वेद:

विन्दन्ति सुखानि येन धनेन तत् ।

– ऋ०, १/७०/५

विदन्ति सुखानि येन तद्धनम् ।

– ऋ०, १/८१/९

वेत्ति चराचरं जगत् स जगदीश्वरः विदन्ति येन स ऋग्वेदादिर्वा । – यजु०, २/२१

विदन्ति जानन्ति, विद्यन्ते भवन्ति, विन्दन्ति विन्दन्ते लभन्ते, विन्दते विचारयन्ति सर्वे मनुष्याः सर्वाः सत्यविद्या यैर्येषु वा तथा विद्वांसश्च भवन्ति ते वेदाः ।

– ऋ० भा० भू० ( वेदात्पतिविषयः )

√विद् – ज्ञाने + घञ् प्रत्ययः ( हलश्च – अष्टा०, ३/३/१२१ ) ।

## वेदिं

विदन्ति शब्दान् यस्यां साऽऽकाशवायुस्वरूपा । – ऋ०, १/१६४/३५

वेत्ति यया तां प्रज्ञाम् । – ऋ०, १/१७०/४

विदन्ति सुखानि यस्यां सा।– ऋ०, ६/१/१०

विन्दति सुखान्यनया सा । – यजु०, २/१

विदन्ति सुखानि यया तस्यै ।

– यजु०, ११/१६

विद्यते या सा वेदिः यज्ञभूमिर्वा ।

– उ०को० ४/११९

√विद् – सत्तायां + इन् प्रत्ययः ( हृपिषिरुहिवृतिविदिछिदिकीर्त्तिभ्यश्च – उ०को०, ४/११९ ) ।

## वेदिषत्

यो वेद्यां सीदति तस्मै । – ऋ०, १/१४०/१

ये वेद्यां पृथिव्यां सीदन्ति ते।– यजु०, २/२९

यो वेद्यां जगत्यां यज्ञशालायां वा सीदति।

– यजु०, १२/१४

वेदि + √षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## वेधा:

विशेषेण दधातीति वेधाः विद्वान् विधाता जगदीश्वरो वा । – उ०को०, ४/२२५

वि + √डुधाञ् – धारणपोषणयोः + असिः प्रत्ययः, विधाञ वेधादेशश्च ( विधाञो वेध च – उ०को०, ४/२२५ ) ।

## वेन:

अजति गच्छति प्राप्नोति वा स वेनः कमनीयः प्रजापतिरीश्वरो वा ।

– उ०को०, ३/६

√अज – गतिक्षेपणयोः + नः प्रत्ययः ( धापॄवस्यज्यतिभ्यो नः – उ०को०, ३/६ ) ।

## वेन्ना

**वन्यते सम्भज्यते या सा वेन्ना नदी वा ।**
**– उ०को०, ३/८**

✓वन् – सम्भक्तौ + नः प्रत्ययः धातोरुपधायाः इत्वं (वनेरिच्चोपधायाः – उ०को०, ३/८), ततः स्त्रियां टाप् च ।

## वेमा

**वयति वस्त्राणि येन स वेमा तन्तुवायदण्डः वस्त्रनिर्माण सामग्री वा ।– उ०को०, ४/१५०**

✓वेञ् – तन्तुसन्ताने + मनिन् प्रत्ययः (वेञः सर्वत्र – उ०को०, ४/१५०) ।

## वेशं

**यो विशति तम् । – ऋ०, ५/८५/७**

(द्वि०ए०व०) – ✓विश – प्रवेशने + घञ् प्रत्ययः (पदरुजविशस्पृहो घञ् – अष्टा०, ३/३/१६) ।

## वेशन्तः

**विशति प्रवेशं करोतीति वेशन्तः अल्पजलाशयो वा । – उ०को०, ३/१२६**

✓विश – प्रवेशने + झच् प्रत्ययः (जॄविशिभ्यां झच् – उ०को०, ३/१२६) प्रत्ययादिझकारस्यान्तादेशः (झोऽन्तः – अष्टा०, ७/१/३) धातोरुपधायाः एत्वञ्च ।

## वेष्पः

**वेवेष्टि व्याप्नोति पृथिवीमन्तरिक्षं वा स यज्ञोत्थो वाष्पो ज्ञान समूहो वा ।**
**– यजु०. १/३०**

**वेवेष्टि व्याप्नोतीति वेष्पः पेयमुदकं वा।**
**– उ०को०, ३/२३**

✓विप्लृ – व्याप्तौ + पः प्रत्ययः धातोरुपधाया एत्वं (पानीविषिभ्यः पः – उ०को०, ३/२३) ।

## वेहत्

**यस्य वीर्यं यस्या गर्भो वा विहन्यते स सा च । – यजु०, १८/२७**

**या प्रसवं विहन्ति सा । – यजु०, २१/२१**

**विशेषेण हन्तीति वेहत्, विहन्ति गर्भमिति गर्भोपघातिनी गौर्वा । – उ०को०, २/८५**

वि + ✓हन् – हिंसागत्योः + अति प्रत्ययः निपातनात्, 'वि' उपसर्गस्य एकारादेशः धातोः टिलोपश्च (संश्चत्तृपद्वेहत् – उ०को०, २/८५) ।

## वैददश्विः

**योऽश्वान् विन्दति स विददश्वस्तस्यापत्यं वैददश्विः । – ऋ०, ५/६१/१०**

✓विद्लृ – लाभे + शतृ प्रत्ययः > विदद् + अश्व > विददश्व + इञ् प्रत्ययः अपत्यार्थे च > वैददश्विः।

## वैराजं

**यद्विविधैरर्थैः राजते तदेव । – यजु०, १०/१३**

वि + ✓राजृ – दीप्तौ + क्विप् प्रत्ययः > विराज + अण् प्रत्ययः > वैराजम् ।

## वैश्यं

**यो यत्र तत्र विशति प्रविशति तदपत्यम् ।**
**– यजु०, ३९/११**

✓विश् – प्रवेशने + यत् प्रत्ययः > विश्य + अण् प्रत्ययः स्वार्थे ।

## वैश्वानरः

**यो विश्वान् सर्वान् पदार्थान्, नयति ।**
**– ऋ०, १/५९/१**

**विश्वेषु नरेषु नायक । – ऋ०, ६/७/३**

**यो विश्वान्नरान् धर्मकार्य्येषु नयति तत्सम्बुद्धौ । – ऋ०, ६/७/४**

यो विश्वान् नरानानन्दान्नयति तम् ।

– यजु०, ७/२४

विश्व + नरः > विश्वनरः, पूर्वपदस्य दीर्घः (नरे संज्ञायाम् – अष्टा०, ६/३/१२९) > विश्वानरः + अण् प्रत्ययः (तस्येदम् – अष्टा०, ४/३/१२०) ।

## वैष्ट्रं

विशन्ति यन्नेति वेष्ट्रं लोको वा ।

– उ०को०, ४/१६०

✓विश – प्रवेशने + ष्ट्रन् प्रत्ययः धातोः ऐत्वञ्च (भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च – उ०को०, ४/१६०) ।

## व्रजं

व्रजन्ति जना यस्मिंस्तस्मिन्।– ऋ०, १/८६/३

यो व्रजति तम् । – ऋ०, ४/१/१५

व्रजन्ति येन यस्मिन् वा । – ऋ०, ६/३५/५

व्रजन्ति यस्मिंस्तस्मिन् स्थाने ।

– ऋ०, ७/३२/१०

व्रजन्ति गच्छन्ति प्राप्नुवन्त्यापो यस्मात् तस्मिन् वा तं व्रजं मेघम् । – यजु०, १/२५

व्रजन्ति जानन्ति जना येन तं सत्सङ्गं। व्रजन्ति विद्वांसो यस्मिन् सन्मार्गे तम् ।

– यजु०, १/२६

✓व्रज – गतौ + घ प्रत्ययः (गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च – अष्टा०, ३/३/११९) ।

## व्रजश्रितः

व्रजान् गवादि स्थित्यर्थान् देशान् क्षियन्ति निवासयन्ति ते । – यजु०, १०/४

(प्र०ब०व०) – व्रज + ✓श्रिञ् – सेवायां + क्विप् प्रत्ययः, ततः तुगागमश्च ।

## व्रततिः

व्रतमाचरतीति व्रततिः विस्तरो 'व्रततिः' लता वा । – उ०को०, ४/५९

व्रत + अतिः प्रत्ययः बाहुलकात् (अमेरतिः – उ०को० ४/५९) ।

## व्रतपाः

यो व्रतं सत्यं पाति तम् । – ऋ०, १/३१/१०

यो व्रतं सत्यं धर्माचरणं नियमं पाति रक्षतीति । – यजु०, ४/१६

व्रतानि सत्यभाषणादीनि पाति यस्माद् वा ।

व्रतानि सुशीलादीनि पाति येन यया वा।

– यजु०, ५/६

व्रत + ✓पा – रक्षणे + क्विप् प्रत्ययः ।

## व्राः

या वृणोति सा । – ऋ०, १/१२४/८

ये व्रजन्ति ते । – ऋ०, १/१२६/५

या व्रियन्ते ताः । – ऋ०, ४/१/१६

✓वृञ – वरणे + कः प्रत्ययः ।

## व्राजिः

व्रजतीति व्राजिः वायुसमूहो वा ।

– उ०को०, ४/१२५

✓व्रज – गतौ + इञ् प्रत्ययः धातोरुपधायाः दीर्घश्च (वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् – उ०को०, ४/१२५) ।

## व्रातसाहाः

ये व्राताञ्छत्रुसमूहान्सहन्ते ते ।

– ऋ०, ६/७५/९

ये व्रातान् वीराणां समूहान् सहन्ते ते ।

– यजु०, २९/४६

(प्र०ब०व०) – व्रात + ✓षह – मर्षणे + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१) ।

## व्यलीकं

**विपूर्वाद् व्यलीकं अप्रियं खेदो वा ।**

– उ०को०, ४/२५

वि + √अल – भूषणपर्याप्तिवारणेषु + कीकन् प्रत्ययः (अलीकादयश्च – उ०को०, ४/२५) ।

## व्याघ्रः

**यो विविधान् समन्ताज्जिघ्रति।** – यजु०, १४/९

**यो विशेषेण जिघ्रति तम् ।** – यजु०, १९/१०

**विशेषेण समन्ताज्जिघ्रतीति व्याघ्रः हस्ती वा ।** – उ०को०, ५/६३

वि + आङ् + √घ्रा – गन्धोपादाने + कः प्रत्ययः (व्याङिघ्रातेश्च जातौ – उ०को०, ५/६३) ।

## व्यानदाः

**या व्याप्तिविज्ञानं ददति ।** – यजु०, १७/१५

वि + √अन – प्राणने + घञ् प्रत्ययः (हलश्च – अष्टा०, ३/३/१२१) > व्यान + √डुदाञ् – दाने + कः प्रत्ययः, ततः स्त्रियां टाप् प्रत्ययः ।

## व्यानं

**विविधमन्यते व्याप्यते येन तस्मै, सर्वेषां शुभगुणानां कर्मविद्याङ्गानां च व्याप्ति हेतवे ।** – यजु०, १/२०

**व्यानिति सर्वान् शुभगुणकर्मस्वभावान् येन तस्मै ।** – यजु०, १३/२४

**विविधमनन्ति येन तम् ।** – यजु०, १९/९०

**यो विविधेष्वङ्गेष्वनिति व्याप्नोति तस्मै ।**

– यजु०, २२/२३

वि + √अन – प्राणने + घञ् प्रत्ययः (हलश्च – अष्टा०, ३/३/१२१) ।

## व्योमन्

**व्योम्नि व्याप्ते आकाशे ।** – यजु०, १३/४२

**व्योम्नि व्याप्तेऽन्तरिक्षे वर्त्तमानाम् ।**

– यजु०, १३/४९

**व्ययति संवृणोतीति व्योम अन्तरिक्षं वा।**

– उ०को०, ४/१५१

√व्येञ् – संवरणे + मनिन् प्रत्ययः (नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन् – उ०को०, ४/१५१), धातोरेकारस्योत्वञ्चेति ।

## व्योमसद्

**यो व्योम्नि सीदति ।** – ऋ०, ४/४०/५

**यो व्योमनि सीदति सः ।** – यजु०, १०/२४

**यो व्योमवत् व्यापके परमेश्वरे सीदति ।**

– यजु०, १२/१४

व्योमन् + √षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## शंसः

**शंसन्ति यत्र सः ।** – ऋ०, १/१८/३

**शंसति येन शास्त्रबोधेन तम्। शंसति येन तं स्तुतिसमूहम् ।** – ऋ०, १/२८/१३

**शंसन्ति स्तुवन्ति यस्मिन् सः।** – यजु०, ३/३०

√शंस् – स्तुतौ + कः प्रत्ययः ।

## शंस्ता

**शंसति स्तौतीति शंस्ता स्तोता ।**

– उ०को०, २/९४

√शंसु – स्तुतौ + तृन् प्रत्ययः (तृन्तृचौ शंसिक्षदादिभ्यः सञ्ज्ञायां चानिटौ – उ०को०, २/९४) ।

## शकटः

**शक्नोतीति स्तौतीति शंस्ता स्तोता ।**

– उ०को०, ४/८१

√शक्लृ – शक्तौ + अटन् प्रत्ययः (शकादिभ्योऽटन् – उ०को०, ४/८१) ।

## शकलं

**शक्नोतीति खण्डो मत्स्य भेदो वा ।**

– उ०को०, १/११२

✓शक्लृ – शक्तौ + कल प्रत्ययः ( शकिशम्योर्नित् – उ०को०, १/११२ ) ।

## शकुनः

**शक्नोतीति शकुनः पक्षिनामानि वा ।**

– उ०को०, ३/४९

✓शक्लृ – शक्तौ + उनः प्रत्ययः ( शकेरुनोन्तोन्त्युनयः – उ०को०, ३/४९ ) ।

## शकुनिः

**शक्नोतीति शकुनिः पक्षिनामानि वा ।**

– उ०को०, ३/४९

✓शक्लृ – शक्तौ + उनिः प्रत्ययः ( शकेरुनोन्तोन्त्युनयः – उ०को०, ३/४९ ) ।

## शकुनिसादेन

**येन शकुनीन्सादयति तेन ।** – यजु०, २५/३ ( तृ०ए०व० ) – शकुनि + ✓षद्लृ – विशरणगत्य-वसादनेषु + कः प्रत्ययः ।

## शकुन्तः

**शक्नोतीति शकुन्तः पक्षिनामानि वा ।**

– उ०को०, ३/४९

✓शक्लृ – शक्तौ + उन्तः प्रत्ययः ( शकेरुनोन्तोन्त्युनयः – उ०को०, ३/४९ ) ।

## शकुन्तिः

**शक्नोतीति शकुन्तिः पक्षिनामानि वा ।**

– उ०को०, ३/४९

✓शक्लृ – शक्तौ + उन्तिः प्रत्ययः ( शकेरुनोन्तोन्त्युनयः – उ०को०, ३/४९ ) ।

## शकुलः

**शक्नोति तरितुमिति शकुलः मत्स्यः ।**

– उ०को०, १/४१

✓शक्लृ – शक्तौ + उनच् प्रत्ययः बाहुलकात् प्रत्ययस्य रेफस्य लत्वम् ( मद्गुरादयश्च – उ०को०, १/४१ ) ।

## शकृत्

**शक्नोतीति शकृत् ।** – उ०को०, ४/५८

✓शक्लृ – शक्तौ + ऋतिन् प्रत्ययः ( शकेर्ऋतिन् – उ०को०, ४/५८ ) ।

## शक्तिः

**यः सर्वं जगत् कर्तुं शक्नोति स शक्तिः।**

– *स० प्र० ( प्रथमसमुल्लासः )*

✓शक्लृ – शक्तौ + क्तिन् प्रत्ययः स्त्रियाम् ।

## शक्तिधरः

**शक्तिं धारयति इति शक्तिधरः वा कुमारः।**

– उ०को०, २/२२

✓शक्लृ – शक्तौ + क्तिन् प्रत्ययः > शक्ति + ✓धृञ् – धारणे + रक् प्रत्ययः धातोः परस्य णेर्लुक् च ( बहुलमन्यत्रापि संज्ञाछन्दसोः – उ०को०, २/२२ )।

## शक्मा

**शक्नोतीति शक्मा सूर्यो वा ।**

– उ०को०, ४/१४७

✓शक्लृ – शक्तौ + मनिन् प्रत्ययः ( अशिशकिभ्यां छन्दसि – उ०को०, ४/१४७ ) ।

## शक्लः

**शक्नोतीति शक्लः प्रियंवदो वा ।**

– उ०को०, ४/१०८

✓शक्लृ – शक्तौ + क्लः प्रत्ययः ( मूशक्यविभ्यः क्लः – उ०को०, ४/१०८ ) ।

## शक्वरी

शक्नोति इति शक्वरी नदी छन्दोभेदो वा। – उ०को०, ४/११३

✓शक्लृ – शक्तौ + वनिप् प्रत्ययः ( स्नामदिपद्यर्ति-पृशकिभ्यो वनिप् – उ०को०, ४/११३ ) स्त्रियां ङीप् रेफ च ।

## शक्वा

शक्नोतीति शक्वा हस्ती वा ।

– उ०को०, ४/११३

✓शक्लृ – शक्तौ + वनिप् प्रत्ययः ( स्नामदिपद्यर्ति-पृशकिभ्यो वनिप् – उ०को० ४/११३ ) ।

## शक्रः

शक्नोति सर्वं व्यवहारं कर्त्तुं तत् ।

– ऋ०, १/१०४/८

शक्नोति यः स शक्रः समर्थः कुटजो वृक्षविशेषो वा । – उ०को०, २/१३

✓शक्लृ – शक्तौ + रक् प्रत्ययः ( स्फायितञ्चिवञ्चि-शकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीप-दिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिव-सिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ )।

## शङ्करः

यः शङ्कल्याणं सुखं करोति स शङ्करः ।

– स० प्र० ( प्रथमसमुल्लासः )

शम् + ✓डुकृञ् – करणे + टः प्रत्ययः ( कृञो हेतुताच्छील्यानुलोम्येषु – अष्टा०, ३/२/२० ) ।

## शङ्कुः

यं दृष्ट्वा शङ्कः सन्दिग्धो भवतीति तद् शङ्कुः विषः कीलं शस्त्रं संख्या वृक्षभेदो जलभेदः पापं स्थाणुर्वा ।– उ०को०, १/३६

✓शङ्कि – शङ्कायां + कुः प्रत्ययः ( खरुशङ्कुपी-युनीलङ्गुलिगु – उ०को०, १/३६ ) ।

## शङ्खः

शाम्यतीति शङ्खः निधिभेदः जलजं ललाटास्थि वा । – उ०को०, १/१०२

✓शमु – उपशमे + खः प्रत्ययः ( शमेः खः – उ०को०, १/१०२ ) ।

## शङ्खध्मं

यः शङ्खान् धमति तम् । – यजु०, ३०/१९

( द्वि०ए०व० ) – शङ्ख + ✓ध्मा – शब्दाग्निसंयोगयोः + कः प्रत्ययः ।

## शङ्गवे

शं सुखं गच्छति प्राप्नोति तस्मै ।

– यजु०, १६/४०

( च०ए०व० ) – शम् + ✓गम्लृ – गतौ + डुः प्रत्ययः ( मितद्र्वादिभ्य उपसंख्यानम् – अष्टा०वा०, ३/२/१८० ) ।

## शण्डिलः

शण्डति रोगयुक्तो भवतीति शण्डिलः ऋषिविशेषो वा । – उ०को०, १/५४

✓शण्डि – रुजायां संघाते च + इलच् प्रत्ययः ( सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डतुण्डि-कुकिभूभ्यः इलच् – उ०को०, १/५४ ) ।

## शण्ढः

शाम्यति शान्तो भवतीति शण्ढः स्वतन्त्रो वृषभः । – उ०को०, १/९९

✓शमु – उपशमे + ढः प्रत्ययः ( शमेर्ढः – उ०को०, १/९९ ) ।

## शतद्रुः

शतधा बहुप्रकारैर्द्रवति गच्छतीति शतद्रुः

नदीभेदो गङ्गा वा । – उ०को०, १/३५
शत + √द्रु – गतौ + कुः प्रत्ययः (शते च – उ०को०, १/३५) ।

## शतधारः

शतं बहुविधमसंख्यातं विश्वं धरतीति तम्।
– यजु०, १/३
बहुविद्याधारकेण परमेश्वरेण वेदेन वा ।
– यजु०, १/३
शत + √धृञ् – धारणे + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१) ।

## शतवल्शः

यः शतानि बहूनि सुखानि वलते संवृणुते सः। – यजु०, ५/४३
शत + √वल – संवरणे सञ्चलने च + शक् प्रत्ययः (जनिदाच्युसृवृमदिषनमिभृञ्भ्य इत्वन्त्लण्क्निन्श-क्स्यढडटोटचः – उ०को०, ४/१०४) ।

## शतसाः

यः शतानि सनति सम्भजति ।
– ऋ०, ४/३८/१०
यः शतानि सनति विभजति ।
– ऋ०, ७/८/६
शत + √षण – सम्भक्तौ + विट् प्रत्ययः (जनसनखनक्रमगमो विट् – अष्टा०, ३/२/६७) धातोरङ्गस्याकारादेशः (विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१) ।

## शताश्रिं

यः शतान्याश्रयति तम् । – ऋ०, ६/१७/१०
शत + आङ् + √श्रिञ् – सेवायां + क्विप् प्रत्ययः।

## शतेरः

शीयते शातयति दुःखंकरोतीति शतेरः शत्रुर्वा । – उ०को०, १/६०
√शद्लृ – शातने + एरक् प्रत्ययः, धातोः दकारस्य स्थाने तकारादेशः (शदेस्तश्च – उ०को०, १/६०)।

## शत्रिः

शीयते छिनत्तीति शत्रिः हस्ती वा ।
– उ०को०, ४/६७
√शद्लृ – शातने + त्रिप् प्रत्ययः (राशदिभ्यां त्रिप् – उ०को०, ४/६७) ।

## शत्रुः

शीयते शातयतीति शत्रुः।– उ०को०, ४/१०३
√शद्लृ – शातने + क्रुन् प्रत्ययः (रुशदिभ्यां क्रुन् – उ०को०, ४/१०३) ।

## शद्रिः

शीयते शातयतीति शद्रिः शर्करा वा ।
– उ०को०, ४/६५
√शद्लृ – शातने + क्रिन् प्रत्ययः (अदिशदिभूशुभिभ्यः क्रिन् – उ०को०, ४/६५) ।

## शनैश्चरः

यः शनैश्चरति स शनैश्चरः ।
– स० प्र० (*प्रथमसमुल्लासः*)
शनैस् + √चर – गतिभक्षणयोः + अच् प्रत्ययः ।

## शपथः

शप्यत आक्रुश्यत इति शपथः निश्चयकरणं वा । – उ०को०, ३/११३
√शप – आक्रोशे + अथः प्रत्ययः (शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः – उ०को०, ३/११३)।

## शफः

खुरात् शं फणति प्रापयतीति शफो वेगस्तस्माद्वा । – ऋ०, १/११७/६
शं फणन्ति तेषाम् । – ऋ०, १/१६३/५
शम् + √फण – गतौ + डः प्रत्ययः (अन्येभ्योऽपि दृश्यते – अष्टा०, ३/२/१०१) पृषोदरादिना पूर्वपदस्य म लोपः ।

**शबलः**

**शपत्याक्रोशति स शबलः वर्णभेदो वा ।**

– उ०को०, १/१०५

✓शप – आक्रोशे + कल प्रत्ययः धातोः पस्य बादेशः (शपेर्बश्च – उ०को०, १/१०५) ।

**शब्दः**

**शप्यत आहूयतेऽनेन स शब्दो नादः ।**

– उ०को०, ४/९७

✓शप – आक्रोशे + दः प्रत्ययः (शाशपिभ्यां ददनौ – उ०को०, ४/९७) धातोः पस्य बादेशः (झलां जश झशि – अष्टा०, ८/४/५२) ।

**शमठः**

**शाम्यतीति शमठः शान्तो वा ।**

– उ०को०, १/१००

✓शमु – उपशमे + अठः प्रत्ययः बाहुलकात् (कमेरठः – उ०को०, १/१००) ।

**शमथः**

**शाम्यतीति शमथः शान्तिः ।**

– उ०को०, ३/११३

✓शमु – उपशमे + अथः प्रत्ययः बाहुलकात् (शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः – उ०को०, ३/११३) ।

**शमं**

**शाम्यन्ति येन तस्य शान्ति युक्तस्य मनुष्यस्य च ।** – ऋ०, १/३२/१५

**शाम्यन्ति येन तम् ।** – ऋ०, १/३३/१५

✓शमु – उपशमने + घञ् प्रत्ययः, धातोरुपधायाः वृद्धिनिषेधः (नोदात्तोपदेशस्य मान्तस्यानाचमेः – अष्टा०, ७/३/३४) ।

**शमलं**

**शाम्यतीति शमलः अशुद्धं वा ।**

– उ०को०, १/११२

✓शमु – उपशमे + कल प्रत्ययः (शकिशम्योर्नित् – उ०को०, १/११२) ।

**शम्बः**

**शाम्यतीति शम्बः मुसलस्य लोहमुखं वा।**

– उ०को०, ४/९४

✓शमु – उपशमे + बन् प्रत्ययः (शमेर्बन् – उ०को०, ४/९४) ।

**शम्बरं**

**शं सुखं वृणोति येन तं मेघमिव शत्रुम् ।**

– ऋ०, १/५४/४

**शं सुखं वृणोति यस्मात्तं मेघम् ।**

– ऋ०, ४/३०/१४

**शं सुखं वृणोति येन तं मेघम् ।**

– ऋ०, ६/१८/८

शम् + ✓वृञ् – वरणे + अप् प्रत्ययः (ग्रहवृदृनिश्चिगमश्च – अष्टा०, ३/३/५८), वर्णव्यययेन वकारस्य बकारः ।

**शम्बूकः**

**शमयतीति शम्बूकः, बाहुलकादुकप्रत्यये शम्बुकः इत्यपि सिद्धम् ।**– उ०को०, ४/४१

**शमयतीति शम्बूकः जलशुक्तिर्वा ।**

– उ०को०, ४/४१

✓शमु – उपशमे + ऊकः प्रत्ययः निपातनात्, धातोः बुगागमः (उलूकादयश्च – उ०को०, ४/४१) बाहुलकात् शम्बुकश्चापि ।

**शम्भुः**

**ये शं सुखं भावयन्ति ते ।** – ऋ०, १/१०६/२

**शं सुखं भावयति तस्मै परमेश्वराय सेनाधीशाय वा ।** – यजु०, १६/४१

**यः शं सुखं भावयति सः ।– यजु०, १८/२३**

**शं कल्याणं भावयति सः ।– यजु०, १८/४५**

शम् + ✓भू – सत्तायां + डुः प्रत्ययः ( मितद्रूवादिभ्यः उपसंख्यानम् – अष्टा०वा०, ३/२/१८० ) ।

## शयण्डः

शेतेऽसौ शयण्डः विषयो वा ।

– उ०को०, १/१२९

✓शीङ् – स्वप्ने + अण्डन् प्रत्ययः बाहुलकात् ( अण्डन् कृसृभृवृञः – उ०को०, १/१२९ ) ।

## शयथः

शेतेऽसौ शयथः अजगरो वा ।

– उ०को०, ३/११३

✓शीङ् – स्वप्ने + अथः प्रत्ययः ( शीङ् शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः – उ०को०, ३/११३ )।

## शयानकः

शेतेऽसौ शयानकः अजगरो वा ।

– उ०को०, ३/८२

✓शीङ् – स्वप्ने + आनकः प्रत्ययः ( आनकः शीङ्भियः – उ०को०, ३/८२ ) ।

## शयुः

**य प्रलये सर्वाणि भूतानि शाययति सः ।**

**– ऋ०, १/३१/२**

**योऽभिव्याप्य शेते । – ऋ०, ३/५५/६**

**यः शेते तम् । – ऋ०, ४/१८/१२**

**शेतेऽसौ शयुः शयनशीलः।– उ०को०, १/७**

✓शीङ् – स्वप्ने + उः प्रत्ययः ( भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः – उ०को०, १/७ ) ।

## शयुत्रा

यौ शयून् शयानान् त्रायतस्तौ ।

– ऋ०, १/११७/१२

( द्वि०द्वि०व० )–शयु + ✓त्रैङ्–पालने + डः प्रत्ययः।

## शयुनः

शेतेऽसौ शयुनः अजगरो वा ।

– उ०को०, ३/६१

✓शीङ् – स्वप्ने + उनन् प्रत्ययः ( अजियमिशीङ्भ्यश्च – उ०को०, ३/६१ ) ।

## शरणिः

शृणाति हिनस्तीति शरणिः ।

– उ०को०, २/१०२

✓शॄ – हिंसायां + अनिः प्रत्ययः बाहुलकात् ( अर्तिसृधृधम्यम्यश्यवितभ्योऽनिः – उ०को०, २/१०२ )।

## शरण्यं

शृणाति हिनस्तीति शरण्यम् अज्ञानं वा।

– उ०को०, ३/१०१

✓शॄ – हिंसायां + अन्यः प्रत्ययः ( शॄरम्योश्च – उ०को०, ३/१०१ ) ।

## शरत्

**शृणाति येन सा । – यजु०, १३/५७**

**शृणाति हिनस्त्यस्मिन्निति शरत् कालविशेष ऋतुर्वा । – उ०को०, १/१३०**

✓शॄ – हिंसायां + अदिः प्रत्ययः ( शॄदभसोऽदिः – उ०को०, १/१३० ) ।

## शरभः

**शृणातीति शरभः आरण्यानां मध्ये हिंसकविशेषपशुजातिः ।– उ०को०, ३/१२२**

✓शॄ – हिंसायां + अभच् प्रत्ययः ( कृशॄशलिकलिगर्दिभ्योऽभच् – उ०को०, ३/१२२ ) ।

## शरिः

**शृणाति हिनस्तीति शरिः पक्षी । शकुनेरन्यत्र शरिः हिंस्रः।– उ०को०, ४/१२८**

√शॄ – हिंसायां + इञ् प्रत्ययः ( श्रः शकुनौ – उ०को०, ४/१२८ ) ।

## शरिमा

**श्रृणातीति शरिमा प्रसवो वा ।**

– उ०को०, ४/१४८

√शॄ – हिंसायां + इमनिच् प्रत्ययः ( हृभृधृसृस्तॄ-श्रृभ्य इमनिच् – उ०को०, ४/१४८ ) ।

## शरीरं

**हिंस्यते यत्तत् ।** – ऋ०, १/३२/१०

**शीर्यते हिंस्यत इति शरीरं प्राणिकायो वा ।** – उ०को०, ४/३०

√शॄ – हिंसायां + ईरन् प्रत्ययः ( कृशॄपॄक-टिपटिशौटिभ्य ईरन् – उ०को०, ४/३० ) ।

## शरुः

**श्रृणाति हिनस्ति येनेति शरुः आयुधं कोपो वा ।** – उ०को०, १/१०

√शॄ – हिंसायां + उः प्रत्ययः ( शॄस्वृस्निहित्रप्यसि-वसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१० )।

## शर्करा

**श्रृणातीति शर्करा खण्डविकारो मृद्विकारो वा ।** – उ०को०, ४/३

√शॄ – हिंसायां + करन् प्रत्ययः ( श्रः करन् – उ०को०, ४/३ ) ।

## शर्म

**सर्वदुःख रहितं सुखं, श्रृणाति हिनस्ति दुःखानि यत्तत् ।** – ऋ०, १/१७/८

**श्रृण्वन्ति दुःखानि यस्मिन् तद्गृहम् ।**

– यजु०, २६/१०

**श्रृणातीति शर्म सुखं गृहं वा ।**

– उ०को०, ४/१४५

√शॄ – हिंसायां + मनिन् प्रत्ययः ( सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५ ) ।

## शर्मसदः

**ये शर्मणि सुखे सीदन्ति ते।**– ऋ०, १/७३/३

**ये शर्मणि गृहे सीदन्ति ते।**– ऋ०, ३/५५/२१

( प्र०ब०व० ) – शर्म + √षद्लृ – विशरणगत्य-वसादनेषु + क्विप् प्रत्ययः ।

## शर्वः

**श्रृणाति दुःखमिति शर्वः परमेश्वरः सुखं वा ।** – उ०को०, १/१५५

√शॄ – हिंसायां + वः प्रत्ययः ( कॄगॄशॄदॄभ्यो वः – उ०को०, १/१५५ ) ।

## शर्वरी

**श्रृणाति हिनस्ति प्रकाशमिति शर्वरी रात्रिर्वा ।** – उ०को०, २/१२१

√शॄ – हिंसायां + ष्वरच् प्रत्ययः ( कॄशॄवॄञ्चतिभ्यः ष्वरच् – उ०को०, २/१२१ ), ततः स्त्रियां ङीप् प्रत्ययः ।

## शर्शरीकः

**श्रृणाति हिनस्तीति शर्शरीकः हिंसकः ।**

– उ०को०, ४/१९

√शॄ – हिंसायां + ईकन् प्रत्ययः, धातोर्द्वित्वमभ्यासस्य च रुगागमः ( शॄपॄवृजां द्वे रुक् चाभ्यासस्य – उ०को०, ४/१९ ) ।

## शलभः

**शलते गच्छतीति शलभः पतङ्गो वा ।**

– उ०को०, ३/१२२

√शल – चलनसंवरणयोः अभच् प्रत्ययः ( कॄशॄशलिकलिगर्दिभ्योऽभच् – उ०को०, ३/१२२ )।

## शलाका

**यां शलन्ति गच्छन्तीति शलाका अञ्जनयष्टिका वा । – उ०को०, ४/१४**

✓शल – चलनसंवरणयोः + आकः प्रत्ययः (वलाकादयश्च – उ०को०, ४/१४) । ततः स्त्रियां टाप् प्रत्ययश्च।

## शल्कं

**शल्यति गच्छति शल्यते वा तत् शल्कम्। – उ०को०, ३/४३**

✓शल – चलनसंवरणयोः + कन् प्रत्ययः (इण्भीकापाशल्यतिमर्चिभ्यः कन् – उ०को०, ३/४३) ।

## शल्यं

**शलति गच्छतीति शल्यं शास्त्रविशेषो वाणाग्रभागो वा । – उ०को०, ४/१०७**

✓शल – चलनसंवरणयोः + यत् प्रत्ययः (सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः – उ०को०, ४/१०७) ।

## शवः

**शवयति गच्छतीति शवः मृतकशरीरं वा। – उ०को०, ४/१९३**

✓श्वि – गतिवृद्धयोः + असुन् प्रत्ययः धातोः सम्प्रसारणञ्च – उ०को०, ४/१९३) ।

## शवसानः

**शवन्ति गच्छन्त्यस्मिन् स शवसानः मार्गो वा। – उ०को०, २/८६**

✓शव – गतौ + असानच् प्रत्ययः (छन्दस्यसानच् शुजृभ्याम् – उ०को०, २/८६) ।

## शष्पं

**शष्यते हन्यते तत् शष्पं बालतृणं कान्तिक्षयो वा । – उ०को०, ३/२८**

✓शष – हिंसायां + पः प्रत्ययः (खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः – उ०को०, ३/२८) ।

## शस्त्रं

**शंसति हिनस्तीति येन तत् शस्त्रम् आयुधं वा। – उ०को०, ४/१६४**

✓शश् – हिंसायां प्लुतगतौ + क्त्रः प्रत्ययः (अमिचिमिशसिभ्यः क्त्रः – उ०को०, ४/१६४) ।

## शस्यं

**शस्यते यत्तत् शस्यं, क्षेत्रपक्वन्नं गुणो वा। – उ०को०, ४/१०९**

✓शसु – हिसायां + यः प्रत्ययः (माछाशसिभ्यो यः – उ०को०, ४/१०९) ।

## शाकं

**श्यतीति शाकं स्यतीति साकं वा । – उ०को०, ३/४३**

✓शो – तनूकरणे + कन् प्रत्ययः (इण्भीकापाशल्यतिमर्चिभ्यः कन् – उ०को०, ३/४३) ।

## शाखाः

**याः खेऽन्तरिक्षे शेरते ताः । – ऋ०, ७/४३/१**

(प्र०ब०व०) – ✓शाखृ – गतौ + अच् प्रत्ययः ततः स्त्रियां टाप् प्रत्ययः । अथवा पृषोदरादिना शाखा > खे (सप्तमी एकवचन) > ख > खा + ✓शीङ्-शये + अच् प्रत्ययः ततः स्त्रियां टाप् प्रत्ययः – खाशा, वर्णव्यत्ययत्वात् शाखेति ।

## शादः

**शीयते छिनत्ति यस्मिंस्तं शादम् । – यजु०, २५/१**

**श्यति सूक्ष्मं करोतीति शादः कर्दमो बालतृणं वा । – उ०को०, ४/९७**

✓शो – तनूकरणे + दः प्रत्ययः (शाशपिभ्यां ददनौ – उ०को०, ४/९७) ।

## शारिः

**शृणाति हिनस्तीति शारिः पक्षी । – उ०को०, ४/१२८**

√शॄ – हिंसायां + इञ् प्रत्ययः धातोर्वृद्धिश्च ( श्रः शकुनौ – उ०को०, ४/१२८ ) ।

## शारिका

**शारीन् हन्तीति शारिका वा ।**

– उ०को०, ४/१२८

√शॄ – हिंसायां + ठक् प्रत्ययः ( पक्षिमत्स्यमृगान्हन्ति – अष्टा०, ४/४/३५ ) ठस्य इकादेशत्वात् > धातोः वृद्धिः > शारिकः ततः स्त्रियां टाप् प्रत्ययः > शारिका।

## शार्ङ्गः

**श्रृणातीति शार्ङ्गः पक्षी वा ।**

– उ०को०, १/१२७

√शॄ – हिंसायां + गण् प्रत्ययः णित्वात् धातोर्वृद्धिश्च नुडागमश्च ( गण् शकुनौ – उ०को०, १/१२७ ) ।

## शार्दूलः

**श्रृणाति हिनस्तीति शार्दूलः व्याघ्रो वा ।**

– उ०को०, ४/९०

√शॄ – हिंसायां + ऊलः प्रत्ययः ( खर्जिपिञ्जादिभ्य ऊरोलचौ – उ०को०, ४/९० ) धातोर्दुगागमः वृद्धिश्च।

## शालभञ्जिका

**शालान् भञ्जन्ति यस्यां सा शालभञ्जिका क्रीडा ।** – उ०को०, २/३२

शाल + √भजि – भासार्थः + क्वुन् प्रत्ययः, धातोः नुमागमश्च ( क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२ ) ।

## शाला

**श्यन्ति सूक्ष्माणि कार्याणि कुर्वन्त्यत्र सा शाला गृहं वा ।** – उ०को०, १/११८

√शो – तनूकरणे + कालन् बाहुलकात् ( तमिविशिविडिमृणिकुलिकपिपलिपञ्जिभ्यः कालन् – उ०को०, १/११८ ) ।

## शालिः

**शल्यते प्राप्यतेऽसौ शालिः ब्रीहयो वा ।**

– उ०को०, ४/१३०

√शल – चलनसंवरणयोः + इण् प्रत्ययः बाहुलकात् धातोर्वृद्धिश्च ( जनिघसिभ्यामिण् – उ०को०, ४/१३० )।

## शालुः

**श्रृणाति चित्तं हिनस्तीति शालुः कषायद्रव्यं वा ।** – उ०को०, १/५

√शॄ – हिंसायां + ञुण् प्रत्ययः बाहुलकात् धातोः रेफस्य लत्वं दीर्घश्च ( त्रोरश्च लः – उ०को०, १/५ )।

## शालूकं

**शल्यते प्राप्यते यत्तत् शालूकं मूलद्रव्यं वा।** – उ०को०, ४/४२

√शल–चलनसंवरणयोः + ऊकण् प्रत्ययः, धातोर्वृद्धिश्च ( शलिमण्डिभ्यामूकण्–उ०को०, ४/४२ ) ।

## शालूरः

**शालयति गमयतीति शालूरः मण्डूको वा ।** – उ०को०, ४/९०

√शल – चलनसंवरणयोः + ऊरः प्रत्ययः, धातोर्वृद्धिश्च ( खर्जिपिञ्जादिभ्य ऊरोलचौ – उ०को०, ४/९० ) ।

## शाशदानः

**अतिशयेन शीयते शातयति छिनत्ति यः सः ।** – ऋ०, १/३३/१३

√शद्लृ – शातने + शानच् प्रत्ययः यङ्लुङन्ताद धातोर्द्वित्वम् ।

## शासनं

**शास्ति सर्वान् विद्याधर्माचरणशीलान् यया सत्यनीत्या ताम् ।** – ऋ०, १/३१/११

शंसन्ति हिनस्ति यस्मिंस्तद्युद्धम् ।

– यजु०, २९/२३

✓शासु – अनुशिष्टौ अथवा ✓शसु – हिंसायां + ल्युट् प्रत्ययः ।

## शास्ता

शास्ति शिक्षते धर्मादिकमिति शास्ता पण्डितो वा । – उ०को०, २/९४

✓शास – अनुशिष्टौ + तृन् प्रत्ययः ( तृन्तृचो शंसिक्षदादिभ्यः सञ्ज्ञायां चानिटौ – उ०को०, २/९४ ) ।

## शास्तिः

शास्ति शिक्षत इति शास्तिः राजदण्डो वा । – उ०को०, ४/१८०

✓शास – अनुशिष्टो + तिः प्रत्ययः बाहुलकात् ( वसेस्तिः – उ०को०, १/१८० ) ।

## शिक्यं

स्रंसते गच्छतीति शिक्यं काजः छीकां इति प्रसिद्धः । – उ०को०, ५/१६

✓स्रंसु – अवस्रंसने + यत् प्रत्ययः, धातोः शि कुटश्चादेशः ( स्रंसेः शिः कुद् किच्च – उ०को०, ५/१६ ) ।

## शिक्षानरः

यः शिक्षां नृणाति प्राप्नोति स शिक्षायाः नरः शिक्षानरः । – ऋ०, १/५३/२

✓शिक्ष – विद्योपादाने + अ प्रत्ययः स्त्रियां ( गुरोश्च हलः – अष्टा०, ३/३/१०३ ) > शिक्षा + नरः ( व्याख्यातः ) एतयोः पदयोः समासः ।

## शिखा

शेतेऽसौ शिखा चूडाकेशभेदो ज्वाला वा । – उ०को०, ५/२४

✓शीङ् – स्वप्ने + खः प्रत्ययः, धातोर्ह्रस्वश्च ( शीङो ह्रस्वश्च – उ०को०, ५/२४ ) स्त्रियां टाप् च ।

## शिङ्घणाकः

शिङ्घति समन्ताज्जिघ्रतीति शिङ्घाणकः श्लेष्मा वा । ककारलोपे शिङ्घाणम् काचपात्रं लोहनासिकयोर्मलं वा ।

– उ०को०, ३/८३

✓शिङ्घि – आघ्राणे + आणकः प्रत्ययः ( आणको लूधूशिङ्घिधाञ्भ्यः – उ०को०, ३/८३ ) ।

## शिग्रुः

शेतेऽसौ शिग्रुः शोभाञ्जनस्तरुः शाकं वा मनुष्य विशेषो वा । – उ०को०, ४/१०२

✓शीङ् – शये, ✓शीकृ – सेचने + रुः प्रत्ययः ( जत्वादयश्च – उ०को०, ४/१०२ ), बाहुलकात् धातोर्ह्रस्व, गत्वञ्चेति ।

## शिथिलः

श्रथति विमुञ्चति पुरुषार्थमिति शिथिनः पुरुषः । – उ०को०, १/५३

✓श्रथि – शैथिल्ये + किरच् प्रत्ययः ( अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरा – उ०को०, १/५३ ) धातोरुपधाया इत्वं रेफस्य लोपः, प्रत्ययस्य रेफस्य लत्वञ्च निपात्यते ।

## शिनिः

शेतेऽसौ शिनिः क्षत्रियो वा ।

– उ०को०, ४/५१

✓शीङ् – स्वप्ने + निः प्रत्ययः ( वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् – उ०को०, ४/५१ ) ।

## शिरः

यच्छ्रीयते तदुत्तमाङ्गम् । – ऋ०, १/१६३/६

शृणाति हिनस्ति दुःखानि येन तत् ।

– यजु०, १२/४

श्रीयत आश्रीयते तत् शिरः मस्तकम् ।

– उ०को०, ४/१९४

✓श्रिञ् – सेवायां + असुन् प्रत्ययः, धातोः शिरादेशः (श्रयतेः स्वाङ्गे शिरः किच्च – उ०को०, ४/१९४)।

## शिरिः

श्रृणातीति शिरिः हन्ता । – उ०को०, ४/१४३

✓शॄ – हिंसायां + इः प्रत्ययः धातोः इत्वञ्च (कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च – उ०को०, ४/१४३)।

## शिरीषः

शृणाति हिनस्तीति शिरीषः वृक्ष भेदो वा । – उ०को०, ४/२७

✓शॄ – हिंसायां + ईषन् प्रत्ययः धातोः इत्वञ्च (शॄपॄभ्यां किच्च – उ०को०, ४/२७) ।

## शिल्पं

यत् शीलति समादधाति तत् शिल्पं कौशलं वा । – उ०को०, ३/२८

✓शील – समाधौ + पः प्रत्ययः धातोर्ह्रस्वत्वञ्च (खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः – उ०को०, ३/२८)।

## शिवः

शिव ईश्वरः शिवं भद्रं सुखमुदकं च ।

– उ०को०, १/५३

✓शीङ् – स्वप्ने + वन् प्रत्ययः निपातनात्, धातोर्ह्रस्वत्वं (सर्वनिघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अतन्त्रे – उ०को०, १/१५३) ।

## शिविरं

शेरते यस्मिन् तत् शिविरं स्थानं वा ।

– उ०को०, १/५३

✓शीङ् – शये + किरच् प्रत्ययः बाहुलकात् (अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः – उ०को०, १/५३), धातोर्वुगागमः ह्रस्वत्वञ्चेति ।

## शिशिरं

शशति दिनाल्पत्वाच्छीघ्रं गच्छति तत् शिशिरं ऋतुर्हिमं शीतलं वस्तु वा ।

– उ०को०, १/५३

✓शश – प्लुतगतौ + किरच् प्रत्ययः निपातनात् (अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः – उ०को०, १/५३), धातोरुपधाया इत्वञ्च ।

## शिशुः

यः श्यति तनूकरोति सः । – यजु०, २२/१९

श्यति तनूकरोति पित्रो शरीरमिति शिशुः बालको वा । – उ०को०, १/२०

✓शो – तनूकरणे + उः प्रत्ययः सन्वद्भावत्वात् धातोर्द्वित्वं कित्वात् इत्वञ्च (शः कित् सन्वच्च – उ०को०, १/२०) ।

## शिशुमारः

ये स्वशिशून् मारयन्ति तान् ।

– यजु०, २४/२१

शिशु + ✓मृङ् – प्राणत्यागे + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१) ।

## शिश्विदानः

श्वेततेऽसौ शिश्विदानः पापकर्मा वा ।

– उ०को०, २/९२

✓श्विता – वर्णे + आनच् प्रत्ययः सनन्तात् द्वित्वं तकारस्य दकारः (श्वितेर्दश्च – उ०को०, २/९२)।

## शिंशुमारः

शिंशून् धर्मोल्लङ्घिनः शत्रून् मारयति येन सः । – ऋ०, १/११६/१८

शिंशु + ✓मृङ् – प्राणत्यागे + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१) ।

## शीधुः

शेते येन तत् शीधुः मद्यं वा ।

– उ०को०, ४/३८

√शीङ् – स्वप्ने + धुक् प्रत्ययः ( शीङो धुक्लक्वलञ्वालनः – उ०को०, ४/३८ ) ।

## शीरः

शेतेऽसौ शीरः महासर्पो वा ।

– उ०को०, २/१३

√शीङ् – स्वप्ने + रक् प्रत्ययः ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ )।

## शीर्विः

शृणातीति शीर्विः। – उ०को०, ४/५४

√शॄ – हिंसायां + क्विन् प्रत्ययः, धातोरुपधाया इत्वञ्च ( जॄतॄजागृभ्यः क्विन् – उ०को०, ४/५४)।

## शीवा

शेतेऽसौ शीवा अजगरो वा ।

– उ०को०, ४/११४

√शीङ् – स्वप्ने + क्वनिप् प्रत्ययः ( शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् – उ०को० ४/११४) ।

## शुकः

शोभतेऽसौ शुकः पक्षिजातिः व्यासपुत्रो वा । – उ०को०, ३/४२

√शुभ् – शोभार्थे + कः प्रत्ययः निपातनात् (शुकवल्कोल्काः – उ०को०, ३/४२) ।

## शुक्

शोचन्ति विचारयन्ति यया सा प्रदीप्तिः।

– यजु०, ३८/१८

√शुच – दीप्तौ शोके वा + क्विप् प्रत्ययः ।

## शुक्रं

शुच्यते पवित्रीभवतीति शुक्रं ब्रह्माग्निराषाढः प्राणिबीजं नेत्ररोगो वा ।

– उ०को०, २/२८

√शुचिर् – पूतीभावे + रन् प्रत्ययः ( ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्लगौरवन्रेरामालाः – उ०को०, २/२८ ) चकारस्य कत्वञ्चेति ।

## शुक्रपाः

शुक्रं योगवीर्यं योगबलं वा पान्ति ते ।

– यजु०, ७/१२

शुक्र + √पा – रक्षणे + कः प्रत्ययः ।

## शुक्षिः

शोषयतीति शुक्षिः वायुर्वा ।

– उ०को०, ३/११५

√शुष – शोषणे + क्सिः प्रत्ययः ( प्लुषिकुषिशुषिभ्यः क्सिः – उ०को०, ३/१५५ ) ।

## शुचिः

शुच्यतीति शुचिः शुद्धिर्वा ।

– उ०को०, ४/१२०

√शुचिर् – पूतीभावे + इन् प्रत्ययः ( इगुपधात् कित् – उ०को०, ४/१२० ) ।

## शुचिपाः

शुचिं पवित्रतां पालयतीति शुचिपाः पवित्रपालकः । – यजु०, ७/७

शुचि + √पा – रक्षणे + क्विप् प्रत्ययः ।

## शुचिषत्

यः शुचिषु पवित्रेषु सीदति।– ऋ०, ४/४०/५

यः शुचिषु पवित्रेषु पदार्थेषु सीदति सः।

– यजु०, १०/२४

यः पवित्रेषु विद्वत्सु सीदति सः ।

– यजु०, १९/७४

शुचि + √षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## शुतुद्री

शु शीघ्रं तुदति व्यथयति सा ।

– ऋ०, ३/३३/१

शु <आशु ( शु – क्षिप्रनाम ) + ✓तुद – व्यथने + रक् प्रत्ययः, ततः स्त्रियां ङीप् प्रत्ययः ।

## शुद्धः

यः शुन्धति सर्वान् शोधयति वा स शुद्धः ईश्वरः । – स० प्र० ( प्रथमसमुल्लासः )

✓शुध – शौचे + क्तः प्रत्ययः ।

## शुनकः

शुनति गच्छतीति शुनकः श्वा ।

– उ०को०, २/३२

✓शुन – गतौ + क्वुन् प्रत्ययः ( क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२ ) ।

## शुन्ध्युः

शुन्धतीति शुन्ध्युः अग्निर्वा ।

– उ०को०, ३/२०

✓शुन्धि – शुद्धौ + युच् प्रत्ययः ( यजिमनिशुन्धिदसिजनिभ्यो युच् – उ०को०, ३/२० ) ।

## शुभंयावा

यः शुभं याति प्राप्नोति तस्मै ।

– ऋ०, ४/३/६

यः शुभं जलं याति सः । – ऋ०, ५/६१/१३

ये शुभं कल्याणं यान्ति प्राप्नुवन्ति ते ।

– ऋ०, २५/२०

✓शुभ – दीप्तौ शोभार्थे च + कः प्रत्ययः >शुभम् ✓या – प्रापणे + वनिप् प्रत्ययः ( अन्येभ्योऽपि दृश्यन्ते – अष्टा०, ३/२/७५ ) ।

## शुभ्रं

शोभते दीप्यते तत् शुभ्रं रुचिरं शुक्लं पाण्डुरं वा । – उ०को०, २/१३

✓शुभ – शोभायां + रक् प्रत्ययः ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ ) ।

## शुभ्रिः

शोभतेऽसौ शुभ्रिः चतुर्वेदविद् ब्रह्मा वा।

– उ०को०, ४/६५

✓शुभ – शोभायां + क्रिन् प्रत्ययः ( अदिशदिभूशुभिभ्यः क्रिन् – उ०को०, ४/६५ ) ।

## शुरुधः

ये शुरून् हिंसकान् सूर्यकिरणान् दधति धरन्ति ते । – ऋ०, १/१६९/८

याः शु शीघ्रं रुध्नन्ति ताः ।– ऋ०, ३/३८/५

याः शु सद्यो रुन्धन्ति ताः स्वसेनाः ।

– ऋ०, ४/२३/८

यः शुरुमन्धकारहिंसकं तेजो दधाति स सूर्य्यः। – ऋ०, ६/३/३

यो सद्यो रुन्धन्ति ते । – ऋ०, ७/२३/२

याः शुरुधो दुःखानि रुन्धन्ति ताः ।

– यजु०, ३४/४२

शु <आशु + ✓रुधिर् – आवरणे + क्विप् प्रत्ययः, तथा शुरु + ✓डुधाञ् – धारणपोषणयोः + कः प्रत्ययः ।

## शुषिरं

शुष्यन्ति पदार्था येन तत् शुषिरं छिद्रमाकाशो वा । – उ०को०, १/५१

✓शुष – शोषणे + किरच् प्रत्ययः ( इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् – उ०को०, १/५१ ) ।

## शुषिलः

शोषयति सर्वमिति शुषिलः शोषयति सर्वमिति शुषिलः वायुः ।– उ०को०, १/५६

✓शुष – शोषणे + इलच् प्रत्ययः ( गुपादिभ्यः कित् – उ०को०, १/५६ ) ।

## शुष्कः

शुष्यतीति शुष्कः नीरसो वा ।

– उ०को०, ३/४१

✓शुष – शोषणे + कक् प्रत्ययः ( सृवृभूशुषिमुषिभ्यः कक् – उ०को०, ३/४१ ) ।

## शुष्णः

शोषयति धार्मिकान् जनान् तं दुष्टस्वभावं प्राणिनम् । – ऋ०, १/११/७

शुष्यति बलयति येन व्यवहारेण स बहुर्विद्यते यस्मिँस्तस्मै । – ऋ०, १/३७/४

शुष्यति रसादिकमिति शुष्णः सूर्योऽग्निर्वा।

– उ०को०, ३/१२

✓शुष – शोषणे + नः प्रत्ययः ( तृषिशुषिरासिभ्यः कित् – उ०को०, ३/१२ ) ।

## शुष्मं

शुष्यति निस्सारं करोतीति शुष्मं अग्नि-र्वायुर्वा । – उ०को०, १/१४४

✓शुष – शोषणे + मन् प्रत्ययः ( अविसिविसिशुषिभ्यः कित् – उ०को०, १/१४४ ) ।

## शूद्रः

शोचतीति शूद्रः सेवको वा ।

– उ०को०, २/१९

✓शुच – शोके + रक् प्रत्ययः, धातोः दीर्घः तथा चकारस्य दकारः ( शुचेर्दश्च – उ०को०, २/१९ )।

## शूरः

शृणाति हिनस्ति शत्रुबलान्याक्रमति ।

– ऋ०, १/२९/४

शृणाति शत्रून् तत्सम्बुद्धौ । – यजु०, ८/५३

शवति गच्छतीति शूरः विक्रमणशीलः पुरुषो वा । – उ०को०, २/२५

१- ✓शु( सौत्रोधातुः ) – विक्रमणे + रक् प्रत्ययः, धातोर्दीर्घश्च ( शुसिचिमीनां दीर्घश्च – उ०को०, २/२५ )।

२- ✓शॄ – हिसायां + अच् प्रत्ययः, ततः धातोरङ्गस्योत्त्वं रपरत्वञ्च ( बहुलं छन्दसि – अष्टा०, ७/१/१०३ ) ततः उकारस्य दीर्घश्चेति ।

## शूरसातौ

शूराणं साति सम्भजनं यस्मिंस्तस्मिन् सङ्ग्रामे। – ऋ०, १/३१/६

शूराः सनन्ति विभजन्ति यस्मिन्सङ्ग्रामे तस्मिन् । – ऋ०, ६/१९/१२

( स०ए०व० ) – शूर + ✓षण – सम्भक्तौ + क्तिन् प्रत्ययः ।

## शूर्पं

शृणाति हिनस्तीति शूर्पं मानभेदोऽन्न-शोधकं पात्रं वा । – उ०को०, ३/२६

✓शॄ – हिसायां + पः प्रत्ययः, धातोरुपधाया उत्वञ्च ( सुशृभ्यां निच्च – उ०को०, ३/२६ ) ।

## शूलं

शु शीघ्रं लाति बोधं गृह्णाति येन तद्वचः।

– यजु०, २५/३४

शूः ( क्षिप्रनाम ) + ✓ला – आदाने + कः प्रत्ययः।

## शूलधरः

शूलं धारयतीति शूलधरः ।

– उ०को०, २/२२

शूल + ✓धृ – धारणे + रक् प्रत्ययः बाहुलकात्, णेर्लुक् च ( बहुलमन्यत्रापि संज्ञाछन्दसोः – उ०को०, २/२२ ) ।

## शृङ्गः

शृणाति हिनस्ति येन् तत् शृविषाणं सुवर्ण भेदो वा । – उ०को०, १/१२६

✓शॄ – हिंसायां + गन् प्रत्ययः, नुडागमः ह्रस्वत्वञ्च ( शृणातेर्ह्रस्वश्च – उ०को०, १/१२६ ) ।

## शृङ्गारः

शृणाति हिनस्तीति शृङ्गारः हस्तिशोभा नाट्यरसो दम्पत्योरन्योऽन्यं सम्भोगस्पृहा वा । – उ०को०, ३/१३६

✓शॄ – हिंसायां + गन् प्रत्ययः, नुडागमः ह्रस्वत्वञ्च (शृणातेर्ह्रस्वश्च- उ०को०, १/१२६) > शृङ्ग + आरन् प्रत्ययः, (शृङ्गारभृङ्गारौ – उ०को०, ३/१३६)।

## शृधूः

शर्धते कुत्सितं शब्दयतीति शृधूः अपान-वायुर्वा। – उ०को०, १/९१

✓शृधु – शब्दकुत्सायां + कूः प्रत्ययः (नृतिशृध्योः कूः – उ०को०, १/९१) ।

## शेपः

शेते येन तत् शेपः लिङ्गेन्द्रियं वा ।

– उ०को०, ४/२०१

✓शीङ् – स्वप्ने + असुन् प्रत्ययः, धातोरेत्वं पुडागमश्च (वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च – उ०को० ४/२०१) बाहुलकात् 'शेफ' इति सिद्धम् ।

## शेवः

शेतेऽसौ शेवः सुखं मेढ्रं वा ।

– उ०को०, १/१५२

✓शीङ् – स्वप्ने + वन् प्रत्ययः, धातोरेत्वञ्च (इण्शीभ्यां वन् – उ०को० १/१५२) ।

## शेवधिं

शेवं सुखं धीयते यस्मिँस्तं निधिम् ।

– यजु०, १८/५९

शेव + ✓डुधाञ् – धारणपोषणयोः + किः प्रत्ययः (कर्मण्यधिकरणे च – अष्टा०, ३/३/९३) ।

## शेवधिपाः

यः शेवधिं निधिं पाति रक्षति धर्मादिकार्य्ये करे च न व्येति स शेवधिपा।–यजु०, ३३/८२

शेवधि + ✓पा – रक्षणे + क्विप् प्रत्ययः ।

## शेवा

शेतेऽसौ शेवा लिङ्गाकृतिर्वा ।

– उ०को०, १/१५४

शेव + टाप् प्रत्ययः स्त्रियां (शेवायह्वजिह्वाग्रीवाऽप्वामीवाः – उ०को० १/१५४) ।

## शेवृधासः

शेवृन् सुखानि दधति येभ्यस्ते ।

– ऋ०, ३/१६/२

(प्र०ब०व०) – शेवृ (सुखनाम) + ✓डुधाञ् – धारणपोषणयोः + कः प्रत्ययः ।

## शेषः

यः शिष्यते सः । – ऋ०, ५/१२/६

यः शिष्यते स शेषः ।

– स० प्र० (प्रथमसमुल्लासः)

✓शिष – असर्वोपयोगे + घञ् प्रत्ययः ।

## शोचिः

शोचति शोचयतीति शोचिः प्रकाशो वा।

– उ०को०, २/१०८

✓शुच – शोके + इसिः प्रत्ययः (अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः – उ०को०, २/१०८) ।

## शोथः

श्यति तनूकरोतीति शोथः रोगविशेषो वा । – उ०को०, २/४

✓शो – तनूकरणे + थन् प्रत्ययः बाहुलकात् (उषिकुषिगार्त्तिभ्यस्थन् – उ०को०, २/४) अत्र 'शो' धातोरात्वनिषेधः ।

## शौटीरः

शौटति गर्वं करोतीति शौटीरः त्यागी वीरो वा । – उ०को०, ४/३०

✓शौटट् – गर्वे + ईरन् प्रत्ययः (कृशॄपकृ-

टिपटिशौटिभ्य ईरन् – उ०को०, ४/३०)।

## श्मश्रुः

**श्मनि मुखे श्रयतीति श्मश्रुः श्मश्रुणी श्मश्रूणि पुरुषमुखरोमाणि वा।**

– उ०को०, ५/२८

श्मन् (मुखं शरीरं वा) + √श्रिञ् – सेवायां + डुन् प्रत्ययः (श्मनि श्रयतेर्डुन् – उ०को०, ५/२८)।

## श्यामः

**श्यायति गच्छति प्राप्नोति वा स श्यामः हरितः कृष्णो वा। – उ०को०, १/१४५**

√श्या – गतिप्रापणयोः + मक् प्रत्ययः (इषियुधीन्धिदसिश्याधूसूभ्यो मक् – उ०को०, १/१४५)।

## श्यामाकः

**श्यायति प्राप्नोतीति श्यामाकः ब्रीहिभेदो वा। – उ०को०, ४/१५**

√श्या – गतिप्रापणयोः + आकः प्रत्ययः बाहुलकात् मुमागमश्च (पिनाकादयश्च – उ०को०, ४/१५)।

## श्येतः

**श्यायति गच्छतीति श्येतः श्यामवर्णो वा।**

– उ०को०, ३/९३

√श्या – गतिप्रापणयोः + इतन् प्रत्ययः (हृश्याभ्यामितन् – उ०को०, ३/९३)।

## श्येनः

**श्यायति विज्ञापयतीति श्येनो विद्वान्।**

– यजु०, २१/३५

**श्यायति गच्छतीति श्येनः पक्षिभेदो वा।**

– उ०को०, २/४६

√श्या – गतिप्रापणयोः + इनच् प्रत्ययः (श्यास्त्याहृञविभ्य इनच् – उ०को०, २/४६)।

## श्येनाभृतः

**यः श्येन इव विज्ञानादिगुणैः समन्ताद् भ्रियते सः। – ऋ०, १/८०/२**

श्येन + √डुभृञ् – भरणे + क्तः प्रत्ययः।

## श्लक्ष्णं

**क्स्नः शिलष्यतीति श्लक्ष्णं सुकुमारं त्रिलिङ्गेषु वा। – उ०को०, ३/१९**

√शिलष – आलिङ्गने + क्स्नः प्रत्ययः, धातोरुपधाया अत्वञ्च (शिलषेरच्चोपधायाः – उ०को०, ३/१९)।

## शिलकुः

**श्रिष्यति पदार्थैः सह सम्बध्यते स शिलकुः परवशो ज्योतिषं वा। – उ०को०, १/३२**

√शिलष – आलिङ्गने + कुः प्रत्ययः, धातोः षस्य कत्वञ्च (शिलषेः कश्च – उ०को०, १/३२)।

## श्लेष्मा

**शिलष्यतीति श्लेष्मा कफोद्भवो वा।**

– उ०को०, ४/१४५

√शिलष – आलिङ्गने + मनिन् प्रत्ययः (सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५)।

## श्वयीचिः

**श्वयति गच्छति वर्धते वा स श्वयीचिः व्याधिर्वा। – उ०को०, ४/७१**

√श्वि – गतिवृद्ध्योः + ईचिः प्रत्ययः (श्वयतेश्चित् – उ०को०, ४/७१)।

## श्वशुरः

**शु शीघ्रमश्नुत आप्नोति जामाता यं स श्वशुरः दम्पत्योः पिता। – उ०को०, १/४४**

शु (शीघ्रार्थे) + √अशूङ् – व्याप्तौ संघाते च + उरन् प्रत्ययः (शावशेराप्तौ – उ०को०, १/४४)।

## श्वा

**श्वयति गच्छति वर्द्धतेसौ श्वा कुक्कुरो वा । – उ०को०, १/१५९**

✓श्वि – गतिवृद्ध्योः + कनिन् प्रत्ययः निपातनात् ( श्वन्नुक्षन्पूषन्प्लीहन्क्लेदस्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्यरिज्वन्मातरिश्वन्मघवन्निति – उ०को०, १/१५९ ) ।

## शितीचयः

**ये शितिं श्वेतवर्णं चिन्वन्ति ते ।**

**– यजु०, ३३/१**

✓शिवता – वर्णे + इन् प्रत्ययः > शिति + ✓चिञ् – चयने + अच् प्रत्ययः धातोः पूर्व पदस्य च दीर्घः (चौ० – अष्टा०, ६/३/१३७) ।

## शितीची:

**या शितिं श्वेतवर्णमञ्चति सा ।**

**– ऋ०, १/१२३/९**

**यः शितिमातरणमञ्चति तस्मै ।**

**– ऋ०, २/३३/८**

**ये शितिं वृद्धमञ्चन्ति प्राप्नुवन्ति ते ।**

**– ऋ०, ७/३३/१**

(प्र०ब०व०) – शिति + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः ( ऋत्विग्दधृग्स्रग्दिगुष्णिगञ्चु युजिक्रुञ्चाञ्च – अष्टा०, ३/२/५९), धातोर्नलोपः (अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४) धातोरकारलोपः (अचः – अष्टा०, ६/४/१३८) ततः पूर्वस्य पदस्य च दीर्घः (चौ – अष्टा०, ६/३/१३७)।

## श्वित्रं

**श्वेतते वर्णविशिष्टो भवतीति श्वित्रं कुष्ठभेदो वा । – उ०को०, २/१३**

✓श्विता-वर्णे + रक् प्रत्ययः ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## श्रद्धा

**श्रत् सत्यं दधाति यया सा।– यजु०, १८/५**

**श्रत्सत्यं दधति ययेच्छया ताम् ।**

**– यजु०, १९/३०**

**श्रत् सत्यं दधाति यया ताम् ।**

**– यजु०, १९/७७**

**सत्यधारिकां क्रियाम् । – यजु०, २०/२४**

श्रत् (सत्यनाम) + ✓डुधाञ् – धारणपोषणयोः + अङ् प्रत्ययः स्त्रियां ( श्रदन्तरोरुपसर्गवद्वृत्तिः – अष्टा०वा०, ३/३/१०६ ) ।

## श्रवः

**शृण्वन्त्यनेका विद्याः सुवर्णादि च धनं यस्मिंस्तत् । – ऋ०, १/९/७**

**शृण्वन्ति सर्वा विद्या येनान्नेन तत् ।**

**– ऋ०, १/४०/४**

**शृण्वन्ति येन तच्छास्त्रम्।– ऋ०, १/१६५/१२**

**ये शृण्वन्ति ते । – ऋ०, ६/३७/३**

✓श्रु – श्रवणे + असुन् प्रत्ययः ।

## श्रवणा

**शृणोत्यनया सा श्रवणा नक्षत्रं वा ।**

**– उ०को०, २/७८**

✓श्रु – श्रवणे + युच् प्रत्ययः बाहुलकात् ( बहुलमन्यत्रापि – उ०को०, २/७८ ) ।

## श्रवाय्यः

**श्रावयतीति श्रवाय्यः दानपशुर्वा ।**

**– उ०को०, ३/९६**

√श्रु – श्रवणे + आय्यः प्रत्ययः, ( श्रुदक्षिस्पृहिगृहिभ्य आय्यः – उ०को०, ३/९६ ) ।

## श्रायाः

**ये शृण्वन्ति श्रावयन्ति वा ते ।**

– ऋ०, ५/५३/४

( प्र०ब०व० ) – √श्रु – श्रवणे + अच् प्रत्ययः, ततः वर्णव्यत्ययेन वकारस्य यकारः ।

## श्रीः

**यः श्रीयते सेव्यते सर्वेण जगता विद्वद्भि-र्योगिभिश्च स श्रीरीश्वरः ।**

– स० प्र० ( प्रथमसमुल्लासः )

**श्रयति श्रीयते वा सा श्रीः ईश्वररचना शोभा वा ।** – उ०को०, २/५७

√श्रिञ् – सेवायां + क्विप् प्रत्ययः, धातोर्दीर्घश्च ( क्विप् वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणञ्च – उ०को०, २/५७ ) ।

## श्रुतवित्

**यः श्रुतं वेत्ति ।** – ऋ०, ५/४४/१२

√श्रु – श्रवणे + क्तः प्रत्ययः > श्रुत + √विद् – ज्ञाने + क्विप् प्रत्ययः ।

## श्रुतिः

**शृण्वन्ति सकला विद्या यया सा वेदाख्या।**

– यजु०, १८/१

**तथाऽऽदिसृष्टिमारभ्याद्यपर्यन्तं ब्रह्मादिभिः सर्वाः सत्यविद्याः श्रूयन्तेऽनया सा श्रुतिः।**

– ऋ० भा० भू० ( वेदोत्पत्तिविषयः )

√श्रु – श्रवणे + क्तिन् प्रत्ययः स्त्रियाम् ।

## श्रुष्टीवान्

**ये श्रुष्टी शीघ्रं वनन्ति सम्भजन्ति ते ।**

– ऋ०, १/४५/२

**श्रुष्टीः क्षिप्र गतीर्वनति भाजयति यस्तम्।**

– ऋ०, १/१११/१

श्रुष्टी ( क्षिप्रनाम ) + √वन – सम्भक्तौ + अण् प्रत्ययः ( कर्मण्यण् – अष्टा०, ३/२/१ ) ।

## श्रेणिः

**श्रयति सेवतेऽसौ श्रेणिः पङ्क्तिर्वा ।**

– उ०को०, ४/५१

√श्रिञ – सेवायां + निः प्रत्ययः, धातोरेत्वञ्च ( वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् – उ०को०, ४/५१ ) ।

## श्रोणः

**शृणोतीति श्रोणः पङ्गुर्वा।**– उ०को०, ३/६

√श्रु – श्रवणे + नक् प्रत्ययः बाहुलकात् ( धापॄवस्यज्यतिभ्यो नः – उ०को०, ३/६ ) ।

## श्रोणिः

**शृणोतीति श्रोणिः कटिप्रदेशो वा ।**

– उ०को०, ४/५१

√श्रु – श्रवणे + निः प्रत्ययः ( बहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् – उ०को०, ४/५१ ) ।

## श्रोत्रं

**शृणोति येन तत् ।**

– यजु०, ९/२१, १८/२, ३६/१

**श्रूयतेऽनेन तत् श्रोत्रं करणं वा ।**

– उ०को०, ४/१६८

√श्रु – श्रवणे + त्रः प्रत्ययः ( गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः – उ०को०, ४/१६८ ) ।

## श्रोत्रपाः

**यः श्रोत्रं पाति ।** – यजु०, २०/३४

श्रोत्र + √पा – रक्षणे + क्विप् प्रत्ययः ।

## षण्डः

**सनोति ददातीति षण्डः नपुंसको वनं गोपः सङ्घातो वा ।** – उ०को०, १/११४

√षणु – दाने + डः प्रत्ययः ( ञमन्ताड्डः – उ०को०, १/११४ ) ।

## षण्ढः

**समतीति षण्ढः अकृतदारो वा ।**

**– उ०को०, ४/१०४**

✓षम – अवैक्लव्ये + ढः प्रत्ययः (जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वणक्विन्शक्स्यढडटोटचः – उ०को०, ४/१०४) ।

## षिङ्गः

**सेटत्यनाद्रियते स षिङ्गः चञ्चलमना हारमध्यस्थो मणिर्वा । – उ०को०, १/१२४**

✓षिट – अनादरे + गन् प्रत्ययः बाहुलकात् (छापूखडिभ्यः कित् – उ०को०, १/१२४) ।

## सक्तुः

**सच्यन्ते समवेताः क्रियन्ते ते सक्तवः पक्वयवादिचूर्णं वा । – उ०को०, १/६९**

✓षच – समवाये + तुन् प्रत्ययः, चकारस्य ककारः (सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् – उ०को०, १/६९) ।

## सक्तुश्रीः

**यः सक्तूनि समवेतानि द्रव्याणि श्रयति।**

**– यजु०, ८/५७**

सक्तु + श्रीः > सक्तुश्रीः (यथास्थाने उभावपि व्याख्यातौ) एतयोः पदयोः समासः ।

## सक्थिः

**सृजतीति सक्थि ऊरुदेशो वा ।**

**– उ०को०, ३/१५४**

✓षञ्ज – सङ्गे + क्थिन् प्रत्ययः (असिसञ्जिभ्यां क्थिन् – उ०को०, ३/१५४) ।

## सक्मन्

**यः सचति तत्सम्बुद्धौ । – ऋ०, १/३१/६**

✓षच् – समवाये + मनिन् प्रत्ययः (सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५) चकारस्य ककारश्च।

## सखा

**समानं ख्यातीति सखा सखायौ सखायः मित्रं सहायो वा । – उ०को०, ४/१३७**

स (समानं) + ✓ख्या – प्रकथने + इण् प्रत्ययः, धातोर्यकारलोपः (समाने ख्यः स चोदात्तः – उ०को०, ४/१३७) > सखि ततः अनङादेशः (अनङ् सौ – अष्टा०, ७/१/९३) ततः णिद्वद्भावत्वात् वृद्धौ च (सख्युरसम्बुद्धौ – अष्टा०, ७/१/९२) ।

## सखिविदं

**सखीन् सुहृदो विदन्ति येन तम् ।**

**– यजु०, ११/८**

(द्वि०ए०व०) – सखि + ✓विद् – ज्ञाने + क्विप् प्रत्ययः ।

## सगमे

**गच्छतीति ग्मा पृथिवी तया सह वर्त्तते तस्मिन् यज्ञे । – यजु०, ४/२६**

(स०ए०व०) – सह > स + ग्मा इति पृथिवीनाम (निघण्टु १/१, ४/२६) एतयोः पदयोः समासः ।

## सङ्कसुकः

**सम्यक् कसति गच्छतीति सङ्कसुकः संशयमापन्नश्चञ्चलो दुर्जनो वा ।**

**– उ०को०, २/२९**

सम् + ✓कस – गतौ + उकन् प्रत्ययः (समि कस उकन् – उ०को०, २/२९) ।

## सङ्क्रमः

**सम्यक् क्रमन्ते यस्मिँस्तस्य ।**

**– यजु०, १५/९**

सम् + ✓क्रमु – पादविक्षेपे + घञ् प्रत्ययः ।

## सङ्ग्रहणी

**सङ्गृह्णातीति सङ्ग्रहणी व्याधिभेदो वा।**

**– उ०को०, ५/६७**

सम् + ✓ग्रह – उपादाने + अनिः प्रत्ययः ( ग्रहेरनिः – उ०को०, ५/६७ ) ।

## सङ्ग्रहीतृभ्यः

**ये युद्धार्थास्सामग्रीः सम्यग् गृह्णन्ति तेभ्यः।**

– यजु०, १६/२६

( च०ब०व० ) – सम् + ✓ग्रह – उपादाने + तृच् प्रत्ययः ।

## संस्कृतत्रं

**यः संस्कृतं त्रायते रक्षति तम् ।**

– ऋ०, ६/२८/४

सम् + ✓डुकृञ – करणे + क्तः प्रत्ययः > संस्कृत + ✓त्रैङ् – पालने + डः प्रत्ययः ।

## संयद्वरः

**संयच्छतीति संयद्वरः नृपो वा ।**

– उ०को०, ३/१

सम् + ✓यमु – उपरमे + ष्वरच् प्रत्ययः, मकारस्य दकारः ( छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवर-गह्वरकट्वरसंयद्वराः – उ०को०, ३/१ ) ।

## संरराणाः

**सम्यग् रान्ति ददति ते । – यजु०, १७/१**

**सम्यक् सुखानि राति ददाति सः ।**

– यजु०, १९/५१

सम् + रा – दाने + आनच् प्रत्ययः धातोः द्वित्वं अभ्यासस्य च ह्रस्वः ।

## संवत्सरः

**सम्यग्वसन्त्यत्र स संवत्सरः ।**

– उ०को०, ३/७२

सम् + ✓वस् – निवासे + सरन् प्रत्ययः धातोः सकारस्य तकारः ( संपूर्वाच्चित् – उ०को०, ३/७२ )।

## संवसथः

**सम्यग्वसन्ति यत्र स संवसथः ग्रामो वा ।**

– उ०को०, ३/११६

सम् + ✓वस – निवासे + अथः प्रत्ययः ( उपसर्गे वसेः – उ०को०, ३/११६ ) ।

## संश्चत्

**संश्चीयतेऽसौ संश्चत् कुहको वा ।**

– उ०को०, २/८५

सम् + ✓चिञ् – चयने + अति प्रत्ययः धातोः सुडागमः इकारलोपश्च ( संश्चत्तृपद्वेहत् – उ०को०, २/८५ ) ।

## संवृक्

**यः सम्यग्वर्जयति सः । – ऋ०, २/१२/३**

**यः संवृक्ते सः । – यजु०, ३८/२८**

सम् + ✓वृजी – वर्जने + क्विप् प्रत्ययः ।

## संवेशपतये

**सम्यक् विशन्ति ये ते पृथिव्यादयः पदार्थास्तेषां पतिः पालकस्तस्मै ।**

– यजु०, २/२०

( च०ए०व० ) – सम् + ✓विश – प्रवेशने + अण् प्रत्ययः > संवेश + पति ( एतयोः पदयोः समासः ) ।

## संसद्

**संसीदन्ति विद्वांसो यस्यां तस्यां सभायाम्।**

– ऋ०, १/९४/१

**सम्यक् सीदन्ति यस्यां तया ।**

– ऋ०, ७/५४/३

**सम्यक् सीदन्ति यासु ताः ।**

– यजु०, २६/१

सम् + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## संसर्पाय

**यः सम्यक् सर्पति गच्छति तस्मै ।**

– यजु०, २२/३०

( च०ए०व० ) – सम् + ✓सृप्लृ – गतौ + अच् प्रत्ययः ।

## संस्तवानः

सम्यक् स्तौतीति संस्तवानः वाग्मी वा ।

– उ०को०, २/८९

सम् + √ष्टुञ् – स्तुतौ + आनच् प्रत्ययः (सम्यानच् स्तुवः – उ०को०, २/९०) ।

## संस्तुप्

सम्यक् स्तुभ्नाति शब्दार्थसम्बन्धान् यया सा वाक् । – यजु०, १५/५

सम् + √स्तुम्भु (सौत्रधातु) – स्तुत्यर्थे सम्बन्धे च + क्विप् प्रत्ययः ।

## संस्था

सम्यक् तिष्ठन्ति यस्मिंस्तस्मिन् ।

– ऋ०, ५/३/८

सम्यक् तिष्ठन्ति यस्यां ताम् ।

– यजु०, १९/२९

सम् + √ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः, ततः टाप् प्रत्ययः स्त्रियाम् ।

## संसृष्टजित्

यः संसृष्टान् मिलिताञ्छत्रूञ्जयति सः ।

– यजु०, १७/३५

संसृष्ट + √जि – जये + क्विप् प्रत्ययः, तुगागमश्च।

## संस्रवभागाः

सम्यक् स्रूयन्ते ये ते संस्रवाः भज्यन्ते ये ते भागाः, संस्रवा भागा येषां ते ।

– यजु०, २/१८

(प्र०ब०व०) – सम् + √स्रु – गतौ + अच् प्रत्ययः (ऋदोरप् – अष्टा०, ३/३/५७) > संस्रव + √भज – सेवायां + घञ् प्रत्ययः > भागः, संस्रत + भागः (एतयोः पदयोः समासः) ।

## सचाः

सचन्ति ये ते सचास्तान् सचानस्मान् विदुषः । – ऋ०, १/९/३

√षच – समवाये + अच् प्रत्ययः ।

## सजातवनिः

जातं जातं वनति स जातवनिः समानश्चासौ जातवनिस्तम्।– यजु०, १/१७

समानान् जातान् वेदान् क्षत्रधर्मान् मूर्त्तान् जगत्स्थान् पदार्थान् वा वनयति प्रकाशयति तम् । – यजु०, १/१८

समाना जाता विद्याः समानं जातं राज्यं वा वनयति । – यजु०, १/१८

सह > स + जात + √वन – सम्भक्तौ + इन् प्रत्ययः (छन्दसि वनसनरक्षिमथाम् – अष्टा० ३/२/२७) ।

## सजूः

यः समानं जुषते सः । – ऋ०, १/४५/१४

यः समानं जुषते प्रीणाति सः ।

– यजु०, ३/१०

यः समानं जुषते सेवते सः ।

– यजु०, ३/१०

यः समानं जुषते सः । – यजु०, ८/१०

सह > स + √जुषी – प्रीतिसेवनयोः + क्विप् प्रत्ययः (क्विप् च – अष्टा० ३/२/७६) ।

## सञ्चरणीः

याः सम्यक् चरन्ति ता भूमयः ।

– ऋ०, ६/२४/४

(प्र०ब०व०) – सम् + √चर – गतौ + ल्युट् प्रत्ययः, ततः ङीप् प्रत्ययः, स्त्रियाम् ।

## सञ्चराः

ये सम्यक् चरन्ति ते । – यजु०, २४/१५

सञ्चरन्ति येषु ते मार्गाः । – यजु०, २४/१७

(प्र०ब०व०) – सम् + √चर – गतौ + अच् प्रत्ययः।

## सत्यं

**सन्तीति सन्तः, सद्भ्यो हितः तत्र साधुर्वा।**

– ऋ०, १/१/५

**सन्तीति सन्तस्तेषु सत्सु साधु तत्सत्यम् ।**

– स० प्र० ( प्रथमसमुल्लासः )

सत् + यत् प्रत्ययः साध्वर्थे ।

## सत्यतरः

**यः सत्येन दुःखं तरति सः ।**

– ऋ०, ७/२/१०

सत्य + ✓तॄ – प्लवनसंतरणयोः + अच् प्रत्ययः ।

## सत्यमन्मा

**यः सत्यं मन्यते विजानाति विज्ञापयति सः । – ऋ०, १/७३/२**

सत्य + ✓मन – ज्ञाने + मनिन् प्रत्ययः ( सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५ ) ।

## सत्ययजं

**यः सत्यमेव यजति सङ्गच्छते तम् ।**

– ऋ०, ४/३/१

( द्वि०ए०व० ) – सत्य + ✓यज – देवपूजासंगतिकरणदानेषु + अच् प्रत्ययः ।

## सत्यराधसं

**सत्यं राध्नोति यया ताम् । – यजु०,२२/११**

( द्वि०ए०व० ) – सत्य + ✓राध – संसिद्धौ + असुन् प्रत्ययः ।

## सत्यश्रुतः

**ये सत्यं श्रुतवन्तः शृण्वन्ति वा ।**

– ऋ०, ५/५७/८

**ये सत्यं यथार्थं शृण्वन्ति ते ।**

– ऋ०, ५/५८/८

( प्र०ब०व० ) – सत्य + ✓श्रु – श्रवणे + क्विप् प्रत्ययः, तुगागमश्च ( ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९ ) ।

## सत्वा

**यः सीदति । – ऋ०, ५/३३/५**

**यः सीदति सः पुरुषार्थी । – ऋ०, ६/२९/६**

✓षद्लृ – विशरणगत्यवसादनेषु + वनिप् प्रत्ययः धातोर्दकारस्य तकारः ।

## सत्रं

**सीदन्ति यत्रेति सत्रं यज्ञो वा।– उ०को०, ४/१६७**

✓षद्लृ – विशरणगत्यवसादनेषु + त्रः प्रत्ययः ( गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः – उ०को०, ४/१६७ ) ।

## सत्रसदौ

**सतां जीवात्मनां त्राणं सत्रं तत्र सीदतस्तौ।**

– यजु०, ३४/५५

( प्र०द्वि०व० ) – सत्र + ✓षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः ।

## सत्राकरः

**सत्रा सत्यं करोतीति । – ऋ०, १/१७८/४**

सत्रा ( सत्यनाम ) + ✓डुकृञ् – करणे + अच् प्रत्ययः ।

## सत्राचीं

**या सत्रा सत्यमञ्चति प्रापयति ताम् ।**

– ऋ०, ७/५६/१८

( द्वि०ए०व० ) – सत्रा + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः ( ऋत्विग्दधृग्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च – अष्टा०, ३/२/५९ ) धातोर्नलोपः ( अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४ ) ततः ङीप् प्रत्ययः स्त्रियां ( अञ्चतेः चोपसंख्यानम् – अष्टा०वा०, ४/१/६ ) ।

## सत्राजितं

**सत्रा सत्यं जयत्युत्कर्षति येन तम् ।**

– यजु०, ११/८

(द्वि०ए०व०) – सत्रा + √जि – जये + क्विप् प्रत्ययः, तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९)।

## सत्रादावन्

सत्यं ददातीति तत्सम्बुद्धौ, सत्रं वृष्ट्याख्यं यज्ञं समन्ताद्ददातीति स वा।

– ऋ०, १/७/६

सत्रा + √डुदाञ् – दाने + वनिप् प्रत्ययः (स्नामदिपद्यर्तिपृशकिभ्यो वनिप् – उ०को०, ४/११३)।

## सत्रासाहं

सत्यानि सह्यन्ते येन तम्। – ऋ०, १/७९/८

यः सत्रा सत्येन सहते तस्मै। – ऋ०, २/२१/२

यः सत्यं सहते सः। – ऋ०, २/२१/३

यः सत्रा सत्यानि सहते तम्।

– ऋ०, ३/३४/८

यः सत्राणि बहून् यज्ञान् कर्त्तुं सहते सः।

– ऋ०, ७/२०/३

सत्रा + √षह – मर्षणे + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१)।

## सदः

सीदन्ति विद्वांसो धार्मिका न्यायाधीशा यस्मिँस्तत्सदः सभास्तस्य। – ऋ०, १/१८/६

सीदन्ति सुखानि यस्मिंस्तं शिल्पव्यवहारं देहादिकं वा। – ऋ०, १/२७/३

सीदन्त्यवतिष्ठन्ति यस्मिंस्तत्।

– ऋ०, १/३७/२०

सीदन्ति यस्मिन् याने तत्। – ऋ०, १/११६/६

सीदन्ति येषु तान्। – ऋ०, १/१२८/३

सीदन्ति यस्मिंस्तस्माद्गृहात्।

– ऋ०, २/१७/७

सीदन्ति यस्मिंस्तद्गृहम्। – ऋ०, ५/८५/७

सीदन्ति यस्मिंस्तत्।

– ऋ०, ६/१/५, ६/१६/१७

सीदन्ति विद्वांसो यस्मिंस्तत्सत्यं वचः।

– ऋ०, ६/६७/८

यः सीदति तम्। – ऋ०, ७/११/२

सीदन्ति यस्मिन् तम्। – ऋ०, ७/४१/७

सीदन्ति प्राप्नुवन्ति सुखानि यस्मिन् तद् गृहम्। – यजु०, २/६

सीदन्ति घ्नन्ति दुःखानि येन तदोषधसेवनं पथ्याचरणं च। – यजु०, २/६

सीदति जानाति येन तत् ज्ञानम्।

– यजु०, २/६

सद्यते विज्ञायते प्राप्यते यस्तम्।

– यजु०, ५/४

सीदन्ति यस्मिंस्तत्।

– यजु०, ३४/४०, ३४/५५, १९/१८, ५/३३

सीदन्ति बुद्धिविषया यस्मिन्निति सदः अध्ययनाध्यापननिमित्ता सभा।

– यजु०, ६/२४

सीदन्ति यस्मिन् यस्मिन् तत्तद्गृहम्।

– यजु०, १९/५९

यो न्याये सीदति तम्। – यजु०, १६/१६

सीदन्ति प्राप्नुवन्ति यस्यां ताम्।

– यजु०, २५/१४

सीदन्त्यत्रेति सदः सभा वा।

– उ०को०, ४/१८९

√षद्लृ – विशरणगत्यवसादनेषु + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९)।

## सदनं

सीदन्ति जना यस्मिंस्तस्मिन् ।

– ऋ०, १/३१/१७

सीदन्ति यस्मिँस्थाने तस्मिन् ।

– ऋ०, १/५३/१

सीदन्ति यस्मिन्नाकाशे तस्मिन् ।

– ऋ०, १/१४८/३

सीदन्ति यत्र तत् । – ऋ०, ३/३१/९

सीदन्ति यस्मिंस्तस्मिन् । – ऋ०, ७/३६/३

सीदन्ति गच्छन्ति पुरुषार्थेन येषु तानि गृहाणि । – यजु०, ८/१८

सीदन्ति गच्छन्ति यत्तत् । – यजु०, ८६/८७

✓षद्लृ – विशरणगत्यवसादनेषु + ल्युट् प्रत्ययः ।

## सदापृणः

यः सदा पृणाति तर्पयति सः ।

– ऋ०, ५/४४/१२

सदा + ✓पृण – प्रीणने + कः प्रत्ययः ।

## सदावृधः

यः सर्वदा वर्धते तस्य । – यजु०, २७/३९

(ष०ए०व०) – सदा + ✓वृधु – वृद्धौ + क्विप् प्रत्ययः ।

## सदासहं

सर्वदा दुष्टानां शत्रूणां हानिकारकं दुःखानां च सहनहेतुम् । – ऋ०, १/८/१

(द्वि०ए०व०) – सदा + ✓षह – मर्षणे + क्विप् प्रत्ययः ।

## सद्म

सीदन्ति यस्मिँस्तत् सद्म जगत् ।

– ऋ०, १/१८/९

सीदन्ति यस्मिन् गृहे तत् । – ऋ०, १/३८/१०

सीदन्ति यस्मिँस्तत् । – ऋ०, १/१७३/१

सीदन्ति यस्मिँस्तत् । – ऋ०, ४/९/३

सीदन्ति यस्मिन् तस्मिन् गृहे ।

–ऋ०, ७/१८/११

सीदन्ति यस्मिँस्तस्य । – ऋ०, ६/४७/२१

यस्मिन् सीदति तम् । – ऋ०, ६/५१/१२

✓षद्लृ – विशरणगत्यवसादनेषु + मनिन् प्रत्ययः (सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५) ।

## सधमात्

समानस्थानात् यः सः माद्यति ।

– ऋ०, ४/२१/१

यत्र सह माद्यन्त्यानन्दन्ति तम् ।

– ऋ०, ७/३२/१

याः सह माद्यन्ति हृष्यन्ति ताः ।

– यजु०, १०/७

सध (सह) + ✓मदी – हर्षे + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१) पूर्वपदस्य सहस्य सधादेशः (सध मादस्थयोश्छन्दसि – अष्टा०, ६/३/९६) ।

## सधिः

सहते भारमिति सधिः अनड्वान् वा ।

– उ०को०, २/११३

✓षह – मर्षणे + इसिः प्रत्ययः, धातोः हकारस्य धकारः (सहोधश्च – उ०को०, २/११३) ।

## सध्रीचीः

सहाञ्चति गच्छति तत्सध्र्यङ्, सध्र्यङ् एव सध्रीचीनं तेन । – ऋ०, १/३३/११

सहैवाञ्चन्तीः । – ऋ०, ३/३१/१६

याः सहाऽभ्यन्ति ताः । – ऋ०, ६/३६/३

सह > सध्रि + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च –

अष्टा०, ३/२/५९) सहस्य सध्रिरादेशः (सहस्य सध्रिः – अष्टा०, ६/३/९५) धातोर्नकारलोपः (अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४) स्त्रियां ङीप् प्रत्ययः (अञ्चते श्चोपसंख्यानम् – अष्टा०वा०, ४/१/६) ततः धातोरकारलोपः (अचः – अष्टा०, ६/४/१३८) तथा पूर्वस्य पदस्य दीर्घादेशः (चौ – अष्टा०, ६/३/१३७)।

## सनकाः

**सनन्ति सेवन्ते परपदार्थान् ये ते।**

– ऋ०, १/३३/४

(प्र०ब०व०) – √षण – सम्भक्तौ + क्वुन् प्रत्ययः (क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि – उ०को०, २/३२)।

## सनजा

**या सनेति सनातनाज्जायते सा।**

– ऋ०, १/६२/७

√षण – सम्भक्तौ + कः प्रत्ययः > सन + √जनी – प्रादुर्भावे + डः प्रत्ययः तत् स्त्रियां टाप् प्रत्ययः।

## सनश्रुतं

**यः सनातनानि शास्त्राणि शृणोति तम्।**

– ऋ०, ३/११/४

(द्वि०ए०व०) – सन + √श्रु – श्रवणे + क्विप् प्रत्ययः, धातोः तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९)।

## सनिः

**सनन्ति सम्भजन्ति सुखानि यस्मिन् व्यवहारे तम्।** – ऋ०, १/२७/४

**सनन्ति संविभजन्ति सत्याऽसत्ये यया ताम्।**

– यजु०, ३२/१३

**सनोति ददातीति सनिः अध्येषणं वा।**

– उ०को०, ४/१४०

√षणु – दाने + इः प्रत्ययः (खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च – उ०को०, ४/१४०)।

## सन्तरणः

**यः सम्यगध्वनस्तारयति पारं करोति सः।**

– यजु०, ३५/१३

सम् + √तॄ – प्लवनसंतरणयोः + युच् प्रत्ययः (सुयुरुवृञो युच् – उ०को०, २/७५)।

## सन्दानं

**सम्यक् दीयते यत्तत्।** – ऋ०, १/१६२/८

सम् + √डुदाञ् – दाने + ल्युट् प्रत्ययः।

## सन्ध्या

**सन्दधाति यस्यां वेलायां सा सन्ध्या सायङ्कालः प्रतिज्ञा वा।** – उ०को०, ४/११२

सम् + √ध्यै – चिन्तायां + यक् प्रत्ययः, स्त्रियां टाप् प्रत्ययश्च अथवा सम् + √डुधाञ् – धारणपोषणयोः + यक् प्रत्ययः, धातोः आत्वलोपः (आतो लोप इटि च – अष्टा०, ६/४/६४) ततः स्त्रियां टाप् च।

## सन्या

**समानान् पदार्थान् नयति यया तया।**

– यजु०, ५/७

**सत्यं नीयते यया तस्याम्।** – यजु०, ८/५४

(तृ०ए०व०) – सम् + √णीञ् – प्रापणे + क्विप् प्रत्ययः।

## सपत्नक्षित्

**सपत्नान् क्षयति यया सा।** – यजु०, १/२९

सह > स (सहस्य सादेशत्वात्) + √पत्लृ – गतौ + नः प्रत्ययः (धापॄवस्यज्यतिभ्यो नः – उ०को०, ३/६) > सपत्न + √क्षि – क्षये + क्विप् प्रत्ययः, तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९)।

## सपत्नदम्भनं

यः सपत्नान् दम्भयतीति तम् ।

– यजु०, ३/१८

सपत्न + ✓दम्भु – दम्भने + ल्युट् प्रत्ययः ।

## सपत्नसाही

यया सपत्नान् शत्रून् सहन्ते सा ।

– यजु०, ५/१०

यया सपत्नान् दोषान् सहन्ते मृष्यन्ति दूरी कुर्वन्ति सा । – यजु०, ५/१०

यया सपत्नान् दुष्टानि शीलानि सहन्ते सा । – यजु०, ५/१०

सपत्न + ✓षह – मर्षणे + अण् प्रत्ययः (कर्मण्यण् – अष्टा० ३/२/१) ततः ङीप् प्रत्ययः स्त्रियाम् ।

## सपत्नहा

यः सपत्नानरीन् हन्ति सः ।– यजु०, १२/५

शत्रुदोषहन्ता । – यजु०, २७/३

सपत्न + ✓हन् – हिंसागत्योः + क्विप्, ततः धातोर्दीर्घश्च। प्रत्ययः, ततः धातोर्दीर्घश्च ।

## सप्त

सपति समवैतीति सप्तन् संख्याभेदो वा ।

– उ०को०, १/१५७

✓षप – समवाये + कनिन् प्रत्ययः तुडागमश्च (सप्यशूभ्यां तुट् च – उ०को०, १/१५७) ।

## सबर्दुघाः

बर्बति येन ज्ञानेन तद् ब, समानं बर्दोग्धि प्रपूरयति यां ताम् । – ऋ०, १/२०/३

समानं सुखं बिभर्त्ति येन दुग्धेन तत्सबस्त-द्दोग्धि तस्याः । – ऋ०, १/१२१/५

स + ✓बर्ब – गतौ + क्विप् प्रत्ययः धातोर्बलोपः > सबर् अथवा स + ✓डुभृञ् – भरणे + विच् प्रत्ययः, वर्णव्यत्ययेन भकारस्य बकारः > सबर् + ✓दुह – प्रपूरणे + कप् प्रत्ययः, धातोर्हकारस्य स्थाने घादेशः (दुहः कप् घश्च – अष्टा०, ३/२/७०) तत स्त्रियां टाप् प्रत्ययः ।

## सबाधः

ये पदार्थान् सहैव बाधन्ते ते ।

– ऋ०, १/६४/८

स > सह + ✓बाधृ – लोडने + असुन् प्रत्ययः ।

## सभराः

समानं बिभ्रतीति सभराः । – यजु०, १७/८१

स + ✓डुभृञ् – भरणे + अंच् प्रत्ययः ।

## सभाचरं

यः सभायां चरति तम् । – यजु०, ३०/६

स + ✓भा – दीप्तौ + डः प्रत्ययः ततः स्त्रियां टाप् प्रत्ययः > सभा + ✓चर – गतौ +टः प्रत्ययः (चरेष्टः – अष्टा०, ३/२/१६) ।

## समद्वा

सम्यगत्ति स्वादु भुङ्क्ते सः ।

– ऋ०, ६/१८/२

यो मदेन सह वर्त्तमानान्वनति सम्भजति सः । – ऋ०, ७/२०/३

१- सम् + ✓अद् – भक्षणे + वनिप् प्रत्ययः (स्नामदिपद्यर्तिपॄशकिभ्यो वनिप् – उ०को०, ४/११३) ।

२- समद + ✓वन – सम्भक्तौ + विच् प्रत्ययः, धातोरङ्गस्याकारादेशः (विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१) पूर्वपदस्यान्त्यलोपश्च ।

## समनगाः

यः समनं सङ्ग्रामं गच्छति सः ।

– ऋ०, ७/९/४

समन (सङ्ग्रामनाम) + ✓गम्लृ – गतौ + डः प्रत्ययः ।

## समर्यजित्

**यः समर्यान् सङ्ग्रामान् जयति सः ।**
– ऋ०, १/१११/५

समर्य (सङ्ग्रामनाम) + ✓जि – जये + क्विप् प्रत्ययः तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९) ।

## समया

**समेतीति समया । – उ०को०, ४/१७५**

सम् + ✓इण् – गतौ + आः प्रत्ययः (आः समिण्निकषिभ्याम् – उ०को०, ४/१७५) ।

## समाशिरां

**सम्यगभितः श्रीयन्ते सेव्यन्ते सद्गुणैर्ये तेषां।**
– ऋ०, १/३०/२

सम् + आङ् + ✓श्रिञ् – सेवायां + असुन् प्रत्ययः, धातोः शिरादेशः (श्रयतेः स्वाङ्गे शिरः किच्च – उ०को०, ४/१९४) ।

## समित्

**सम्यगिध्यते दीप्यतेऽनया सा विद्या काष्ठादिर्वा। – यजु०, २/४**

**सम्यगिध्यतेऽनयाऽनेन वा सा समिदग्निप्रदीपकं काष्ठादिकं, वसन्त ऋतुर्वा । – यजु०, २/५**

**सम्यगिध्यते प्रदीप्यते यया तया ।**
– यजु०, ३/१

**समिध्यते प्रकाश्यतेऽर्थतत्त्वमनया क्रियया ताम् । – यजु०, ८/२८**

**समिध्यते प्रदीप्यते ज्ञानं याभिस्ता ।**
– यजु०, २३/५८

सम् + ✓ञिइन्धी – दीप्तौ + क्विप् प्रत्ययः, धातोर्नलोपश्च ।

## समिथः

**समेति सम्यक् प्राप्नोति पदार्थानिति समिथः अग्निर्वा । – उ०को०, २/११**

सम् + ✓इण् – गतौ + थक् प्रत्ययः (समीणः – उ०को०, २/११) ।

## समीचः

**सम्यगेति गच्छतीति समीचः समुद्रो वा। समीची हरिणी । – उ०को०, ४/९२**

सम् + ✓इण् – गतौ + चट् प्रत्ययः, धातोर्दीर्घश्च (समीणः – उ०को०, ४/९२) ।

## समीची

**सम्यगञ्चति प्राप्नोति सा भूमिः ।**
– ऋ०, १/६९/१

**या दीप्तिं सम्यगञ्चति सा ।**
– ऋ०, २/२७/१५

**याः सम्यग्गच्छन्ति ताः । – ऋ०, ३/२९/१३**

**ये सम्यगञ्चतः समानं प्राप्नुतस्ते ।**
– ऋ०, ३/३०/११

**याः समानं सत्यमञ्चन्ति ताः ।**
– ऋ०, ३/३१/१३

**याः सम्यगञ्चन्ति शिक्षाः प्राप्नुवन्ति ताः सेनाः । – ऋ०, ४/१७/९**

**यौ सम्यगञ्चतो विजानीतस्तौ ।**
– यजु०, ११/३१

**ये सम्यगञ्चतः सर्वान् प्राप्नुतस्ते ।**
– यजु०, १२/२

**याः सम्यगच्यन्ते । – यजु०, १४/२५**

सम् + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः (ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च – अष्टा०, ३/२/५९) धातोर्नलोपश्च (अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४) धातोरकारस्य ईकारः

(उद ईत् – अष्टा०, ६/४/१३९) ततः ङीप् प्रत्ययः स्त्रियां (अञ्चते चोपसंख्यानम् – अष्टा०वा०, ४/१/६) ।

## समुद्रः

समुद्रवन्त्यापो यस्मिन् तदन्तरिक्षम् ।

– ऋ०, १/१९/७

सम्यक् द्रवन्त्यापो यस्मिँस्तस्यान्तरिक्षस्य।

– ऋ०, १/११६/४

यानि सम्यग्द्रवन्ति । – ऋ०, ५/७३/८

सम्यगापो द्रवन्ति यस्मिँस्तदन्तरिक्षं मेघो वा । – ऋ०, ६/६१/६

सम्यग्द्रवन्त्यापो येषु स्थानेषु तानि ।

– ऋ०, ६/७२/५

समुद्रवन्त्यापो यस्मिन् स सागरः ।

– ऋ०, ७/३५/१३

समुद्द्रवन्ति भूतानि यस्मात् सः ।

– यजु०, ५/३३

समुद्रवन्ति जलानि यस्मिन् तमुदधिम् ।

– यजु०, ६/२१

सम्यगूर्ध्वं द्रवन्त्यापो यस्मात्सागरात्तम् ।

– यजु०, १२/२९

समुद्द्रवन्ति कामुका यस्मिन् व्यवहारे सः । – यजु०, १३/१६

समुद्द्रवन्ति पदार्था येषु तान् भूतभविष्यद्वर्त्तमानान् समयान् । – यजु०, १३/३१

सम्यग् द्रवन्त्यापो यस्मात्सः ।

– यजु०, १७/६०

समुद्द्रवन्त्यापो यस्मिँसः । – यजु०, १८/४५

१- सम् + √उन्दी – क्लेदने + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) धातोर्नलोपश्च (अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४) ।
२- सम् + उत् + √द्रु – गतौ + डः प्रत्ययः अन्येष्वपि दृश्यते – अष्टा०, ३/२/१०१) ।

## सम्राट्

यः सम्यग्राजते सः । – ऋ०, १/१००/१

यश्चक्रवर्त्तीव विद्यासु सम्यग् राजते सः।

– ऋ०, १/१८८/५

यः सम्यग् राजते सः । – ऋ०, २/२८/६

य सम्यग् राजते । – ऋ०, ३/५५/७

यः सम्यग्राजते भूमौ । – ऋ०, ३/५६/५

यौ सम्यग् राजेते तौ । – ऋ०, ५/६३/५

यः सम्यग्राजते तस्मै । – ऋ०, ५/८४/१

यः सम्यक्सूर्यवद्विधाविनयाभ्यां राजते तस्मै। – ऋ०, ६/६८/९

यः सूर्यः सम्यग्राजते तद्वद्वर्तमानश्चक्रवर्ती राजा । – ऋ०, ७/५८/४

यः सम्यग्राजते प्रकाशते सः ।

– यजु०, ३/३८

यः सम्यग् राजते सः । – यजु०, ४/३०

सम्यग्राजते स चक्रवर्त्ती । – यजु०, ८/३७

यो राजधर्मे सम्यग्राजते सः ।

– यजु०, ९/२४

यः सम्यग्राजते सः । – यजु०, १३/३५

यः सम्यग्राजते तम् । – यजु०, ३३/८

यः सम्यग्राजते सः । – यजु०, ३९/५

सम् + √राजृ – दीप्तौ + क्विप् प्रत्ययः (सत्सूद्विषद्रुह-

दुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१)।

## सम्पातिः

संरक्षतीति सम्पातिः पक्षिराजो वा।

– उ०को०, ५/५

सम् + ✓पा – रक्षणे + अतिः प्रत्ययः (पातेरतिः – उ०को०, ५/५)।

## सम्भूतिं

सम्भवन्ति यस्यां तां कार्य्याख्यां सृष्टिम्।

– यजु०, ४०/११

सम् + ✓भू – सत्तायां + क्तिन् प्रत्ययः स्त्रियाम्।

## सम्यक्

यत्समीचीनमञ्चति। – ऋ०, ५/६६/२

यः समीचीनमञ्चति तम्। – यजु०, १५/२९

सम् + ✓अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः (ऋत्विग्दधृग्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च – अष्टा०, ३/२/५९) धातोर्नलोपः (अनिदितां हल उपधायाः क्ङिति – अष्टा०, ६/४/२४) ततः सम्यादेशश्च (समः समि – अष्टा०, ६/३/९२)।

## सयावभिः

ये समानं यान्ति ते समायानस्तैः।

– ऋ०, १/४४/१३

ये सह यान्ति तैः। – यजु०, ३३/५

(तृ०ब०व०) – सह > स + ✓या – प्रापणे + वनिप् प्रत्ययः।

## सयावरीः

याः समानं यान्ति ताः। – ऋ०, १/८४/१०

या सहैव याति सा। – ऋ०, ७/३१/८

सह > स + ✓या – प्रापणे + वनिप् प्रत्ययः, ततः स्त्रियां ङीप् रेफश्चान्तादेशः (वनो र च – अष्टा०, ४/१/७)।

## सयुजः

ये समानं युञ्जते ते। – ऋ०, ३/३०/११

यत्समानं युनक्ति तेन। – यजु०, ११/१५

यौ समानं युङ्क्तस्तौ। – यजु०, २१/१८

ये सह युञ्जन्ते तैः। – यजु०, २८/४

सह > स + ✓युजिर – योगे + क्विप् प्रत्ययः (सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१)।

## सरः

सरन्ति जलानि यस्मिन् तडागे तत्।

– यजु०, २३/४७

सरन्ति गच्छन्त्यापो यत्र तत् सरः तडागो वा। – उ०को०, ४/१८९

✓सृ – गतौ + असुन् प्रत्ययः (सर्वधातुभ्योऽसुन् – उ०को०, ४/१८९)।

## सरकं

सरति गच्छतीति सरकं गमनं वा।

– उ०को०, ५/३५

✓सृ – गतौ + वुन् प्रत्ययः (कृञादिभ्यः संज्ञायां वुन् – उ०को०, ५/३५)।

## सरटः

सरति प्रसरतीति सरटः कृकलासो वा गिरगिट इति प्रसिद्धः। – उ०को०, ४/८१

✓सृ – गतौ + अटन् प्रत्ययः (शकादिभ्योऽटन् – उ०को०, ४/८१)।

## सरट्

सरति गच्छतीति सरट् वायुर्मेघो वा।

– उ०को०, १/१३४

✓सृ – गतौ + अटिः प्रत्ययः (सर्त्तेरटिः – उ०को०, १/१३४)।

## सरणिः

सरन्ति गच्छन्त्यस्मिन् स सरणिः मार्गो वा । – उ०को०, २/१०२

✓सृ – गतौ + अनिः प्रत्ययः (अर्तिसृधृधम्यम्याश्यवितृभ्योऽनिः – उ०को०, २/१०२) ।

## सरण्डः

सरति गच्छतीति सरण्डः पक्षी वा ।

– उ०को०, १/१२९

✓सृ – गतौ + अण्डन् प्रत्ययः (अण्डन् कृसृभृवृञः – उ०को०, १/१२९) ।

## सरण्युः

सरतीति सरण्युः मेघो वायुर्वा । सरन्ति स सरयुः नदी वा । – उ०को०, ३/८१

✓सृ – गतौ + अन्युच् प्रत्ययः (सृयुवचिभ्योऽन्युजागूजक्नुचः – उ०को०, ३/८१) ।

## सरमा

यया सरान् विद्याधर्मबोधान् मिमीते तया।

– ऋ०, १/६२/३

या सरान् बोधान् मिमीते सा ।

– ऋ०, १/७२/८

या सरान् गतिमतः पदार्थान् मिनोति सा।

– ऋ०, ३/३१/६

या सरति सा सरला नीतिः।– ऋ०, ४/१६/८

या सरानाप्तान् मानयति सा ।

– ऋ०, ५/४५/८

समानं रमा रमणमस्याः सा ।

– यजु०, ३३/५९

१- सर + ✓माङ् – माने/✓डुमिञ् – प्रक्षेपणे + कः, ततः स्त्रियां टाप् प्रत्ययः अथवा ✓सृ – गतौ + अमच् प्रत्ययः (प्रथिचरिकलिकर्दिपृसृभ्योऽमच् – सर०क०, २/२/२४८) ततः स्त्रियां टाप् प्रत्ययः। २- सह > स + ✓रमु – क्रीडायां + कः प्रत्ययः ततः टाप् प्रत्ययः स्त्रियाम् ।

## सरयुः

यः सरति । – ऋ०, ५/५३/९

यः सरति यत्र जलानि वा सरन्ति स सरयुः नदी वा । पाठान्तरम्-सरयूश्च ।

– उ०को०, ३/२२

✓सृ – गतौ + अयुः प्रत्ययः (सरतेरयुः – उ०को०, ३/२२) ।

## सरलः

सरति सर्वत्र गच्छतीति सरलः अकुटिल उदारो वा । – उ०को०, १/१०६

✓सृ – गतौ + कल प्रत्ययः (वृषादिभ्यश्चित् – उ०को०, १/१०६) ।

## सरस्वत्यै

सरन्ति जानन्ति येन तत् सरो ज्ञानं तत्प्रशस्तं विद्यते यस्यां वाचि तस्यै ।– यजु०, २/२० (च०ए०व०) – ✓सृ – गतौ + असुन् प्रत्ययः > सरस् + मतुप् प्रत्ययः ततः स्त्रियां ङीप् प्रत्ययः ।

## सरित्

सरति गच्छतीति सरित् नदी वा ।

– उ०को०, १/९७

✓सृ – गतौ + इतिः प्रत्ययः (हसृरुहियुषिभ्यः इतिः – उ०को०, १/९७) ।

## सरिमा

सरतीति सरिमा वायुर्वा ।– उ०को०, ४/१४८

✓सृ – गतौ + इमनिच् प्रत्ययः (हृभृधृसृस्तृश्रभ्य इमनिच् – उ०को०, ४/१४८) ।

## सर्गप्रतक्तः

यः सर्गमुदकं प्रतनक्ति सङ्कोचयति सः ।

– ऋ०, १/६५/३

✓सृज – विसर्गे + घञ् प्रत्ययः > सर्ग + प्र + ✓तञ्चू – सङ्कोचने + क्तः प्रत्ययः ।

## सर्जूः

सर्जति उपार्जति कार्याणीति सर्जूःवैश्यो वा । – उ०को०, १/८०

✓षर्ज – अर्जने + ऊः प्रत्ययः (कृषिचमितनिनिसर्जिखर्जिभ्य ऊः स्त्रियाम् – उ०को०, १/८०) ।

## सर्पिः

यद्येन वा सर्पति तत् सर्पिः घृतं वा ।

– उ०को०, २/१०८

✓सृप्लृ – सर्पणे + गतौ वा + इसिः प्रत्ययः (अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः – उ०को०, २/१०८) ।

## सर्मः

स्त्रियते गम्यते स सर्मः गमनम् ।

– उ०को०, १/१४०

✓सृ – गतौ + मन् प्रत्ययः (अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०) ।

## सर्वः

सरतीति सर्वः संपूर्णवाची सर्वनामसंज्ञी विशेषणम् । – उ०को०, १/१५३

✓सृ – गतौ + वन् प्रत्ययः निपातनात् (सर्वनिघृष्वरिष्वलष्वशियावपद्वप्रह्वेष्वा अतन्त्रे – उ०को०, १/१५३) ।

## सर्वधातमं

यः सर्वं दधाति सोऽतिशयितस्तम् ।

– ऋ०, ५/८२/१

सर्व + ✓डुधाञ् – धारणपोषणयोः + क्विप् प्रत्ययः, ततः अतिशायने तमप् प्रत्ययः ।

## सर्वहुतः

सर्वैर्हूयत आदीयते तस्मात् ।

– यजु०, ३१/६

सर्वे जुह्वति सर्वं समर्पयन्ति वा यस्मिन् तस्मात् । – यजु०, ३१/७

सर्व + ✓हु – दानादानयोः + क्विप् प्रत्ययः ।

## सर्षपः

सरति गच्छतीति स सर्षपः कटुस्नेहवान् वा । – उ०को०, ३/१४१

✓सृ – गतौ + अपः प्रत्ययः षुगागमश्च (सर्त्तेरपः षुक् च – उ०को०, ३/१४१) ।

## सलिलं

सलति गच्छतीति सलिलं जलं वा ।

– उ०को०, १/५४

✓षल – गतौ + इलच् प्रत्ययः (सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् – उ०को०, १/५४) ।

## सवनः

सुवन्त्यैश्वर्यं प्राप्नुवन्ति येन तत् क्रियाकाण्डम् । – ऋ०, १/१६/५

येन सूयते तत् । – ऋ०, ६/६०/९

सवति प्रसूयतेऽनेन तत् । – यजु०, ८/३

सवत्युत्पादयति सुनोति निस्सारयति रसान् वा स सवनः चन्द्रमा वा ।

– उ०को०, २/७४

✓षु – प्रसवैश्वर्ययोः अभिषवे च + युच् प्रत्ययः (सुयुरुवृञो युच् – उ०को०, २/७४) ।

## सविता

रसानां प्रसविता । – ऋ०, १/३५/९

सवति सकलैश्वर्यं जनयति तस्य ।

– यजु०, १/२१

सर्वस्य जगतः प्रसवितुः । – यजु०, ३/३५

**यश्चराचरं जगत् सुनोति सूते वोत्पादयति स सविता परमेश्वरः ।**

– *स० प्र० ( प्रथमसमुल्लासः )*

✓षू – प्रेरणे, ✓षूङ् – प्राणिप्रसवे, ✓षुञ् – अभिषवे, ✓षु – प्रसवैश्वर्ययोः + तृच् प्रत्ययः, धातोरिडागमश्च ( आर्द्धधातुकस्येड्वलादेः – अष्टा०, ७/२/३५ ) ।

## सवीमनि

**यः सूयते संसारस्तस्मिन् ।** – *यजु०, ४/२५*

( स०ए०व० ) – ✓षु – प्रसवैश्वर्ययोः + इमनिन् प्रत्ययः औणादिकः ।

## सवृत्

**यः समानेन धर्मेण सह वर्त्तते तस्य बोधकः।** – *यजु०, १५/९*

सह > स + ✓वृतु – वर्त्तने + क्विप् प्रत्ययः ।

## सवृधे

**यः समानैः सह वर्धते तस्मै।** – *यजु०, १६/३०*

( च०ए०व० ) – सह > स + ✓वृधु – वृद्धौ + क्विप् प्रत्ययः ।

## सव्यं

**समनोत्यभिषवतीति सव्यम् वामभागो वा।**

– *उ०को०, ४/११०*

✓षु – अभिषवे + यः प्रत्ययः ( सुनोतेश्च – उ०को०, ४/११० ) ।

## सव्येष्ठा

**सव्ये वामभागे तिष्ठतीति सव्येष्ठा सारथिर्वा ।** – *उ०को०, २/१०१*

सव्य <( सव्ये – स०ए०व० ) + ✓ष्ठा – गतिनिवृत्तौ + ऋ प्रत्ययः, डित्वात् ऋप्रत्ययस्य टिलोपः ( सव्येस्थश्छन्दसि – उ०को०, २/१०१ ) ।

## सस्रुतः

**याः समानं सत्यं मार्गं स्रुवन्ति गच्छन्ति ताः ।** – *ऋ०, १/१४१/१*

( प्र०ब०व० ) – स + ✓स्रु – गतौ + क्विप् प्रत्ययः।

## सस्निः

**शेते यस्मिन् सः ।** – *ऋ०, २/१८/१*

✓षस् – स्वप्ने + निः प्रत्ययः ( वीज्याज्वरिभ्यो निः – उ०को०, ४/४८ ) ।

## सस्यं

**शस्यते यत्तत् सस्यं क्षेत्रपक्वमन्नं गुणो वा ।** – *उ०को०, ४/१०९*

✓शसु – हिंसायां + यः प्रत्ययः ( माछाशसिभ्यो यः – उ०को०, ४/१०९ ) ।

## सहः

**सहते यत्रेति सहः बलं मार्गशीर्षो वा ।**

– *उ०को०, ४/१८९*

✓षह – मर्षणे + असुन् प्रत्ययः ( सर्वधातुभ्योसुन् – उ०को०, ४/१८९ ) ।

## सहसानः

**यः सर्वं सहते तम् ।** – *ऋ०, ५/२५/९*

**सहतेऽसौ सहसानः मयूरो यज्ञो वा ।**

– *उ०को०, २/८६*

✓षह – मर्षणे + असानच् प्रत्ययः ( छन्दस्यसानच् शुजृभ्याम् – उ०को०, २/८६ ) ।

## सहस्रजित्

**यः सहस्राणि शत्रून् जयति सः ।**

– *ऋ०, १/१८८/१*

सहस्र ( बहुनाम ) + ✓जि – जये + क्विप् प्रत्ययः, धातोः तुगागमश्च ( ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९ ) ।

## सहदानुः

**यः सहैव ददाति तम् । – यजु०, १८/६९**

सह + ✓डुदाञ् – दाने + नुः प्रत्ययः ( दाभाभ्यां नुः – उ०को०, ३/३२ ) ।

## सहस्रधारं

**सहस्रं बहुविधं ब्रह्माण्डं धरतीति तं यज्ञम्। – यजु०, १/३**

**सहस्रमसंख्यानर्थान् धरति तां सर्वज्ञान-प्रदाम् । – यजु०, १७/७४**

सहस्र + ✓धृञ् – धारणे + अण् प्रत्ययः ।

## सहस्रभरं

**यः सहस्रमसङ्ख्यं बिभर्त्ति तम् । – ऋ०, ६/२०/१**

**सहस्रमसंख्यं शुभगुणा समूहं बिभर्त्ति सः। – यजु०, ११/३६**

सहस्र + ✓डुभृञ् – धारणपोषणयोः + अच् प्रत्ययः।

## सहस्रसाः

**सहस्रमसंख्यातं सुखं सनुते ददाति येन तत् । – ऋ०, १/९/८**

**सहस्राणि बहूनि धनानि सुखानि वा सनोति यया साऽतिशयिता ताम् । – ऋ०, १/१०/१०**

**सहस्राण्यसंख्यातानि कर्माणि सनति संभजति तम् । – ऋ०, १/११७/९**

**यः सहस्राणि पदार्थान् सनोति विभजति सः । – ऋ०, १/१८८/३**

**सहस्राणि कार्याणि सनति संभजति यस्तम्। – ऋ०, १/११८/९**

**यः सहस्रं सङ्ख्यं सनति ददाति सः । – ऋ०, ३/३/६**

**यः सहस्राणि सनति विभजति सः । – ऋ०, ४/३८/१०**

**यः सहस्रानसंख्यातान् पदार्थान् सनति विभजति तम् । – ऋ०, ५/३४/९**

**या सहस्राण्यसंख्यातानि कार्याणि सनोति ताम् । – यजु०, ३/१६**

**ये सहस्रं विद्याविषयान् सनन्ति ते । – यजु०, ९/१७**

सहस्र + ✓षण – सम्भक्तौ अथवा ✓षणु – दाने + विट् प्रत्ययः ( जनसनखनक्रमगमो विट् – अष्टा०, ३/२/६७ ) धातोरनुनासिकस्याङ्गस्यात्वं ( विड्वनोरनु-नासिकस्यात् – अष्टा०, ६/४/४१ ) ।

## सहस्कृत

**यः सहसा करोति तत्सम्बुद्धौ । – ऋ०, ६/१६/३७**

**यः सहः सहनं करोति कारयति वा तम्। – यजु०, ३/१८**

सहस् + ✓डुकृञ् – करणे + क्तः प्रत्ययः । एतयोः पदयोः समासश्च ।

## सहारः

**सहतीति सहारः आम्रभेदो वा । – उ०को०, ३/१३९**

✓षह – मर्षणे + आरन् प्रत्ययः ( तुषारादयश्च – उ०को०, ३/१३९ ) ।

## सहावा

**सहो बहुसहनं विद्यते यस्मिन् सः । – ऋ०, १/१७५/२**

**यः सहते सः । – ऋ०, ६/१४/५**

**यः सहैव वनति संभजति । – ऋ०, ७/४५/३**

सह + ✓वन – सम्भक्तौ + विट् प्रत्ययः ( जनसनख-

नक्रमगमोः विट् – अष्टा०, ३/२/६९), पूर्वपदस्य दीर्घः (अन्येषामपि दृश्यते – अष्टा०, ६/३/१३६) धातोरनुनासिकस्याङ्गस्यात्वञ्च (विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१)।

## सहुरिः

सहते भारमिति सहुरिः सूर्य्यो भूमिर्वा ।

– उ०को०, २/७३

✓षह – मर्षणे + उरिन् प्रत्ययः (जसिसहोरुरिन् – उ०को०, २/७३)।

## सहोदां

यः सहो बलं ददाति तम् ।– यजु०, ७/३६

(द्वि०ए०व०) – सहः (बलनाम) + ✓डुदाञ् – दाने + क्विप् प्रत्ययः ।

## सहोभरिः

यः सहो बलं बिभर्त्ति । – ऋ०, ५/४४/३

सहस् + ✓डुभृञ – भरणे + इन् प्रत्ययः (फलेग्रहिरात्मम्भरिश्च – अष्टा०, ३/२/२६)।

## सहोरः

सोढुंशीलः सहोरः साधुर्वा।– उ०को०, १/६५

✓षह – मर्षणे + ओरन् प्रत्ययः (किशोरदयश्च – उ०को०, १/६५)।

## सहोवृधं

सहोबलं वर्धयतीति सहोवृधम् ।

– ऋ०, १/३६/२

यः सहसा बलेन वर्धते तं, बलस्य वर्धकं वा । – ऋ०, ३/१०/९

(द्वि०ए०व०) – सहस् + ✓वृधु –वृद्धौ + क्विप् प्रत्ययः ।

## साकं

श्यतीति शाकं स्यतीति साकं वा ।

– उ०को०, ३/४३

✓षो – अन्तःकर्मणि + कन् प्रत्ययः बाहुलकात् (इण्भीकापाशल्यतिमर्चिभ्यः कन् – उ०को०, ३/४३)।

## सादनं

सीदन्ति यस्मिँस्तत् ।

– ऋ०, १/१३६/२, २/२३/१

✓षद्लृ – विशरणगत्यवसादनेषु + ल्युट् प्रत्ययः, धातोरुपधायाः दीर्घश्च ।

## सादिः

सीदतीति सादिः सारथिर्वा ।

– उ०को०, ४/१२५

✓षद्लृ – विशरणगत्यवसादनेषु + इञ् प्रत्ययः धातोर्दीर्घश्च (वसिवपियजिराजिव्रजिसदिहनिवाव- शिवादिवारिभ्य इञ् – उ०को०, ४/१२५)।

## साधनः

साध्नोति येन तत् । – ऋ०, १/४४/११

यः साध्नोति सः । – ऋ०, ३/२७/८

✓साध – संसिद्धौ + ल्युट् प्रत्ययः ।

## साधन्तः

साध्नोति कार्याणीति साधन्तः भिक्षुको वा । – उ०को०, ३/१२८

✓साध – संसिद्धौ + झच् प्रत्ययः (तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च – उ०को०, ३/१२८) प्रत्ययादि झकारस्य अन्तादेशः (झोऽन्तः – अष्टा०, ७/१/३)।

## साधुः

साध्नोति धर्म्यं कर्मेति साधुः सज्जनः ।

– उ०को०, १/१

✓साध – संसिद्धौ + उण प्रत्ययः (कृवापाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१)।

## साध्वसं

स्यति कर्मसमापयतीति साध्वसं प्रातिभं ज्ञानं वा । – उ०को०, ३/११७

✓षो – अन्तःकर्मणि + असच् प्रत्ययः बाहुलकात्, धातोर्धुगागमः (अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् – उ०को०, ३/११७) ।

## सानसिः

सनोति ददाति सन्यते वा स सानसिः हिरण्यं वा । – उ०को०, ४/१०७

✓षणु – दाने + असि प्रत्ययः उपधावृद्धिश्च (सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः – उ०को०, ४/१०७) ।

## सानुः

सनन्ति संभजन्ति येन कर्मणा तत् ।

– ऋ०, १/५४/४

सनति सम्भजति सनोति ददाति वा सा सानुः। – उ०को०, १/३

✓षणु – सम्भक्तौ + दाने च + ञुण प्रत्ययः (दृसनिजनिचरिचटिरहिभ्यो ञुण् – उ०को०, १/३ ))।

## सान्तपनः

सम्यक् शत्रून् तापयति यस्तस्यायम् ।

– यजु०, १७/८५

सम् + ✓तप – सन्तापे + ल्युः प्रत्ययः > सन्तपनः + अण् प्रत्ययः भावार्थे ।

## साम

स्यन्ति खण्डयन्ति दुःखानि येन तत् ।

– ऋ०, १/६२/२

स्यति कर्माणि समापयतीति सामवेदभेदो वा । – उ०को०, ४/१५३

✓षो – अन्तः कर्मणि + मनिन् प्रत्ययः (सातिभ्यां मनिन्मनिणौ – उ०को०, ४/१५३) ।

## सामगा

यः सामानि गायति । – ऋ०, २/४३/१

साम + ✓गै – शब्दे + क्विप् प्रत्ययः, एतयोः पदयोः समासः ।

## साम्राज्यं

यद्राष्ट्रं सर्वत्र भूगोले सम्यक् राजते प्रकाशते तस्य भावाय । – ऋ०, १/२५/१०

सम्यग्राजन्ते प्रकाशन्ते ते सम्राजो राजानस्तेषां भावः कर्म वा तत् ।

– यजु०, ४/२४

यः समग्रायाः भूमेर्मध्ये सम्यग्राजते स सम्राट्, तस्य भावेन सार्वभौमत्वेन ।

– यजु०, १८/३६

सम् + ✓राजृ – दीप्तौ + क्विप् प्रत्ययः > सम्राज् + यक् प्रत्ययः, भावे कर्मणि वा (पत्यन्तपुरोहितादिभ्यो यक् – अष्टा०, ५/१/१२७) ।

## सारघं

यदारघ्यते स्वाद्यते तदारघं समानं च तदारघं च तत् । – यजु०, ११/११

(द्वि०ए०व०) – स + आङ् + ✓रघ – आस्वादने + क प्रत्ययः > सरघं + ✓अण् प्रत्ययः (संज्ञायाम् – अष्टा०, ४/३/११७) ।

## सारङ्गः

सरति सर्वत्र गच्छतीति सारङ्ग पक्षी हरिणो भृङ्गो वा । – उ०को०, १/१२२

✓सृ – गतौ + अङ्गच् प्रत्ययः धातोः वृद्धिश्च (सृवृञोर्वृद्धिश्च – उ०को०, १/१२२) ।

## सारणिः

सरन्ति गच्छन्त्यस्मिन् स सारणिः मार्गो वा । – उ०को०, २/१०२

✓सृ – गतौ + अनिः प्रत्ययः बाहुलकात् णित्वात् धातोर्दीर्घश्च (अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः – उ०को०, २/१०२)।

## सारथिः

सारयतीति नियमेन पालयतीति सारथिः नियन्ता वा। – उ०को०, ४/८९

✓सृ – गतौ + घथिन् प्रत्ययः, णित्वात् धातोर्वृद्धिश्च (सर्तेर्णिच्च – उ०को०, ४/८९)।

## सार्थः

सरति गच्छति स सार्थः समूहो वा।
– उ०को०, २/५

✓सृ – गतौ + थन् प्रत्ययः णित्वात् धातोर्वृद्धिश्च (सर्तेणित् – उ०को०, २/५)।

## सास्ना

सस्ति स्वपिति यया सा सास्ना गवादीनां कण्ठाधोभागश्चर्म वा। – उ०को०, ३/१५

✓षस – स्वप्ने + न प्रत्ययः, धातोरुपधायाः दीर्घः ततः स्त्रियां टाप् च (रास्नासास्नास्थूणावीणाः – उ०को०, ३/१५)।

## सिंहः

हिनस्ति दोषान् यया सा यद्वा सिञ्चत्युच्चारयति यया वाचा सा। – यजु०, ५/१०

यो हिनस्ति पश्वादीन् सः।
– यजु०, १४/९

यो हस्त्यादीनपि हिनस्ति तम्।
– यजु०, १९/१०

यो हिनस्ति तस्मै। – यजु०, २१/४०

सिञ्चतीति सिंहः प्रसिद्धो वा।
– उ०को०, ५/६२

१- ✓षिच – क्षरणे + ह प्रत्ययः, नुमागमश्च, धातोःचस्य ककारः ततः ककारस्य लोपः (सिचे संज्ञायां हनुमौ कश्च – उ०को०, ५/६२)।

२- ✓हिसि – हिंसायां + अच् प्रत्ययः नुमागमश्च, पृषोदरादित्वादाद्यन्तविपर्ययः।

## सिक्थं

सिञ्चति प्रसादयति तत् सिक्थं मधूच्छिष्टं मोम इति प्रसिद्धं। – उ०को०, २/७

✓षिच – क्षरणे + थक् प्रत्ययः धातोः चकारस्य ककारः (पातृतुदिवचिरिचिसिचिभ्यस्थक् – उ०को०, २/७)।

## सितं

सिनोति बध्नातीति सितं शुक्लं वा।
– उ०को०, ३/८९

✓षिञ् – बन्धने + क्तः प्रत्ययः (अञ्जिघृसिभ्यः क्तः – उ०को०, ३/८९)।

## सिध्रः

सेधति गच्छति सिध्यति वा स सिध्रः साधुर्वृक्षजातिर्वा। – उ०को०, २/१३

✓षिधु – संराधौ + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्–उ०को०, २/१३)।

## सिध्मः

सेधति प्राप्नोति विजयं येन गुणेन सः।
– ऋ०, १/३३/१३

✓षिधु – गत्यर्थे + मक् प्रत्ययः (इषियुधीन्धिदसिश्याधूसूभ्यो मक् – उ०को०, १/१४५)।

## सिनः

सिनोति बध्नातीति सिनः काणो वा।
– उ०को०, ३/२

✓षिञ् – बन्धने + नक् प्रत्ययः (इणिसञ्जिदीङुष्यविभ्यो नक् – उ०को०, ३/२)।

## सिनीवाली

या सिनीः प्रेमबद्धाः कन्या वलयति सा।
– यजु०, ११/५५

✓षिञ् – बन्धने + नक् प्रत्ययः (इण्‌सिञ्जिदीङुष्यविभ्यो नक् – उ०को०, ३/२) ततः स्त्रियां ङीप् प्रत्ययः > सिनी + ✓वृञ् – वरणे + घञ् प्रत्ययः > वार, रेफस्य च लत्वम् – वाल, ततः स्त्रियां ङीप् प्रत्ययः > वाली (सिनी-वाली, एतयोः पदयोः समासः) ।

## सिन्दूरं

**स्यन्दते प्रस्रवति तत् सिन्दूरं रक्तचूर्णं वृक्षभेदो वा । – उ०को०, १/६८**

✓स्यन्दू – प्रस्रवणे + ऊरन् प्रत्ययः, धातोर्यकारस्य सम्प्रसारणं (स्यन्देः सम्प्रसारणञ्च – उ०को०, १/६८)।

## सिन्धुः

**स्यन्दते प्रस्रवति सुखानि समुद्र इव गम्भीरस्तम् । – ऋ०, १/१/६**

**स्यन्दते प्रस्रवन्त्युदकान्यस्मिन्निति सिन्धुः। – उ०को०, १/११**

✓स्यन्दू – प्रस्रवणे + उः प्रत्ययः, धातोर्यकारस्य सम्प्रसारणं दकारस्य धकारश्च (स्यन्देः सम्प्रसारणं धश्च – उ०को०, १/११) ।

## सिमः

**सिनोति बध्नातीतिं सिमः सर्वनामसंज्ञः सर्वपर्य्यायः । – उ०को०, १/१४४**

✓षिञ् – बन्धने + मन् प्रत्ययः (अविसिविसिशुषिभ्यः कित् – उ०को०, १/१४४) ।

## सिरा

**सिनोति बध्नाति मांसरुधिरादिकमिति नाडी वा । – उ०को०, २/१३**

✓षिञ् – बन्धने + रक् प्रत्ययः (स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३) ।

## सीता

**सायन्ति क्षेत्रस्थलोष्ठान् क्षयन्ति यया सा काष्ठपट्टिका । – यजु०, १२/७०**

**स्यति कर्मसमाप्तिं करोतीति सीता क्षेत्रे हलेन कृता रेखा स्त्रीविशेषो वा । – उ०को०, ३/९०**

✓षो – अन्तः कर्मणि + क्तः प्रत्ययः, बाहुलकात्, (दुतनिभ्यां दीर्घश्च – उ०को०, ३/९०) धातोः इडागमः ततः स्त्रियां टाप् प्रत्ययः, अथवा ✓षिञ् – बन्धने + क्तः प्रत्ययः धातोर्दीर्घश्च (दुतनिश्यां दीर्घश्च – उ०को०, ३/९०) ततः स्त्रियां टाप् प्रत्ययः ।

## सीमा

**सिनोति बध्नातीति सीमा अवधिर्वा । – उ०को०, ४/१५१**

✓षिञ् – बन्धने + मनिन् प्रत्ययः, धातोर्दीर्घत्वञ्च (नामन् सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन् – उ०को०, ४/१५१) ।

## सीमिकः

**स्यमति शब्दयतीति सीमिकः वृक्षभेदो वा । – उ०को०, २/४३**

✓स्यमु – शब्दे + किकन् प्रत्ययः, सम्प्रसारणं (स्यमेः सम्प्रसारणञ्च – उ०को०, २/४३) ।

## सीरः

**या सरन्ति ता नद्यः । – ऋ०, ४/१९/८**

**सिनोति बध्नातीति सीरः हलं वा । – उ०को०, २/२५**

✓षिञ् – बन्धने + क्रन् प्रत्ययः, धातोर्दीर्घश्च (शुसीचिमीनां दीर्घश्च – उ०को०, २/२५) ।

## सुकृत्

**योऽतिशयेन शोभनानि करोतीतिः सः । – ऋ०, १/३१/४**

यः शोभनानि कर्माणि करोति तस्मै । – ऋ०, १/३१/४

यः शोभनानि कर्म्माणि करोति तस्मै । – ऋ०, १/४७/८

शोभनानि कृतानि येन सः । – ऋ०, १/४८/११

यः शोभनं धर्म्यं कर्म करोति सः । – ऋ०, ३/५४/१२

सः सुष्ठु सत्यं कर्म करोति सः । – ऋ०, ४/२५/५

ये सुष्ठु धर्ममेव कुर्वन्ति तेषाम् । – ऋ०, ७/३५/४

शोभनं कृतं क्रियते येन सः।– यजु०, ७/३९

सुष्ठु कर्माणि क्रियन्ते । – यजु०, ११/६७

सुष्ठु कर्माणि क्रियन्ते यस्मिंस्तम् । – यजु०, ११/६७

यः सुष्ठु करोति सः । – यजु०, २७/१३

सु + ✓डुकृञ् – करणे + क्विप् प्रत्ययः (सुकर्मपापमन्त्रपुण्येषु कृञः – अष्टा०, ३/२/८९) ततः तुगागमश्च ।

## सुखादये

यस्सुष्ठु खादति तस्मै । – ऋ०, ५/८७/१

(च०ए०व०) – सु + ✓खादृ – भक्षणे + इन् प्रत्ययः (सर्वधातुभ्य इन् – उ०को०, ४/११८) ।

## सुगः

सुखेन गच्छन्ति यस्मिन् सः । – ऋ०, १/४१/४

सुखेन गच्छन्त्यस्मिन्मार्गे तम् । – ऋ०, १/९४/११

सुष्ठु गच्छन्ति प्राप्नुवन्ति यस्मिँस्तत् । – ऋ०, १/१०२/४

सुष्ठु गच्छन्ति यस्मिन् । – ऋ०, १/१०६/५

सुष्ठु गच्छन्ति ताः । – ऋ०, १/१६५/८

सुष्ठु गच्छन्ति यस्मिन् मार्गे तम् । – ऋ०, २/२३/७

सुखेन गच्छन्ति यस्मिन् सः । – ऋ०, ३/५४/२१

सुष्ठु गच्छन्ति यस्मिन् । – ऋ०, ५/५४/६

सुष्ठु गच्छन्ति यस्मिँस्तत् । – ऋ०, ६/४४/१८

सुष्ठु गच्छति यस्मिँस्तम् । – ऋ०, ६/५१/१३

सुष्ठु गच्छेयुर्यस्मिँस्त् । – ऋ०, ६/५१/१५

सुष्ठु गच्छन्ति येषु तानि । – ऋ०, ६/६४/१

सुष्ठु गच्छन्ति यस्मिँस्तत् । – यजु०, १८/११

सुष्ठु गच्छन्ति येषु तैः । – यजु०, २५/४४

सु + ✓गम्लृ – गतौ + डः (सुदुरोरधिकरणे – अष्टा०वा०, ३/२/४८) ।

## सुगृहपतिः

शोभनानां गृहाणां पतिः पालयिता, पालन साधनो वा । – यजु०, २/२७

शोभनश्चासौ गृहस्य पालकश्च सः । – यजु०, २/२७

सुगृह + पतिः (एतयोः समासः) ।

## सुगोपातमः

शोभनधर्मेण गां पृथिवीं वाचं वा पाति सोऽतिशयितः । – यजु०, ८/३१

सु + गो + √पा – रक्षणे + क्विप् प्रत्ययः, ततः अतिशायने तमप् प्रत्ययः ।

## सुजिह्व

**सुष्ठु जोहूयन्ते धार्य्यन्ते यया जिह्वया शक्त्या तत्सहितः सुष्ठु हूयन्ते जिह्वायां ज्वालायां यस्य सोऽग्निः ।**

– ऋ०, १/१४/७

सु + जिह्व (व्याख्यातः) एतयोः पदयोः समासः ।

## सुतपाः

**सुतं पाति रक्षति सः ।** – ऋ०, १/१५५/२

**यः सुतान् पदार्थान् पाति सः ।**

– ऋ०, ६/२३/६

√षुञ् – प्रसवैश्वर्ययोः + क्तः प्रत्ययः – सुत + √पा – रक्षणे + क्विप् प्रत्ययः ।

## सुतपावन्

**यः सुतान् निष्पन्नान् पदार्थान् पुनाति तत्सम्बुद्धौ ।** – ऋ०, ६/४/९

सुत + √पूञ् – पवने + वनिप् प्रत्ययः ।

## सुतम्भरः

**य उत्पन्नं जगद्बिभर्ति ।** – ऋ०, ५/४४/१३

सुत + √डुभृञ् – धारणपोषणयोः + खच् प्रत्ययः (संज्ञायां भृतॄवृजिधारिसहितपिदमः – अष्टा०, ३/२/४६) ।

## सुतराः

**सुष्ठु तरन्ति यासु ताः ।** – ऋ०, ६/६०/११

(प्र०ब०व०) – सु + √तॄ – प्लवनसंतरणयोः + अप् प्रत्ययः (ऋदोरप् – अष्टा०, ३/३/५७) ।

## सुत्रात्रा

**यः सुष्ठु त्रायते तेन ।** – ऋ०, ५/७०/३

(तृ०ए०व०) – सु + √त्रैङ् – पालने + तृच् प्रत्ययः ।

## सुत्रामा

**यः सर्वान् दुःखेभ्यः सुष्ठु त्रायते तस्मै ।**

– यजु०, १९/१

**यः सुष्ठु त्रायते रोगाच्छरीरं सः ।**

– यजु०, १९/८५

**सुष्ठुत्रायत इति सुत्रामा ।** – उ०को०, ४/१४५

सु + √त्रैङ् – पालने + मनिन् प्रत्ययः (सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५) धातोरात्वञ्च ।

## सुद्रवं

**यः सुष्ठु द्रवति गच्छति धावति तम् ।**

– ऋ०, ७/३२/२०

(द्वि०ए०व०) – सु + √द्रु – गतौ + अच् प्रत्ययः।

## सुधर्मा

**सुधरतीति सुधर्मा ।** – उ०को०, ४/१५२

सु + √धृञ् – धारणे + मनिः प्रत्ययः (मिथुने मनिः – उ०को०, ४/१५२) ।

## सुधृष्टतमं

**सुष्ठु सकलं जगद्धारयति सोऽतिशयितस्तम् ।** – ऋ०, १/१८/९

सु + √धृष – प्रसहने + क्तः प्रत्ययः > सुधृष्ट, ततः अतिशायने तमप् प्रत्ययः ।

## सुनीथः

**सुष्ठुनीथाः पदार्थप्राप्तयो यस्मात् सः ।**

– ऋ०, १/३५/७

**शोभनं नीथो नयनं प्रापणं यस्य सः ।**

– ऋ०, १/३५/१०

**यः सुष्ठु नयति सः ।** – ऋ०, २/८/२

**यः सुष्ठु नयति सः ।** – यजु०, ३४/२६

सु + √णीञ् – प्रापणे + क्थन् प्रत्ययः (हनिकुषिनीरमिकाशिभ्यः क्थन् – उ०को०, २/२) ।

## सुपर्णः

**शोभनानि पर्णानि पालनानि पूर्णानि कर्माणि वा यस्य सः सुपर्णः।** – ऋ०, १/१६४/४६

**शोभनानि पर्णानि पालनानि पूर्णानि यस्य तं रथादिकम्।** – यजु०, २९/४८

सु+ ✓पॄ - पालनपूरणयोः + नक् प्रत्ययः ।

## सुपर्णचित्

**यः शोभनानि पर्णानि पालनानि चिनोति सः ।** – यजु०, २७/४५

सुपर्ण + ✓चिञ् – चयने + क्विप् प्रत्ययः, तुगागमश्च।

## सुपूर्णा

**या सुष्ठु पूर्यते सा ।** – यजु०, ३/४९

सु + ✓पॄ – पालनपूरणयोः + नक् प्रत्ययः धातोः ऋकारस्योत्वं ( उदोष्ठ्य पूर्वस्य - अष्टा० ७/१/१०२ ) ततः रपरत्वं ( उरणरपरः - अष्टा०, १/१/५१ ) ततः स्त्रियां टाप् प्रत्ययः ।

## सुप्रजावनिः

**यया शोभनाः प्रजा वनति सम्भजति सा।** – यजु०, ५/१२

सु + प्रजा ( व्याख्यातः ) + ✓वन – सम्भक्तौ + इनिः प्रत्ययः ( छन्दसि वनसनरक्षिमथाम् – अष्टा०, ३/२/२७ ) ।

## सुप्रतीकः

**शोभनानि प्रतीकानि प्रतीतकराणि द्वारादीनि यस्मिंस्सः ।** – ऋ०, ६/२८/६

**सुष्ठु प्रत्येति येन तम् ।** – ऋ०, ७/१०/३

**सुष्ठु प्रतियन्ति सुखानि यस्मात्तम् ।** – यजु०, ११/२८

**सुष्ठु प्रतीकं प्रतीतिकरं ज्ञानं यस्य ।** – यजु०, १७/५३

**सुष्ठुप्रैतीति सुप्रतीकः अग्निर्वा ।** – उ०को०, ४/२५

सु + प्रतीकः ( व्याख्यातः ) एतयोः पदयोः समासः अथवा सु + प्र + इण् – गतौ + कीकन् प्रत्ययः तुडागमश्च ( अलीकादयश्च – उ०को०, ४/२५ ) अथवा सु + प्रति + ✓इण् – गतौ + कक् प्रत्ययः ( सृवृभूशुषिमुषिभ्यः कक् – उ०को०, ३/४१ ) ।

## सुप्रतूर्त्ति

**सष्ठु प्रकृष्टा तूर्तिस्त्वरिता प्राप्तिर्यया ताम।** – ऋ०, १/४०/४

**सुष्ठु प्रकृष्टा तूर्त्तिः त्वरिता शीघ्रता यस्मिँस्तत् ।** – ऋ०, ३/९/१

सु + प्र + ✓ञित्वरा – सम्भ्रमे + क्तिन् प्रत्ययः स्त्रियां धातोर्वस्य स्थाने ऊठादेशः ( ज्वरत्वरस्रिव्यविम-वामुपधायाश्च – अष्टा०, ६/४/२० ) ।

## सुप्रयाः

**यस्सर्वान्सुष्ठु प्रीणाति सः ।** – ऋ०, ७/३९/२

सु + ✓प्रीञ् – तर्पणे कान्तौ च + असुन् प्रत्ययः ।

## सुप्रयावभिः

**ये सुष्ठु प्रयान्ति तैः ।** – ऋ०, ५/४४/१२

( तृ०ब०व० ) – सु + प्र + ✓या – प्रापणे + वनिप् प्रत्ययः ।

## सुप्राङ्

**यः सुष्ठु प्रच्छति सः ।** – ऋ०, १/१६२/२

**यः सुष्ठु पृच्छति सः ।** – यजु०, २५/२५

सु + पृच्छ – ज्ञीप्सायां + क्विप् प्रत्ययः, धातोः दीर्घोऽसम्प्रसारणञ्च ( क्विप् वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणञ्च - उ०को० २/५७ )।

## सुप्वा

**सुष्ठुतया पुनाति पवित्रता हेतुर्वा तेन ।** – यजु०, १/३

(तृ०ए०व०) – सु + ✓पूञ – पवने + क्विप् प्रत्ययः ।

## सुभरः

ये सुष्ठु भरन्ति पुष्णन्ति वा ।– ऋ०, १/११२/२

सुष्ठु बिभ्रति सुखानि यया ताम् ।

– ऋ०, १/११२/२०

यः शोभनं भरति सः । – ऋ०, २/३/९

सु + ✓डुभृञ् – धारणपोषणयोः + अच् प्रत्ययः ।

## सुभवः

भवतीति भवः शोभनश्चासौ भवश्च सुभवस्तत्सम्बुद्धौ । – यजु०, ७/३

सु + ✓भू – सत्तायां + अच् प्रत्ययः ।

## सुभूः

ये जनाः सुष्ठुः सुखं भावयन्ति ते ।

– ऋ०, १/५२/१

याः सुष्ठु भवन्ति ताः । – ऋ०, १/५२/४

सुष्ठु भवन्ति वृष्टयो येभ्यस्ते ।

– ऋ०, ४/१७/२

ये शोभनेषु कर्म्मसु भवन्ति ।

– ऋ०, ५/४१/१३

ये शोभने धर्म्ये व्यवहारे भवन्ति ते ।

– ऋ०, ५/८७/३

ये सुष्ठु भवन्ति । – ऋ०, ५/५९/३

ये सुष्ठु भवन्ति । – ऋ०, ६/५२/१

यः सुष्ठु भवति तस्मै । – ऋ०, ६/६६/३

यः सुष्ठु भवतीति । – यजु०, २३/६३

सु + ✓भू – सत्तायां + क्विप् प्रत्ययः ।

## सुमत्

सुष्ठु माद्यन्ति हृष्यन्ति यस्मिन् तत् ।

– ऋ०, १/१४२/७

यः सुष्ठु मन्यते जानाति ।

– ऋ०, १/१६२/७

१- सु + ✓मदी – हर्षे + क्विप् प्रत्ययः ।

२- सु+ ✓ मन-ज्ञाने + क्विप् प्रत्ययः ।

## सुमतीवृधः

यः सुमतिं वर्द्धयति तस्य । – यजु०, २२/१२

(ष०ए०व०) – सुमति + ✓वृधु – वृद्धौ + क्विप् प्रत्ययः ।

## सुमित्रधः

यः शोभनानि मित्राणि दधाति सः ।

– यजु०, ४/२७

सुमित्र + ✓डुधाञ् – धारणपोषणयोः + कः प्रत्ययः।

## सुमृडीकः

यः शोभनेन मृडयति सुखयति सः ।

– ऋ०, १/३५/१०

सुष्ठु मृडन्ति सुखयन्ति यया ताम् ।

– यजु०, ४/११

सु + ✓मृड – सुखने + कीकच् प्रत्ययः (मृडः कीकच् कङ्कणौ – उ०को०, ४/२४) ।

## सुमेरुः

मिनोति प्रक्षिपतीति सुमेरु पर्वतो वा ।

– उ०को०, ४/१०१

सु + ✓मिञ् – प्रक्षेपणे + रुः प्रत्ययः, धातोरेत्वञ्च (मीपीभ्यां रुः – उ०को०, ४/१०१) ।

## सुम्नहूः

यः सुम्नानि सुखान्याह्वयति सः ।

– यजु०, १७/६२

सुम्न (सुखनाम) + ✓ह्वेञ् – स्पर्द्धायां शब्दे च + क्विप् प्रत्ययः ।

## सुयजं

सुष्ठु यजन्ति यस्मात्तम् । – ऋ०, ५/८/३

ये सुष्ठु यजते ते । – ऋ०, ५/६२/४

सुष्ठु यजन्ति यस्मिन् तेन । – यजु०, ५/४

सु + ✓यज – देवपूजासङ्गति करणदानेषु + क्विप् प्रत्ययः ।

## सुयुक्

ये सुष्ठु युञ्जन्ति ते । – ऋ०, ३/५८/२

सुष्ठु युञ्जन्त्यश्रवान् यस्मिंस्तेन ।
– ऋ०, ४/१५/३

ये सुष्ठु युञ्जते तान् । – ऋ०, ५/३१/१०

ये सुष्ठु धर्मेण युञ्जते तान् ।
– ऋ०, ५/४४/४

ये सुष्ठु युञ्जते योजयन्ति वा ।
– ऋ०, ६/४४/१९

सु + ✓युजिर् – योगे + क्विप् प्रत्ययः ( सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१ ) ।

## सुरः

सुनोति सवति उत्पादयत्यैश्वर्यवान् वा भवतीति सुरः देवसंज्ञो विद्वान् । स्त्रियां सुरा मद्यं वा । – उ०को०, २/२४

✓षु – अभिषवे प्रसवैश्वर्ये च + क्रन् प्रत्ययः ( सुसूधाञ्गृधिभ्यः क्रन् – उ०को०, २/२४) ।

## सुरया

या सूयते सा सुरा तया । – यजु०, १९/५

( तृ०ए०व० ) – ✓षुञ् – अभिषवे + क्रन् प्रत्ययः ( सुसूधाञ्गृधिभ्यः क्रन् – उ०को०, २/२४) ततः टाप् प्रत्ययः स्त्रियाम् ।

## सुराधानी

सुरा सोमरसो धीयते यस्यां सा गर्गरी ।
– यजु०, १९/१६

सुरा + ✓डुधाञ् – धारणपोषणयोः + ल्युट् प्रत्ययः ( करणाधिकरणयोश्च – अष्टा०, ३/३/११७ ) ततः ङीप् प्रत्ययः ।

## सुरामं

सुष्ठु रमन्ते यस्मिन् तम् । – यजु०, १०/३३

सुष्ठु रमन्ते यस्मिन् तत् । – यजु०, २०/७७

सु + ✓रमु – क्रीडायां + घञ् प्रत्ययः ।

## सुरुचा

यया सुष्ठु रोचते तया । – ऋ०, ३/१६/६

( तृ०ए०व० ) – सु + ✓रुच – दीप्तावभिप्रीतौ + क्विप् प्रत्ययः ।

## सुरेणुः

रिणाति गच्छति हिनस्ति हन्यते वा सः रेणूः धूलिः। सुरेणुः सुवर्णरजः ।
– उ०को०, ३/३८

सु + ✓ऋ – गतौ + णुः प्रत्ययः धातोरेत्वञ्च ( अजिवृरीभ्यो निच्च – उ०को०, ३/३८ ) ।

## सुवनं

सूते, सूयते वा स सुवनः ईश्वरः सूर्यो वा । – उ०को०, २/८०

✓षुञ् – प्रसवैश्वर्ये + क्युन् प्रत्ययः ( भूसूधूभ्रस्जिभ्यश्छन्दसि – उ०को०, २/८० ) ।

## सुविदत्रं

सुष्ठु विद्यते तत् सुविदत्रं कुटुम्बं वा ।
– उ०को०, ३/१०८

सु + ✓विद् – सत्तायां + कत्रन् प्रत्ययः ( सुविदेः कत्रन् – उ०को०, ३/१०८ ) ।

## सुवृक्ति

सुष्ठु वृजते त्यजन्ति दोषान् यस्मात्तत् ।
– ऋ०, १/६१/४

सुष्ठु वृक्तयो वर्जिताः दोषा येभ्यस्तानि।
– ऋ०, १/६१/१६

सुष्ठु वृक्तिर्वर्जनं सुवृक्ति यथा तथा ।

– ऋ०, १/१८४/५

सुष्ठु व्रजन्ति यस्मिंस्तम् । – ऋ०, १/१८६/९

सुष्ठु व्रजन्ति यस्मिँस्तम् । – ऋ०, ५/४१/१०

सुष्ठु व्रजन्ति येन तम् । – ऋ०, ६/१०/१

सुष्ठु व्रजन्ति यस्मिन् मार्गे तम् ।

– ऋ०, ६/१०/६

सुष्ठु वर्जन्त्यन्यायं यया ताम् ।

– ऋ०, ७/३१/११

सु + ✓वृजी – वर्जने + क्तिन् प्रत्ययः ।

## सुवृता

यः सुष्ठु वर्त्तते तेन । – ऋ०, ३/५८/३

(तृ०ए०व०) – सु + ✓वृतु – वर्त्तने + क्विप् प्रत्ययः ।

## सुवृधः

यः सुष्ठु वर्द्धयति तेन । – ऋ०, २/२३/९

ये सुष्ठु वर्धन्ते ते । – ऋ०, ५/५९/५

सु + ✓वृधु – वर्धने + क्विप् प्रत्ययः ।

## सुशर्मा

सुष्ठु शृणातीति सुशर्मा राजविशेषो वा।

– उ०को०, ४/१५२

सु + ✓शृ – हिंसायां + मनिः प्रत्ययः (मिथुने मनिः – उ०को०, ४/१५२) ।

## सुश्रोतुः

सुष्ठु शृणोति यस्तस्य । – ऋ०, १/१२२/६

(ष०ए०व०) – सु +✓श्रु – श्रवणे + तृच् प्रत्ययः।

## सुषणा

यानि सुखानि सन्यन्ते तानि सुषणानि ।

– ऋ०, १/४२/६

(प्र०ब०व०) – सु + ✓षण – सम्भक्तौ + प्रत्ययः।

## सुषदः

सुष्ठु सीदन्ति यस्यां सा । – यजु०, १/२७

सुखेन सीदन्ति यस्यां तस्याम् ।

– यजु०, २/२०

या शोभने व्यवहारे सीदति सा ।

– यजु०, १०/२६

यः शोभनेषु व्यवहारेषु सीदति सः ।

– यजु०, ११/४४

सुष्ठु सीदन्ति यस्यां सा । – यजु०, ३७/१२

सु + ✓षद्लृ – विशरणगत्यवसादनेषु + अच् प्रत्ययः।

## सुषूतमं

सुष्ठु सूते तम् । – यजु०, ६/३०

सु + ✓षूङ् – प्राणिगर्भविमाचने + क्विप् प्रत्ययः ततः अतिशायने तमप् प्रत्ययः ।

## सुष्ठु

सुतिष्ठतीति सुष्ठु शोभनम् ।

– उ०को०, १/२५

सु + ✓ष्ठा – गतिनिवृत्तौ + कुः प्रत्ययः (अपदुःसुषुस्थः – उ०को०, १/२५) ।

## सुसन्दृशं

यः सुष्ठु पश्यति दर्शयति वा तम् ।

– यजु०, ३/५२

सु + सम् + ✓दृशिर् – प्रेक्षणे + क्विप् प्रत्ययः ।

## सुहूः

सुष्ठु हूयते यो या वा स सा ।

– यजु० १/३०

सु + ✓हु – दानादानयोः + क्विप् प्रत्ययः, धातोर्दीर्घश्च।

## सूः

सूयत उत्पादयति या सा माता ।

– ऋ०, १/३२/९

या सुवति प्रेरयति सा । – यजु०, १८/७

✓षूङ् – प्राणिप्रसवे अथवा ✓षू – प्रेरणे + क्विप् प्रत्ययः ।

## सूकरः

यः सम्यक् करोति सः । – ऋ०, ५/५/४

यः सुष्ठु करोति तस्य । – ऋ०, ७/५५/४

यः सुष्ठु शुद्धिं करोति स बलिष्ठो वराहः। – यजु०, २४/४०

सु + ✓डुकृञ – करणे + अच् प्रत्ययः तथा पूर्वस्य पदस्य च दीर्घः ।

## सूक्तं

सुष्ठ्वर्था उच्यन्ते येषु गायत्र्यादिछन्दोयुक्तेषु वेदस्थेषु तानि । – ऋ०, १/९३/१

यः सुष्ठूच्यते तस्य । – ऋ०, २/२३/१९

सुष्ठूच्यन्ते यानि तैः । – ऋ०, ५/४५/४

सु + ✓वच – परिभाषणे + क्तः प्रत्ययः, धातोः सम्प्रसारणञ्च (वचिस्वपियजादीनां किति – अष्टा०, ६/१/१५) ।

## सूक्ष्मं

सूचयति पैशुन्यं करोतीति सूक्ष्मं अत्यल्पं वा । – उ०को०, ४/१७७

✓सूच – पैशुन्ये + स्मन् प्रत्ययः (सूचेः स्मन् – उ०को०, ४/१७७) धातोः चकारस्य ककारश्च ।

## सूचः

सीव्यति येन स सूचः दर्भाङ्कुरो वा । – उ०को०, ४/९३

✓षिवु – तन्तुसन्तने + चट् प्रत्ययः, धातोरिवभागस्य टिः ऊ आदेशश्च (सिवेष्टेरू च – उ०को०, ४/९३), स्त्रियां ङीप् प्रत्यये 'सूची' इति ।

## सूचिः

सूचयतीति सूचिः । सूची इति प्रसिद्धा । – उ०को०, ४/१३९

✓सूच – पैशुन्ये + इः प्रत्ययः (अचः इः – उ०को०, ४/१३९) ।

## सूत्रं

सीव्यति येन यदर्थं बध्नाति वा तत् सूत्रम् तन्तुः शास्त्रैकदेशो वा । – उ०को०, ४/१६३

✓षिवु – तन्तुसन्तने + ष्ट्रन् प्रत्ययः, धातोरिवभागस्य टिः ऊ आदेशश्च (सिविमुच्योष्टेरू च – उ०को०, ४/१६३) ।

## सूनरी

या सुष्ठु नयति सा । – ऋ०, १/४८/५

सुष्ठुतया व्यवहारनेत्री । – ऋ०, १/४८/१०

सु + ✓नृ – नये + अच् प्रत्ययः, पूर्वपदस्य च दीर्घः।

## सूना

यः सुनोति यत्र वेति सूना जन्तुबधस्थानं वा । – उ०को०, ३/१३

✓षुञ् – अभिषवे प्रसवे च + नः प्रत्ययः, धातोर्दीर्घश्च – उ०को०, ३/१३), ततः स्त्रियां टाप् प्रत्ययः ।

## सूनुः

सूयत उत्पद्यतेऽसौ सूनुः अनुजः पुत्रः सूर्यो वा । – उ०को०, ३/३५

✓षूञ – प्रसवे + नुः प्रत्ययः (सुवः कित् – उ०को०, ३/३५) ।

## सूनृता

सुतरामूनयत्यनृतं यत्कर्म तत् सून् तदृतं यथार्थं सत्यं येषां ते सूनृताः तेषाम् । – ऋ०, १/३/११

सुष्ठु ऋतं यथार्थं ज्ञानं यस्यां साऽन्नवती वा । – ऋ०, १/८/८

सु + ✓ऊन – परिहाणे + क्विप् प्रत्ययः > सून + ऋत > सूनृत + टाप् प्रत्ययः ।

## सूपः

सुनोति सूयते पच्यते वा स सूपः पक्वं द्विदलान्नं वा । – उ०को०, ३/२६

✓षूञ – अभिषवे प्रसवे च + पः प्रत्ययः ( सुशृभ्यां निच्च – उ०को०, ३/२६ ) ।

## सूपस्थाः

ये सुष्ठूपतिष्ठन्ति ते । – यजु०, २१/६०

ये सूपतिष्ठन्ति ते । – यजु०, २८/४६

सु + उप + ✓ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ।

## सूमः

सूते जनयति प्राणिगर्भं विमुञ्चतीति सूमः अन्तरिक्षं वा । – उ०को०, १/१४५

✓षूङ् – प्राणिप्रसवे + मक् प्रत्ययः ( इषियुधीन्धिदसिश्याधूसूभ्यो मक् – उ०को०, १/१४५ ) ।

## सूरः

यः सरति प्राप्नोति स सूर्यः । – ऋ०, १/१०/१०

सूयते वा सुवति प्राणिनः समर्थयतीति सूरः सूर्यो वा । – उ०को०, २/२४

✓षूङ् – प्राणिप्रसवे + क्रन् प्रत्ययः ( सुसूधाञ्गृधिभ्यः क्रन् – उ०को०, २/२४ ) ।

## सूरतः

सुष्ठु रमत इति सूरतः उपशान्तः कृपालुर्वा। – उ०को०, ५/१४

सु + रमु – क्रीडायां + क्तः प्रत्ययः, पूर्वपदस्य च दीर्घः ( सो रमेः क्तो दमे पूर्वपदस्य च दीर्घः – उ०को०, ५/१४ ) ।

## सूरिः

सूते प्राणिनः प्रसवति समर्थयतीति सूरिः पण्डितो वा । – उ०को०, ४/६४

✓षूङ् – प्राणिप्रसवे + क्रिः प्रत्ययः ( सूङ् क्रिः – उ०को०, ४/६४ ) ।

## सूर्यः

चराचरात्मनः परमेश्वरस्य प्रकाशमयस्य सूर्य्यलोकस्य वा। सरति जानाति प्रकाशयति चराचरं जगदिति ।

– यजु०, १/३१

यः सुवत्यैश्वर्य्यं ददाति, ऐश्वर्य्य हेतून् प्रेरयति स परमेश्वरः प्राणो वा तस्य ।

– यजु०, १/३१

सुवत्यैश्वर्य्य हेतुर्भवति। सोऽयं सूर्य्यलोकः।

– यजु०, २/५

चराचरात्मा। यः सरति जानाति चराचरं जगत् स जगदीश्वरः। अनेन सर्वस्यान्तर्यामी परमेश्वरोऽर्थो गृह्यते ।

– यजु०, ३/९

यः सुवति स्वप्रकाशेन प्रेरणा हेतुर्भवति स सूर्यलोकः । – यजु०, ३/९

✓सृ – गतौ / ✓षू – प्रेरणे + क्यप् प्रत्ययः तथा सर्त्तेरुत्वं सुवते रुडागमश्च ( राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्यात्यथ्याः – अष्टा०, ३/१/११४ ) ।

## सृकः

सरतीति सृकः वाणी वज्रं वायुरुत्पलं वा। – उ०को०, ३/४१

✓सृ – गतौ + कक् प्रत्ययः ( सृवृभूशुषिमुषिभ्यः कक् – उ०को०, ३/४१ ) ।

## सृणिः

सरति गच्छतीति सृणिः अङ्कुशं वा ।

– उ०को०, ४/४९

सरतीति सृणिः चन्द्रोऽङ्कुशो वा ।

– उ०को०, ४/१०४

१- ✓सृ – गतौ + निः प्रत्ययः ( सृवृषिभ्यां कित् – उ०को०, ४/४९ ) ।

२- ✓सृ – गतौ + क्विनन् प्रत्ययः ( जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वण्-क्विनन्शक्स्यढडटोटचः – उ०को०, ४/१०४ ) ।

## सृणीका

सरति प्राप्नोतीति सृणीका लावा वा ।

– उ०को०, ४/२३

✓सृ – गतौ + ईकन् प्रत्ययः धातोर्नुमागमश्च ( सर्तेर्नुम् च – उ०को०, ४/२३ ) ततः स्त्रियां टाप् प्रत्ययः ।

## सृती

सरन्ति गच्छन्त्याऽऽगच्छन्ति जीवा ययोस्ते।

– यजु०, १९/४७

✓सृ – गतौ + क्तिन् प्रत्ययः ।

## सृत्वा

सरतीति सृत्वा प्रजापतिर्वा ।

– उ०को०, ४/११४

✓सृ – गतौ + क्वनिप् प्रत्ययः ( शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् – उ०को०, ४/११४ ) ।

## सृदरः

सृष्टिं दृणातीति सृदरः सर्पः ।

– उ०को०, ५/४१

सृ > सृद् 'कृत्स्न – मृद – सृष्टि' शब्दानां यथासंख्यं 'कृ – मृ – सृ' आदेशाः + अरः प्रत्ययः ( कृदरादयश्च – उ०को०, ५/४१ ) ।

## सृदाकुः

सरतीति सृदाकुः वायुर्वा ।

– उ०को०, ३/७८

✓सृ – गतौ + काकुः प्रत्ययः धातोर्दुगागमः ( सर्तेर्दुक् च – उ०को०, ३/७८ ) ।

## सृप्रः

सर्पति गच्छतीति सृप्रः चन्द्रमा वा ।

– उ०को०, २/१३

✓सृप्लृ – गतौ + रक् प्रत्ययः ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को० २/१३ ) ।

## सेतुः

सिनोति बध्नातीति सेतुः समुद्रो वा ।

– उ०को०, १/६९

✓षिञ् – बन्धने + तुन् प्रत्ययः धातोरेत्वञ्च ( सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् – उ०को०, १/६९ ) ।

## सेनजित्

यः सेनया जयति सः । – यजु०, १५/१९

यः सेनां जयति सः । – यजु०, १७/८३

सेना + ✓जि – जये + क्विप् प्रत्ययः, धातोः तुगागमः पूर्वपदस्य च ह्रस्वत्वञ्च ।

## सेनाः

सिन्वन्ति बध्नन्ति शत्रून् याभिस्ताः ।

– यजु०, १७/३३

सिनोति बध्नाति शत्रूनिति सेना ।

– उ०को०, ३/१०

✓षिञ् – बन्धने + नः प्रत्ययः ( कृवृजृसिद्रूपन्यनिस्वपिभ्यो नित् – उ०को०, ३/१० ) धातोरेत्वं स्त्रियां टाप् प्रत्ययश्च, अथवा स ( सह ) + ✓इनः ( स्वामी ) > सेनः ततः स्त्रियां टाप् च ।

## सेनानी

यः सेनां नयति सः । – ऋ०, ७/२०/५

सेना + ✓णीञ् – प्रापणे + क्विप् प्रत्ययः (सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१)।

## सोमः

सूयन्त उत्पद्यन्ते ये ते पदार्थाः। – ऋ०, १/२/१

अभिसूयन्त उत्पद्यन्त उत्तमा व्यवहारा येषु ते। – ऋ०, १/५/५

यः सूयते सर्वेभ्यः पदार्थेभ्यो रसस्तस्य। – ऋ०, १/१६/३

सूयन्त उत्पद्यन्ते सुखानि येभ्यस्ते। – ऋ०, १/१६/६

यः सवत्यैश्वर्य्यं करोतीति तं यज्ञानुष्ठातारम्। – ऋ०, १/१८/१

सूयन्त उत्पद्यन्ते ये ते पदार्थाः। – ऋ०, १/२३/१

सूयत उत्पद्यते यस्तं रसम्। – ऋ०, १/३२/३

ये सुन्वन्ति सूयन्ते वा ते पदार्थाः। – ऋ०, ३/३६/२

सूयन्ते यस्मिंस्तं संसारम्। – ऋ०, ३/४७/३

यः सुनोति स विद्वान्। – ऋ०, ५/७५/१२

यः सुनोति सः। – ऋ०, ६/३४/४

यः सर्वंजगत् सूते सः। – ऋ०, ६/४४/२४

सुवन्त्यैश्वर्याणि प्राप्नुवन्ति यस्मिन् संसारे तस्मिन्। – यजु०, २/१९

सुवति चराचरं जगत् तत्सम्बुद्धौ जगदीश्वर। अथवा सूयन्ते रसा यस्मात् स सोम ओषधिराजः। – यजु०, ३/५६

सुवति प्रेरयतीति सोमः चन्द्रो वा। – उ०को०, ४/१५१

सुवत्यैश्वर्यहेतुर्भवतीति सोमः कर्पूरश्चन्द्रमा वा। – उ०को०, १/१४०

✓षुञ्-प्रसवैश्वर्ये + मन् प्रत्ययः (अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०)।

## सोमकामं

अभिसुतानां पदार्थानां रसं कामयते यस्तम्। – ऋ०, १/१०४/९

सोम + ✓कमु – कान्तौ + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१)।

## सोमक्रयणाः

ये सोमानुत्तमान् पदार्थान् क्रीणन्ति ते। – यजु०, ४/२७

(प्र०ब०व०) – सोम + ✓डुक्रीञ् – द्रव्य विनिमये + ल्युट् प्रत्ययः।

## सोमधानः

सोमं दधति ययोस्तौ। – ऋ०, ६/६८/२

सोमाद्योषधिगणा धीयन्ते यस्मिन् सः। – ऋ०, ६/६९/६

सोम + ✓डुधाञ् – धारणपोषणयोः + ल्युट् प्रत्ययः।

## सोमपाः

यः सोमान्यदार्थान् किरणैः पाति सः। – ऋ०, १/८/७

सोमानुत्पन्नान् सर्वान् पदार्थान् पाति रक्षति तत्सम्बुद्धौ। – ऋ०, १/२९/१

सोमान् उत्पादितान् कार्याख्यान् पदार्थान् पाति रक्षति तत्सम्बुद्धौ । – ऋ०, १/३०/११

यः सौमैर्जगत्युत्पन्नैः पदार्थैः सर्वान् पाति रक्षति तत्सम्बुद्धौ । – ऋ०, १/३०/१२

ये वीराः सोमानोषधिरसान् पिबन्ति ते ।
– ऋ०, १/५४/८

यः सोमं रसं पिबति सः । – ऋ०, २/१२/१३

यः सोममैश्वर्य्यं पाति सः ।
– ऋ०, ४/२९/१४

यः सोममैश्वर्यं पाति तत्सम्बुद्धौ ।
– ऋ०, ६/४५/१०

यः सोममोषधिरसं पिबति सः ।
– यजु०, १७/३५

ये सोममैश्वर्यमोषधीरसं वा पान्ति पिबन्ति वा ते सोमपाः । – स०प्र०( चतुर्थसमुल्लासः )

सोम + √पा – रक्षणे पाने च + क्विप् प्रत्ययः ।

## सोमपावन्

यः सोमान् श्रेष्ठान् रसान् पिबति तत्सम्बुद्धौ । – ऋ०, १/५५/७

यः सोमान् श्रेष्ठान् रसान् पिबति तत्सम्बुद्धौ । – ऋ०, १/५५/१०

यः सोमं पिबति तस्मै । – ऋ०, ७/३१/१

सोम + √पा – रक्षणे, पाने च + वनिप् प्रत्ययः ।

## सोमपित्सरू

ये सोमयवाद्योषधीः पालयन्ति तान्त्सरयति कुटिलं गमयति यः सः । – यजु०, १२/७१

सोम + √पा – रक्षणे + इः प्रत्ययः > सोमपि + √त्सर – छद्मगतौ + उः प्रत्ययः ( भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः – उ०को०, १/७)।

## सोमपीतये

सूयन्ते ये पदार्थास्तेषां पीतिः पानं यस्य तस्मै विदुषे मनुष्याय । – ऋ०, १/२/३

सोमानां सर्वेषां पदार्थानां पीतिः पानं यस्य तस्मै । – ऋ०, १/८/१०

सोमानां सुखकारकाणां पीतिः पानं यस्माद्यज्ञास्तस्मै । – ऋ०, १/१४/१

सोमानां पदार्थानां पितिः पानं यस्मिंस्तस्मै यज्ञाय । – ऋ०, १/१४/६

सोमानां सुतानां पदार्थानां पीतिः पानं यस्मिन् व्यवहारे तस्मै । – ऋ०, १/१६/१

सोमानां पीतिः पानं यस्मिन्नानन्दे तस्मै ।
– ऋ०, १/१७/८

सोमानां पदार्थानां पीति रक्षणं यस्मिन् व्यवहारे तस्मै । – ऋ०, १/२१/३

सोमानामैश्वर्य्याणां पीतिभोगो यस्मिन् तस्मै । – ऋ०, १/२२/१२

सोमानामनुकूलानां सुखादि रसयुक्तानां पदार्थानां पीतिः पानं यस्मिन् व्यवहारे तस्मै । – ऋ०, १/२३/४

सोमानां पीतिः पानं यस्मिन् व्यवहारे तस्मै।
– ऋ०, १/४८/१२

सोमा ओषधिरसाः पीयन्ते यस्मिंस्तस्मै ।
– ऋ०, १/१३८/३

(च०ए०व०) – सोम + √पा – पाने रक्षणे च + क्तिन् प्रत्ययः स्त्रियाम्, ततः ईत्वञ्च ( घुमास्थागापाजहातिसां हलि – अष्टा०, ६/४/६६ ) ।

## सोममादः

**ये सोमेन मदन्ति हर्षन्ति ते ।**

– ऋ०, ७/२१/२

सोम + ✓मदी – हर्षे + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१) ।

## सोमभृते

**यः सोमान् बिभर्त्ति तस्मै यजमानाय ।**

– यजु०, ५/१

**यः सोममैश्वर्यसमूहं बिभर्ति तस्मै ।**

– यजु०, ६/३२

(च०ए०व०) – सोम + ✓डुभृञ – भरणे + क्विप् प्रत्ययः, तुगागमश्च ।

## सोमसदः

**ये सोमे जगदीश्वरे पदार्थविद्यायाञ्च सीदन्ति ते सोमसदः ।**– स०प्र०( चतुर्थ समु० )

(प्र०ब०व०) – सोम + ✓षद्लृ – विशरणगत्य-वसादनेषु + क्विप् प्रत्ययः ।

## सोमसुत्वा

**यः सोममैश्वर्यं सवति सः ।**

– ऋ०, १/११३/१८

सोम + ✓षु – प्रसवैश्वर्ययोः + ड्वनिप् प्रत्ययः (सुयजोर्ङ्वनिप् – अष्टा०, ३/२/१०३) ।

## स्कन्धः

**स्कन्दते गच्छति चेष्टते शुष्यति वा येन तत् स्कन्धः बाहुमूलं वृक्षावयवो वा ।**

– उ०को०, ४/२०७

✓स्कन्दिर् – गतिशोषणयोः + असुन् प्रत्ययः, धातोरङ्गस्य स्थाने धकारः (स्कन्देश्च स्वाङ्गे – उ०को०, ४/२०७) ।

## स्कम्भनीः

**स्कम्भं प्रतिबद्धं नयतीति सा।**– यजु०, १/१९

✓स्कम्भु (सौत्रधातु) – स्तम्भार्थे + अच् प्रत्ययः > स्कम्भ + ✓णीञ् – प्रापणे + क्विप् प्रत्ययः ।

## स्तनयित्नुः

**स्तनयति शब्दयतीति स्तनयित्नुः मेघो विद्युद्वा ।** – उ०को०, ३/२९

✓स्तन – देवशब्दे + इत्नुच् प्रत्ययः, (स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् – उ०को०, ३/२९) इत्नुच् परतो णेरयादेशश्च (अयामन्ताल्वाय्येत्न्विष्णुषु – अष्टा०, ६/४/५५) ।

## स्तम्बः

**तिष्ठतीति स्तम्बः शाखाशून्यो व्रीह्यादेर्गुच्छो वा ।** – उ०को०, ४/९६

✓ष्ठा(स्था) – गतिनिवृत्तौ + अम्बच् प्रत्ययः धातोः थस्य 'त' (स्थः स्तोऽम्बजवकौ – उ०को०, ४/९६)।

## स्तरिमा

**स्तीर्यत आच्छाद्यत इति स्तरिमा तल्पं वा।** – उ०को०, ४/१४८

✓स्तृञ् – आच्छादने + इमनिच् प्रत्ययः (हृभृधृसृस्तृशृभ्य इमनिच् – उ०को०, ४/१४८) ।

## स्तरीः

**कलायन्त्रादिसंयोगेनास्तारिषत यास्ता नौकाः ।** – ऋ०, १/१२२/२

**यः सुखैः स्तृणात्याच्छादयति सः ।**

– यजु०, ३/३४

**स्तृणन्ति यभिस्ताः ।** – यजु०, ३३/१८

**स्तृणोत्याच्छादयतीति स्तरीः धूमो वा ।**

– उ०को०, ३/१५८

✓स्तृञ् – आच्छादने + ईः प्रत्ययः (अवितृस्तृतन्त्रिभ्य ईः – उ०को०, ३/१५८) ।

## स्तवान

**यः स्तौति सः ।** – ऋ०, १/५१/९

यः सत्यं स्तौति तत्सम्बुद्धौ ।

– ऋ०, ३/४०/३

✓ष्टुञ् – स्तुतौ + आनच् प्रत्ययः ।

## स्तावाः

या स्तूयन्ते प्रशस्यन्ते ताः ।– यजु०, १८/४२

✓ष्टुञ् – स्तुतौ + घञ् प्रत्ययः ।

## स्तिभिः

स्तभ्नातीति स्तिभिः समुद्रो वा ।

– उ०को०, ४/१२२

✓ष्टभि + प्रतिबन्धे + इन् प्रत्ययः, धातोरित्वं (क्रमितमिशतिस्तम्भामत इच्च – उ०को०, ४/१२२)।

## स्तीर्विः

स्तृणोत्याच्छादयतीति स्तीर्विः अध्वर्युर्वा।

– उ०को०, ४/५४

✓स्तृञ् – आच्छादने + क्विन् प्रत्ययः, धातोरुपधाया ईत्वं (हलि च – अष्टा०, ८/२/७७) ।

## स्तुभः

स्तोभते स्थिरीकरोति येन तेन ।

– ऋ०, १/६२/४

यः स्तोभते सः । – ऋ०, ३/५१/३

✓स्तुम्भ – स्तम्भार्थे + क्विप् प्रत्ययः धातोः मस्य लोपः ।

## स्तुवेय्यं

स्तूयतेऽसौ स्तुवेय्यः पुरन्दरो वा ।

– उ०को०, ३/९९

✓ष्टुञ् – स्तुतौ + केय्यः प्रत्ययः छन्दसि (स्तुवः केय्यश्छन्दसि – उ०को०, ३/९९) ।

## स्तूपः

स्तौतीति स्तूपः भूमि समुच्छ्रायो यज्ञवेदिर्वा।

– उ०को०, ३/२५

✓ष्टुञ् – स्तुतौ + पः प्रत्ययः धातोर्दीर्घश्च (स्तुवो दीर्घश्च – उ०को०, ३/२५) ।

## स्तोत्रं

स्तुवन्ति येन तत् । – ऋ०, १/३०/५

✓ष्टुञ् – स्तुतौ + ष्ट्रन् प्रत्ययः (दाम्नीशसयुयुजस्तुतुदासिसिचमिहपतदशनहः करणे – अष्टा०, ३/२/१८२) ।

## स्तोमः

सामगानविशेषः स्तुतिसमूहः ।

– ऋ०, १/८/१०

वेदस्थैः स्तुतियुक्तैस्त्वद्गुणप्रकाशकैः स्तोत्रैः । – ऋ०, १/९/३

स्तूयते येनासौ स्तोमस्तं स्तुतिसमूहम् ।

– ऋ०, १/१०/९

स्तुवन्ति यैस्ते स्तुतिसमूहाः ।

– ऋ०, १/११/८

स्तूयते गुणसमूहो यस्तं यज्ञम् ।

– ऋ०, १/१६/५

ये स्तूयन्ते । – ऋ०, ६/६९/२

यः स्तूयते । – यजु०, १४/२४

स्तुवन्ति येन सः । – यजु०, १४/२४, १५/३

स्तुवन्ति येन स ऋचां भागः ।

– यजु०, १५/११

स्तुवन्ति यस्मिन् सोऽथर्ववेदः ।

– यजु०, १८/२९

स्तौति येन स स्तोमः सङ्घातो वा ।

– उ०को०, १/१४०

✓ष्टुञ् – स्तुतौ + मन् प्रत्ययः (अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् – उ०को०, १/१४०) ।

## स्तोमवाहाः

ये स्तोमान् वहन्ति । – ऋ०, ६/२३/४

(प्र०ब०व०) – स्तोम + ✓वह – प्रापणे + अण् प्रत्ययः (कर्मण्यण् – अष्टा०, ३/२/१)।

## स्त्येनः

**स्त्यायति शब्दयति संघातयति स सत्येनः चौरो वा। – उ०को०, २/४६**

✓स्त्यै – शब्दसंघातयोः + इनच् प्रत्ययः (श्यास्त्या-ह्लञविभ्य इनच् – उ०को०, २/४६)।

## स्त्री

**सत्यायति शब्दयति गुणान् गृह्णाति वा सा स्त्री प्रसिद्धा भार्य्या वा।**

**– उ०को०, ४/१६६**

✓स्त्यै – शब्दसंघातयोः + ड्रट् प्रत्ययः (स्त्यायतेर्ड्रट् – उ०को०, ४/१६६) ततः ङीप् प्रत्ययश्च।

## स्थपतिः

**स्थापयति धर्म्ममिति स्थपतिः वाग्मी यज्ञकर्त्ता वा। – उ०को०, ४/५९**

✓ष्ठा – गतिनिवृत्तौ + अतिः प्रत्ययः, बाहुलकात् धातोः पुगागमः, ह्रस्वत्वञ्च (अमेरतिः – उ०को०, ४/५९)।

## स्थविः

**तिष्ठतीति स्थविः तन्तुवायो वा।**

**– उ०को०, ४/५६**

✓ष्ठा – गतिनिवृत्तौ + क्विन् प्रत्ययः धातोर्ह्रस्वत्वञ्च (कृविघृष्विछविस्थविकिकीदिवि–उ०को०, ४/५६)।

## स्थविरः

**गमनेऽसमर्थत्वात्तिष्ठतीति स्थविरं वृद्धो भिक्षुको वा। – उ०को०, १/५३**

✓ष्ठा – गतिनिवृत्तौ + किरच् प्रत्ययः निपातनात्, धातो वुंगागमः ह्रस्वत्वञ्च (अजिरशिशिरशिथिल स्थिरस्फिरस्थविरखदिराः – उ०को०, १/५३)।

## स्थाणुः

**तिष्ठतीति स्थाणुः शुष्कवृक्षो निश्चलो वा। – उ०को०, ३/३७**

✓ष्ठा – गतिनिवृत्तौ + णुः प्रत्ययः (स्थो णुः – उ०को०, ३/३७)।

## स्थाता

**यो युद्धे तिष्ठतीति तत्सम्बुद्धौ।**

**– ऋ०, १/३३/५**

**ये तिष्ठन्ति ते। – ऋ०, ५/८७/६**

✓ष्ठा – गतिनिवृत्तौ + तृच् प्रत्ययः।

## स्थाम

**तिष्ठति येन तत् स्थाम बलं वा।**

**– उ०को०, ४/१४५**

✓ष्ठा – गतिनिवृत्तौ + मनिन् प्रत्ययः (सर्वधातुभ्यो मनिन् – उ०को०, ४/१४५)।

## स्थालं

**तिष्ठन्त्यस्मिन् तत् स्थालं पात्रभेदो वा।**

**– उ०को०, १/११६**

✓ष्ठा – गतिनिवृत्तौ + आलच् प्रत्ययः (स्थाचति-मृजेरालच् वालञालीयचः – उ०को०, १/११६)।

## स्थिरः

**गमनागमननिवृत्त्या तिष्ठतीति स्थिरः निश्चलम्। – उ०को०, १/५३**

✓ष्ठा – गतिनिवृत्तौ + किरच् प्रत्ययः निपातनात् धातोराकारलोपः (अजिरशिशिरशिथिलस्थिरस्फिरस्थ-विरखदिराः – उ०को०, १/५३)।

## स्थूणा

**तिष्ठति छादनादिकमनया सा स्थूणा गृहस्तम्भो वा। – उ०को०, ३/१५**

✓ष्ठा – गतिनिवृत्तौ + नः प्रत्ययः (रास्नासास्ना-स्थूणावीणाः – उ०को०, ३/१५), धातोराकारस्य ऊ

आदेशः, प्रत्ययस्य णत्वञ्च ततः स्त्रियां टाप् प्रत्ययः ।

## स्थूरः

तिष्ठतीति स्थूरः मनुष्यो वा । – उ०को०, ५/४

✓ष्ठा – गतिनिवृत्तौ + ऊरन् प्रत्ययः ( स्थः किच्च – उ०को०, ५/४ ) ।

## स्थूलपृषती

स्थूलानि पृषन्ति यस्याः सा ।

– यजु०, २४/२

✓ष्ठा – गतिनिवृत्तौ + ऊरन् प्रत्ययः ( स्थः किच्च – उ०को०, ५/४ ) > स्थूर, वर्णव्यत्ययेन रस्य ल > स्थूल + ✓पृषु – सेचने + अतिः प्रत्ययः ( वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च – उ०को०, २/८४ ) ततः स्त्रियां ङीप् प्रत्ययः ।

## स्नायुः

स्नाति शोधयत्यङ्गानीति स्नायुः नाडी वा।

– उ०को०, १/१

✓ष्णा – शौचे + उण् प्रत्ययः बाहुलकात् ( कृवापाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१ ) ।

## स्नावा

स्नाति शुच्यतीति स्नावा रसिको वा ।

– उ०को०, ४/११३

✓ष्णा – शौचे + वनिप् प्रत्ययः ( स्नामदिपद्यर्तिपृ॰-शकिभ्यो वनिप् – उ०को०, ४/११३ ) ।

## स्नुषा

स्नौति प्रस्रवतीति स्नुषा यवीयसी भ्रातुर्भार्या वा । – उ०को०, ३/६६

✓ष्णु – प्रस्रवणे + सः प्रत्ययः ।

## स्नेहाः

स्निह्यति प्रीति करोतीति स्नेहाः व्याधिर्वा।

– उ०को०, १/१५९

✓ष्णिह – प्रीतौ + कनिन् प्रत्ययः निपातनात्, धातोर्गुण ( श्वन्नुक्षन्पूषन्प्लीहंन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्यरिज्वन्मातरिश्वन्मघवन्निति – उ०को०, १/१५९ ) ।

## स्नेहुः

स्नेह्यति यस्मिन् स स्नेहुः व्याधिर्वा ।

– उ०को०, १/१०

✓ष्णिह – प्रीतौ + उः प्रत्ययः धातोर्गुणः ( शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१० ) ।

## स्पशः

ये स्पशन्ति ते । – ऋ०, १/३३/८ ( प्र०ब०व० ) – ✓स्पश – बाधनस्पर्शनयोः + अच् प्रत्ययः ।

## स्पार्हः

स्पृहा वाञ्छा तस्या इदं स्पार्हम् ।

– ऋ०, १/३१/१४

यः स्पृहयति तस्याऽयम् । – यजु०, २७/३०

✓स्पृह – ईप्सायां + अङ् प्रत्ययः स्त्रियां, ततः अण् प्रत्ययः ( तस्येदं – अष्टा०, ४/३/१२० ) ।

## स्पृधः

स्पर्द्धयन्ते येषु तान् सङ्ग्रामान् ।

– ऋ०, ५/४४/७

याः स्पर्द्धन्ते ताः । – ऋ०, ५/५५/६

याः स्पर्ध्यन्ते ताः सङ्ग्रामाः वा ।

– ऋ०, ५/५५/६

स्पर्द्धन्ते यासु ताः सङ्ग्रामसेनाः ।

– ऋ०, ६/५/६

स्पर्द्धन्ते येषु तान् । – ऋ०, ६/२०/९

याः स्पर्द्धन्ते ताः शत्रुसेनाः ।

– यजु०, ११/७१

✓स्पर्द्ध – संघर्षे + क्विप् प्रत्ययः, धातोरेफस्य सम्प्रसारणमकारलोपश्च निपातनात् ( अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्त्ताः – अष्टा०, ६/१/३६ ) ।

## स्पृहयाय्यः

स्पृहयतीति स्पृहयाय्यः अभीप्सुर्नक्षत्रं वा।
– उ०को०, ३/९६

✓स्पृह – ईप्सायां + आय्यः प्रत्ययः ( श्रुदक्षिस्पृहिगृहिभ्य आय्यः – उ०को०, ३/९६ ) ।

## स्फारं

यः स्फायते वर्द्धतेऽसौ स्फारः सुवर्णादेर्विकारो बुद्बुदो वा । – उ०को०, २/१३

✓स्फायी – वृद्धौ + रक् प्रत्ययः ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ ) ततः य लोपः ( लोपो व्योर्वलि – अष्टा०, ६/१/६४ ) ।

## स्फिरः

स्फायते प्रवर्द्धते स स्फिरः प्रभावो वा ।
– उ०को० १/५३

✓स्फायी – वृद्धौ + किरच् प्रत्ययः निपातनात् धातोरायभागस्य लोपः ( अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः – उ०को०, १/५३ ) ।

## स्यन्दनः

स्यन्दते प्रस्रवति गच्छतीति स्यन्दनः रथो वा । – उ०को०, २/७८

✓स्यन्दू – प्रस्रवणे + युच् प्रत्ययः बाहुलकात् ( बहुलमन्यत्रापि – उ०को०, २/७८ ) ।

## स्यमीकः

स्यमिति शब्दयतीति स्यमीकः वाल्मीको वृक्षभेदो वा । – उ०को०, ३/४६

✓स्यमु – शब्दे + कन् प्रत्ययः धातोरीडागमः ( स्यमेरीद् च – उ०को०, ३/४६ ) ।

## स्यूः

यः सीव्यति सः । – यजु०, ५/२१

यः सीवयति सह योजयति सः ।
– यजु०, ५/३०

✓षिवु – तन्तुसन्ताने + क्विप् प्रत्ययः, धातोरूठादेशश्च ( च्छ्वोः शूडनुनासिके च – अष्टा०, ६/४/१९ ) ।

## स्यूनः

सीव्यति तन्तून् सन्तनोतीति स्यूनः आदित्यो वा । – उ०को०, ३/९

✓षिवु – तन्तुसन्ताने + नः प्रत्ययः, धातोः टिभागस्य 'यू' आदेशः ( सिवेष्टेर्यू च – उ०को०, ३/९ ) ।

## स्यूमः

सीव्यति तन्तून् संतनोतीति स्यूमः रश्मिर्वा।
– उ०को०, १/१४४

✓षिवु – तन्तुसन्ताने + मन् प्रत्ययः धातोः टिभागस्य 'यु' आदेशः ( अविसिविसिशुषिभ्यः कित् – उ०को०, १/१४४ ) ।

## स्योनः

सीव्यति तन्तून् सन्तनोतीति स्यूनः आदित्यो वा । – उ०को०, ३/९

✓षिवु – तन्तुसन्ताने + नः प्रत्ययः बाहुलकात् ( सिवेष्टेर्यू च – उ०को०, ३/९ ) धातोर्वकारस्य ऊठादेशः ( च्छ्वोः शूडनुनासिके च – अष्टा०, ६/४/१९ ) ।

## स्योनकृत्

यः स्योनं सुखं करोति सः ।
– ऋ०, १/३१/१५

स्योन + ✓डुकृञ् – करणे + क्विप् प्रत्ययः, तुगागमश्च।

## स्योनशीः

यः स्योनेषु सुखेषु विद्याधर्मपुरुषार्थेषु शेत आस्ते सः । – ऋ०, १/७३/१

यः सुखेन शेते सः । – ऋ०, ७/४२/४

स्योन + √शीङ् – शये + क्विप् प्रत्ययः ।

## स्वगा

यत्स्वान् गच्छति प्राप्नोति तत् स्वगा ।

– यजु०, १८/५७

स्वयं गच्छतीति स्वगास्तं स्वयं गामिनम्।

– यजु०, २२/४

स्व + √गाङ् – गतौ + क्विप् प्रत्ययः ।

## स्वगाकारः

येन स्वान् पदार्थान् गाते तं करोतीति ।

– यजु०, १८/२१

स्वगा + √डुकृञ् – करणे + अण् प्रत्ययः ( कर्मण्यण् – अष्टा०, ३/२/१ ) ।

## स्वञ्चः

याभिः सुष्ठ्वञ्चन्ति गच्छन्ति प्राप्नुवन्ति वा ते । – ऋ०, ४/६/९

यः सुष्ठ्वञ्चति सह । – ऋ०, ५/३७/१

यः सुष्ठ्वञ्चति जानाति प्राप्नोति वा तम्।

– ऋ०, ६/१५/१०

यः सुष्ठ्वञ्चति । – ऋ०, ७/१०/३

ये सुष्ठ्वञ्चन्ति गच्छन्ति ते ।

– ऋ०, ७/५६/१६

सु + √अञ्चु – गतिपूजनयोः + क्विन् प्रत्ययः ( ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च – अष्टा०, ३/२/५९ ) ।

## स्वतवान्

यः स्वान् तौति वर्द्धयति सः।–यजु०, १७/८५

स्व + √तु – गतिवृद्धिहिंसासु + आनच् प्रत्ययः ।

## स्वधा

यः स्वं दधाति तस्मै । – ऋ०, ५/३२/५

या स्वं दधाति सा । – ऋ०, ५/३४/१

यः स्वं वस्त्वेव दधाति यः स्वां धार्मिकां दधाति तस्मै । – ऋ०, ७/४६/१

स्वं स्वकीयं सुखं दधात्यनया सा ।

– यजु०, २/७

ये स्वमेव दधते ते । – यजु०, २/३४

स्वान् दधाति यया सा क्रिया स्वेन धारिता सेवा वा । – यजु०, १९/३६

ये स्वं दधति ते । – यजु०, ३३/७४

स्वदते स्वादुक्रियते या सा स्वधा न्यायेनैश्वर्यक्रिया तृप्तिर्वा ।

– उ०को०, ४/१७५

√स्वाद – आस्वादने + आः प्रत्ययः बाहुलकात् धातोर्ह्रस्वः दकारस्य च धकारः ( आः समिणनिकषिभ्याम् – उ०को०, ४/१७५ ) अथवा स्व + √डुधाञ् – धारणपोषणयोः + कः प्रत्ययः ( आतोऽनुपसर्गे कः – अष्टा०, ३/२/३ ) ।

## स्वप्नः

यः स्वपिति यत् सुप्यते वा स स्वप्नः निद्रा वा । – उ०को०, ३/१०

√स्वप् – शये + नः प्रत्ययः ( कृवृजृसिद्रूपन्य-निस्वपिभ्योः नित् – उ०को०, ३/१० ) ।

## स्वयम्भूः

स्वयं भवत्यनादिस्वरूपः । – यजु०, २/२६

यः स्वयम्भवत्युत्पत्तिनाशरहितः ।

– यजु०, २३/६३

यः स्वयं भवति स स्वयम्भूरीश्वरः ।

– स० प्र० ( प्रथमसमुल्लासः )

स्वयं + ✓भू – सत्तायाम् + क्विप् प्रत्ययः ।

## स्वयुः

यः स्वयं याति सः । – ऋ०, २/४/७

य स्वं धनं याति सः । – ऋ०, ३/४५/५

स्व + ✓या – प्रापणे + कुः प्रत्ययः ( मृगय्वादयश्च – उ०को०, १/३७ ) ।

## स्वरणं

यः स्वरति शब्दार्थसम्बन्धानुपदिशति तम्।

– ऋ०, १/१८/१

✓स्वृ – शब्दोपतापयोः + ल्युट् प्रत्ययः ।

## स्वराट्

स्वयं राजते तस्मै सर्वाधितये परमेश्वराय।

– ऋ०, १/११/१५

यः स्वयं राजते तस्य । – ऋ०, २/२८/१

य स्वेनैव राजते । – ऋ०, ३/४५/५

यः स्वेन सूर्य्य इव राजते तम् ।

– ऋ०, ३/४९/२

स्वः राजत इति स्वराट् तस्य ।

– ऋ०, ५/५८/१

ये स्वं राजन्ते ते । – यजु०, १०/४

या स्वयं राजते सा । – यजु०, १३/३५

या स्वयं राजते सा । – यजु०, १४/१३

या स्वयं राजते । – यजु०, १५/१३

यः स्वयं राजते स स्वराट् ।

– स०प्र० ( प्रथमसमुल्लास )

स्वयं राजते प्रकाशते स्वान् राजयति प्रकाशयति वा स स्वराट् परमेश्वरः ।

– ऋ० भा० भू० ( पञ्चमहायज्ञविषयः )

स्व + ✓राजृ – दीप्तौ + क्विप् प्रत्ययः ( सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् – अष्टा०, ३/२/६१ ) ।

## स्वरूः

स्वर्यन्त उपतप्यन्ते प्राणिनोऽनेनेति स्वरूः वज्रम् । – उ०को०, १/१०

✓स्वृ – शब्दोपतापयोः + उः प्रत्ययः ( शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१० ) ।

## स्वर्ग

यः सुखं गच्छति येन तद्भावाय ।

– यजु०, ११/२

स्वः सुखं गच्छन्ति प्राप्नुवन्ति येभ्यस्तान्।

– यजु०, १३/३१

स्वः + ✓गम्लृ – गतौ + डः प्रत्ययः ( ड प्रकरणेऽन्येष्वपि दृश्यते – अष्टा०वा०, ३/२/४८ )।

## स्वर्जितं

यः सुखेन जयति तस्मै । – ऋ०, २/२१/१

स्वः सुखं जयत्युत्कर्षति येन तम् ।

– यजु०, ११/८

स्वः + ✓जि – जये + क्विप् प्रत्ययः, तुगागमश्च।

## स्वर्णरः

ये स्वः सुखं नयन्ति ते । – ऋ०, ५/५४/१०

यः स्वः सुखं नयति तम् ।

– ऋ०, ५/६४/१, ६/१५/४

स्वर् + नर ( व्याख्यातः ) एतयोः पदयोः समासः ।

## स्वर्दृशं

स्वः सुखं दृश्यते यस्मात्तम् ।

– ऋ०, ३/१/१४

यः स्वरादित्येन दृश्यते तम् ।

– ऋ०, ५/२६/२

स्वर् + √दृशिर् – प्रेरणे + क्विप् प्रत्ययः ।

## स्वर्भानुः

यः स्वरादित्यं भाति स विद्युद्रूपः ।

– ऋ०, ५/४०/५

भाति दीप्यतेऽसौ भानुः सूर्यः प्रकाशः किरणो वा। स्वर्भानुः राहुः ।

– उ०को०, ३/३२

स्वर् + भानुः (व्याख्यातः) एतयोः पदयोः समासः ।

## स्वर्मीढेषु

स्वः सुखं मिह्यते सिच्यते येषु तेषु ।

– ऋ०, १/१३०/८

(स०ब०व०) – स्वर् + √मिह – सेचने + क्तः प्रत्ययः ।

## स्वर्य्यवः

ये सुखं यावयन्ति मिश्रयन्ति ते ।

– ऋ०, ३/५०/४

(प्र०ब०व०) – स्वर् + √यु – मिश्रणामिश्रणयोः + क्विप् प्रत्ययः ।

## स्वर्वित्

स्वरुदकं विन्दन्ति येन तम्।– ऋ०, २/२३/३

स्वः सुखं विदन्ति यस्मात्तम् ।

– ऋ०, ३/३/५

स्वः सुखंविन्दति येन तम् ।– ऋ०, ३/२६/१

स्वः सुखं वेदयति तम् । – यजु०, ७/१२

यः सुखं वेत्ति तस्मै । – यजु०, १७/१२

स्वर् + √विद्लृ – लाभे + क्विप् पत्ययः ।

## स्वर्षाः

यः स्वः सुखं सनोति तम्।– ऋ०, १/९१/२१

स्वः सुखं सुनोति येन सः ।

– ऋ०, २/१८/१

यः स्वः सुखं सनति विभजति सः ।

– ऋ०, ३/३४/४

स्वः सुखं सनति विभजति यया ताम् ।

– ऋ०, ५/४५/११

स्व सुखानि सनन्ति भज़न्ति यया ताम् ।

– यजु०, १३/१५

स्वः सुखं सनोति ददाति यया ताम् ।

– यजु०, १५/२३

यः स्वः सुखं सनति सम्भजति तम् ।

– यजु०, ३४/२०

स्वर् + √षण – सम्भक्तौ तथा √षणु – दाने + विट् प्रत्ययः (जनसनखनक्रमगमोविट् – अष्टा०, ३/२/६७), धातोरात्वञ्च (विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१) ।

## स्वसा

सुष्ठ्वस्यति प्रक्षिपति यया विद्यया क्रियया वा, तया । – यजु०, ३/५७

सुष्ठुवस्यतीति स्वसा भगिनी वा ।

– उ०को०, २/९६

सु + √असु – क्षेपणे उपतापे च + ऋन् प्रत्ययः (सावसेर्ऋन् – उ०को०, २/९६) ।

## स्वसिचः

याः स्वैर्जलैर्जलेन सिच्यन्ते ताः ।

– यजु०, १०/१९

(प्र०ब०व०) – स्व + √षिच – क्षरणे + क्विप् प्रत्ययः ।

## स्वसृतः

ये स्वान् गुणान् सरन्ति प्राप्नुवन्ति ते ।

– ऋ०, १/६४/११

यः स्वान् सरति प्राप्नोति सः ।

– ऋ०, १/८७/४

स्व + √सृ – गतौ + क्विप् प्रत्ययः, तुगागमश्च ।

## स्वस्तिः

सुष्ठु अस्ति वर्त्तत इति स्वस्ति : कल्याणं वा । – उ०को०, ४/१८१

सु + √अस – भुवि + तिः प्रत्ययः ( सावसेः – उ०को०, ४/१८१ ) ।

## स्वस्तिगां

स्वस्ति सुखं गच्छति येन तम् ।

– यजु०, ४/२९

स्वस्ति + √गम्लृ – गतौ + विट् प्रत्ययः ( जनसनखनक्रमगमो विट् – अष्टा०, ३/२/६७), धातोरात्वञ्च ( विड्वनोरनुनासिकस्यात् – अष्टा०, ६/४/४१ ) ।

## स्वाती

अतति निरन्तरं गच्छतीति आतिः तित्तिरि भेदो वा। शोभना आती स्वाती नक्षत्रम्।

– उ०को०, ४/१३१

सु + √अत – सातत्यगमने + इण् प्रत्ययः, धातोर्दीर्घश्च ( अच्यतिभ्यां च – उ०को०, ४/१३१ ) ततः स्त्रियां ङीप् प्रत्ययश्च ।

## स्वादुः

स्वद्यते भोक्तुमभीप्स्यते तत् स्वादुः भोज्यमन्नं वा । – उ०को०, १/१

√स्वाद – आस्वादने + उण् प्रत्ययः, ( कृवापाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१ ) ।

## स्वादुषंसदः

ये स्वादून्यन्नानि भोक्तुं संसीदन्ति न्यायं कर्तुं सभायां वा ते । – ऋ०, ६/७५/९

ये स्वादुषु भोज्याद्यन्नेषु सम्यक् सीदन्ति ते । – यजु०, २९/४६

( प्र०ब०व० ) – स्वादु + सम् + √षद्लृ – विशरणगत्यवसादनेषु + क्विप् प्रत्ययः समुपसर्गस्य षत्वञ्च ।

## स्वाधीः

सुष्ठु समन्ताद्धीयते येन सः । – ऋ०, १/६७/१

यः सुष्ठु समन्तात् ध्यायति सर्वान् पदार्थान् सः । – ऋ०, १/७०/२

सुष्ठु समन्ताद् विद्याऽधीयते यस्मिन् यस्यां वा । – ऋ०, १/७१/८

ये सुष्ठु सम्यक् सर्वेषां कल्याणं ध्यायन्ति ते । – ऋ०, १/७२/८

सुष्ठ्वाधीयते येन सः । – ऋ०, ५/८२/८

ये सुष्ठु समन्तात् ध्यायन्ति ते ।

– ऋ०, ६/२६/७

यः सुष्ठुः ध्यायते तम् । – यजु०, ३३/११

१- सु + आङ् + √ध्यै – चिन्तायां क्विप् प्रत्ययः, धातोः सम्प्रसारणञ्च ( ध्यायतेः सम्प्रसारणञ्च – अष्टा० वा०, ३/२/१७८ ) ।

२- सु + आङ् + √डुधाञ् – धारणपोषणयोः + किः प्रत्ययः ( उपसर्गे घोः किः – अष्टा०, ३/३/९२ ) ततः ङीप् प्रत्ययः ।

## स्वाभूः

सुष्ठु समन्तात् परोपकारे भवन्ति ।

– ऋ०, १/१५१/२

यः स्वयमाभवति तम् । – ऋ०, ५/६/३

ये सुष्ठु समन्तादुत्तमा भवन्ति ते ।

– ऋ०, ७/३०/४

सु + आङ् + √भू – सत्तायां + क्विप् प्रत्ययः ।

## स्वायुजः

याः सुष्ठु समन्ताद्युञ्जन्ति ताः ।

– ऋ०, १/९२/२

( प्र०ब०व० ) – सु + आङ् + √युजिर् – योगे + क्विप् प्रत्ययः ।

## स्वावसुः

स्वेषु यो वसति स्वान् वा वासयति ।

– ऋ०, ५/४४/७

स्व + वसुः ( व्याख्यातः ) एतयोः पदयोः समासः तथा पूर्वपदस्य च दीर्घः ।

## स्वासस्थं

सुष्ठु आसाः प्रक्षिप्तास्तिष्ठन्ति यस्यां सा वेदिस्ताम् । – यजु०, २/२

शोभने आसे उपवेशने तिष्ठतीति तम् ।

– यजु०, २/५

सुष्ठ्वास्ते यस्मिँस्तम् । – यजु०, २८/२१

( द्वि०ए०व० ) – सु + √आस – उपवेशने + कः प्रत्ययः > स्वास + √ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ।

## स्वाहा

सुहुतमाह यया सा । – यजु०, २/१०

सु आहेत्यास्मिन्नर्थे । – यजु०, २/१८

सु आहानया सा । – यजु०, २/२०

सुष्ठु आहुतं करोति यस्यां सा ।

– यजु०, २/२०

स्वकीयं पदार्थं प्रत्याह यस्यां क्रियायां सा । – यजु०, २/२०

सुष्ठु आहुतं हविः करोत्यनया सा ।

– यजु०, २/२१

सुष्ठु आह यस्यां सा । – यजु०, २/२१

स्वं दधात्यनया सा स्वाहा क्रिया ।

– यजु०, २/२१

स्वा स्वकीया हृदयस्था वाग् यदाह तदेव सत्यं वाच्यं नानृतमित्यस्मिन्नर्थे ।

– यजु०, ३/९

सुष्ठु जुहोति गृह्णाति ददाति यया क्रियया तया । – यजु०, ४/६

सुहुतं जुहोतीत्यर्थे । – यजु०, ५/१५

सु + आङ् + √हु – दानादानयोः + डः प्रत्ययः, ततः स्त्रियां टाप् प्रत्ययः । अथवा सु + आङ् + √डुधाञ् – धारणपोषणयोः + क्विप् प्रत्ययः, धातोः हादेशः छान्दसः। अथवा सु + √ब्रूञ् – व्यक्तायां वाचि + णल् प्रत्ययः, धातोराहादेशः ( ब्रुवः पञ्चानामादित आहो ब्रुवः – अष्टा०, ३/४/८४ ) ततः स्त्रियां टाप् प्रत्ययः ।

## स्वाहुतः

यः सुखेनाहूयते । – ऋ०, १/४४/६

सु + आङ् + √हु – दानादानयोः + क्तः प्रत्ययः ।

## स्विष्टकृत्

यः शोभनमिष्टं करोति सः ।

– यजु०, २/९, २१/५८, २८/२२

स्विष्ट + √डुकृञ् –करणे + क्विप् प्रत्ययः, तुगागमश्च ( ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९ )।

## स्रुवः

स्रवति घृतमस्मात् स स्रुवः यज्ञसाधनं वा।

– उ०को०, २/६१

√स्रु( स्रुव ) – गतौ + कः प्रत्ययः ( स्रुवः कः – उ०को०, २/६१ ) ।

## स्रूः

या स्रवति यस्या वा सा स्रूः यज्ञसाधनं वा । – उ०को०, २/५७

✓स्रु – गतौ + क्विप् प्रत्ययः धातोर्दीर्घश्च ( क्विप् वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणञ्च – उ०को०, २/५७ ) ।

## स्रोतः

स्रवन्ति वस्तूनि जलानि वा येन ।

– ऋ०, १/९५/१०

स्रवति चलतीति स्रोतः स्वतो जलक्षरणं वा । – उ०को०, ४/२०२

✓स्रु – गतौ + असुन् प्रत्ययः, धातोः तुडागमश्च ओत्वञ्च ( स्रुरीभ्यां तुट् च – उ०को० ४/२०२ ) ।

## स्रुक्

स्रुतिः स्रवणं गमनं यस्मिन्मार्गे सः ।

– ऋ०, १/४६/११

या स्रवति सा । – ऋ०, ६/११/५

घृतमस्याः स्रवति सा स्रुक् यज्ञोचितद्रव्यं वा । – उ०को०, २/६२

✓स्रु – गतौ + चिक् प्रत्ययः ( चिक् च – उ०को०, २/६२ ) ।

## हंसः

यो हन्ति पापानि सः । – ऋ०, ४/४०/५

यः संहन्ति सर्वान् पदार्थान् स जगदीशवरः । – यजु०, १०/२४

यो हन्ति दुःखानि सः । – यजु०, १९/७४

हन्तीति हंसः निर्लोभः सूर्यः पक्षिभेदोऽश्वभेदः शरीरस्थो वायुर्वा।–उ०को०, ३/६२

✓हन् – हिंसागत्योः + सः प्रत्ययः ( वृतॄवदिवचिवसिहनिकमिकषिभ्यः सः – उ०को०, ३/६२ ) ।

## हंसिका

हन्तीति हंसिका हंसस्त्री वा ।

– उ०को०, ४/१५४

✓हन् –हिंसागत्योः + सिकन् प्रत्ययः ( हनिमशिभ्यां सिकन् – उ०को०, ४/१५४ ) ततः स्त्रियां टाप् प्रत्ययः ।

## हत्नुः

यो हन्ति येन वा स हत्नुः व्याधिः शस्त्रं वा । – उ०को०, ३/३०.

✓हन् – हिंसागत्योः + क्त्नुः प्रत्ययः ( कृहनिभ्यां क्त्नुः – उ०को०, ३/३० ), धातोर्नकारलोपश्च ( अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति – अष्टा०, ६/४/३७ ) ।

## हथः

यो हन्यते येन वा स हथः दुखितः शस्त्रविशेषो वा । – उ०को०, २/२

✓हन् – हिंसागत्योः + क्थन् प्रत्ययः ( हनिकुषिनीरमिकाशिभ्यः क्थन् – उ०को०, २/२ ), धातोर्नकारलोपश्च ( अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति – अष्टा०, ६/४/३७ ) ।

## हनुः

हन्यतेऽनेनेति हनुः कपोलावयवः प्रहरणं मृत्युर्वा । – उ०को०, १/१०

✓हन् – हिंसागत्योः + उः प्रत्ययः ( शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च – उ०को०, १/१० ) ।

## हनूषः

हन्तीति हनूषः दस्युः । – उ०को०, ४/७३

✓हन् – हिंसागत्योः + ऊषन् प्रत्ययः ( ऋहनिभ्यामूषन् – उ०को०, ४/७३ ) ।

## हन्ता

हन्तीति हन्ता चौरो वा ।

– उ०को०, २/९४

✓हन् – हिंसागत्योः + तृन् प्रत्ययः बाहुलकात् (बहुलमन्यत्रापि – उ०को०, २/९४)।

## हन्त्रे

यो दुष्टान् हन्ति तस्मै । – यजु०, १६/४०

(च०ए०व०) – ✓हन् – हिंसागत्योः + तृच् प्रत्ययः।

## हरिः

हरन्ति ये ते किरणाः । – ऋ०, १/१६/१

हरत्युष्णतामिति हरिश्चन्द्रः।–ऋ०, १/९५/१

हरणशीलाः । – ऋ०, १/१६४/४७

यो दुःखं हरति तस्मै । – यजु०, १७/११

हरते वहते यथायोग्यं गृहाश्रमव्यवहारान् सः । – यजु०, ८/११

हरतीति हरिः सर्पोमण्डूकोऽश्वः सिंहः सूर्यो वा । – उ०को०, ४/११९

हरतीति हरिः पथिकः संसृतिर्वा ।

– उ०को०, ४/१२५

✓हृञ् – हरणे + इन् प्रत्ययः (हृपिषिरुहिवृतिविदिदिहृदिकीर्त्तिभ्यश्च – उ०को०, ४/११९)।

## हरिणः

हरतीति हरिणः मृगः पाण्डुवर्णो वा ।

– उ०को०, २/४६

✓हृञ् – हरणे + इनच् प्रत्ययः (श्यास्त्याहृञ्विभ्य इनच् – उ०को०, २/४६)।

## हरितः

हरन्ति यास्ता ज्वालाः । – ऋ०, १/१४/१२

यैः किरणैः रसान् हरन्ति त आदित्यरश्मयः । – ऋ०, १/५०/८

ह्रियन्ते पदार्थाः यासु ताः दिशः ।

– यजु०, ३३/३७

हरतीति हरितः वर्णभेदो वा ।

– उ०को०, ३/९३

✓हृञ् – हरणे + इतन् प्रत्ययः (हृश्याभ्यामितन् – उ०को०, ३/९३)।

## हरित्

आहरति गृह्णाति द्रव्यमिति हरित् दिक् वर्णस्तृणमश्वविशेषो वा ।– उ०को०, १/९७

✓हृञ् – हरणे + इतिः प्रत्ययः (हृसृरुहियुषिभ्य इतिः – उ०को०, १/९७)।

## हरिद्रवेषु

ये हरन्ति द्रवन्ति द्रावयन्ति च तेषामेतेषु।

– ऋ०, १/१२/५०

(स०ब०व०) – हरि + ✓द्रु – गतौ + रप् प्रत्ययः (ऋदोरप् – अष्टा०, ३/३/५७) एतयोः पदयोः समासः ।

## हरिद्रुः

हरिणाऽश्वेन वा द्रवति गच्छतीति हरिद्रुः दारु हरिद्रा वा । – उ०को०, १/३४

हरि + ✓द्रु – गतौ + कुः प्रत्ययः (हरिमितयोर्द्रुवः – उ०को०, १/३४)।

## हरिधायसं

या हरीन् किरणान् दधाति ताम् ।

– ऋ०, ३/४४/३

(द्वि०ए०व०) – हरि + ✓डुधाञ् – धारणपोषणयोः + असुन् प्रत्ययः ।

## हरिप्रियः

यो हरीन् हरणशीलान् प्रीणाति तत्सम्बुद्धौ।

– ऋ०, ३/४१/८

हरि + प्रियः ( व्याख्यातः ) एतयोः पदयोः समासः ।

## हरिमा

**हरित स हरिमा कालो वा ।**

– उ०को०, ४/१४८

✓हृञ् – हरणे + इमनिच् प्रत्ययः ( हृभृधृसृस्तृश्रृभ्य इमनिच् – उ०को०, ४/१४८ ) ।

## हरिशयाः

**हरिषु सूर्यादिष्वश्वादिषु वा शेते सा ।**

– यजु०, ५/८

हरि + ✓शीङ् – शये + अच् प्रत्ययः ( अधिकरणे शेते – अष्टा०, ३/२/१५ ) ततः स्त्रियां टाप् प्रत्ययः।

## हरिष्ठाः

**यो हरौ विषहरणे तिष्ठति सः ।**

– ऋ०, १/१११/१०

**हरयो मुनयस्तिष्ठन्ति यस्मिँस्तत् ।**

– ऋ०, ३/४९/२

हरि + ✓ष्ठा – गतिनिवृत्तौ + क्विप् प्रत्ययः ।

## हर्म्येष्ठाः

**ये हर्म्ये तिष्ठन्ति ते । – ऋ०, ७/५६/१६**

( प्र०ब०व० ) – हर्म्य ( गृहनाम ) + ✓ष्ठा – गतिनिवृत्तौ + कः प्रत्ययः ।

## हर्षयित्नुः

**हर्षयतीति हर्षयित्नुः हर्षयिता सुवर्णं वा।**

– उ०को०, ३/२९

✓हृष – तुष्टौ + इत्नुच् प्रत्ययः ( स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् – उ०को०, ३/२९ ), इत्नुच्परतो णेरयादेशश्च ( अयामन्ताल्वाय्येत्न्विष्णुषु – अष्टा०, ६/४/५५ ) ।

## हर्षुलः

**हृष्यति तुष्टो भवतीति हर्षुलः मृगः कामो वा । – उ०को०, १/९६**

✓हृष – तुष्टौ + उलच् प्रत्ययः ( हृषेरुलच् – उ०को०, १/९६ ) ।

## हर्य्यतः

**हर्यति गच्छतीति हर्य्यतः अश्वो वा ।**

– उ०को०, ३/११०

✓हर्य – गतिकान्त्योः + अतच् प्रत्ययः ( भृमृदृशियजिपर्विपच्यमितमिनमिहर्य्यिभ्योऽतच् – उ०को०, ३/११० ) ।

## हलिः

**हलति येन विलिखतीति हलिः कृषीवलः कृषिसाधनं वा । – उ०को०, ४/११८**

✓हल – विलेखने + इन् ( सर्वधातुभ्यो इन् – उ०को०, ४/११८ ) ।

## हवं

**जुहोति ददात्याददाति यस्मिन् तं होमशिल्पं व्यवहारम् । – ऋ०, १/१७/२**

✓हु – दानादानयोः + अप् प्रत्ययः ( ऋदोरप् – अष्टा०, ३/३/५७ ) ।

## हवनश्रुत्

**हवनमाह्वानं श्रृणोतीति तम्।–ऋ०, १/१०/१०**

**यो हवनं दानमादानं श्रृणोति सः ।**

– ऋ०, २/३३/१५

**ये हवनमध्ययनं शृण्वन्ति ते ।**

– ऋ०, ६/५२/१०

**ये हवनानि ग्राह्याणि शास्त्राणि शृण्वन्ति ते । – यजु०, ९/१७**

✓हु – दानादानयोः + ल्युट् प्रत्ययः > हवन + ✓श्रु – श्रवणे + क्विप् प्रत्ययः तुगागमश्च ।

## हवनस्यदं

**येन हवनं पन्थानं स्यन्दते तम् ।**

– ऋ०, १/५२/१

(द्वि०ए०व०) – हवन + ✓स्यन्दू – प्रस्रवणे + क्विप् प्रत्ययः ।

## हविः

हूयते यत्तत् हविः होमयोग्यं वस्तु वा ।
– उ०को०, २/१०८

✓हु – दानादानयोः + इसिः प्रत्ययः (अर्चिशुचिहुसृ-पिछादिछर्दिभ्य इसिः – उ०को०, २/१०८) ।

## हविर्धानं

हवींषि ग्राह्याणि देयानि वा संस्कृतानि वस्तूनि धीयन्ते यस्मिन् । – यजु०, १९/१८

हविष् + ✓डुधाञ् – धारणपोषणयोः + ल्युट् प्रत्ययः।

## हविर्भुजः

ये हविर्होतुमत्तुमर्हं भुञ्जते भोजयन्ति वा ते हविर्भुजः । – स०प्र०(चतुर्थसमुल्लासः)

(प्र०ब०व०) – हविः + ✓भुज – पालनाभ्य-वहारयोः + क्विप् प्रत्ययः ।

## हविष्कृत्

हविर्भिः क्रियते तम् । – ऋ०, १/१३/३

हविः करोति अनया वेदवाण्या सा हविष्कृद्वाक् । – यजु०, १/१५

हविष् + ✓डुकृञ् – करणे + क्विप् प्रत्ययः, तुगागमश्च (ह्रस्वस्य पिति कृति तुक् – अष्टा०, ६/१/६९) ।

## हव्यदातिं

यो हव्यानि ददाति तम् । – ऋ०, ६/१/९

✓हु – दानादानयोः + यत् प्रत्ययः (अचो यत् – अष्टा०, ३/१/९७) > हव्य + ✓डुदाञ् – दाने + क्तिन् प्रत्ययः ।

## हव्यवाट्

होतुं दातुमत्तुमादातुं च योग्यानि ददाति वा यानादीनि वस्तूनीतस्ततो वहति प्रापयति तम् । – ऋ०, १/१२/२

यो हुतं द्रव्यं देशान्तरं वहति प्रापयति सः। – ऋ०, १/१२/६

हव्यान्यादातुमर्हाणि वसूनि वहति प्राप्नोति तत्सम्बुद्धौ सभ्यजन । – ऋ०, १/३६/१०

यो हव्यानि ग्राह्यदातव्यानि हुतानि द्रव्यानि यानानि वा वहति प्राप्नोति सः ।
– ऋ०, १/४४/२

यो हव्यानि होतुं दातुमर्हाणि द्रव्यानि सुखसाधकानि वहति प्रापयति तत्सम्बुद्धौ।
– ऋ०, १/४४/५

यो हव्यानि वहति प्राप्नोति तम् ।
– ऋ०, १/४४/८

यो ग्राह्यदातव्यान् पदार्थान् वहति प्रापयति सः । – ऋ०, १/६७/१

यो हव्यं वहति तम् । – ऋ०, २/४१/१९

यो हव्यं वहति प्राप्नोति सः ।
– ऋ०, ३/२/२

यो हव्यं हविर्वहति तम् । – ऋ०, ३/५/१०

यो हव्यान् दातुमर्हाणि वस्तूनि वहति प्राप्नोति । – ऋ०, ३/११/२

यो हव्यानि प्राप्तव्यानि वस्तूनि वहति प्रापयति सः । – ऋ०, ३/२७/५

ये हव्यं वहन्ति ते । – ऋ०, ३/४३/१

यो हव्यान्यादातुमर्हाणि वहति गमयति प्रापयति वा तम् । – ऋ०, ४/८/१

यो हव्यं दातव्यं वहति प्राप्नोति ।

– ऋ०, ५/६/५

यो हव्यान्यादातुमर्हाणि यानानि वहति तम् । – ऋ०, ५/८/६

यो हव्यानि वहति सः । – ऋ०, ५/२५/४

यो हव्यान्यादातुमर्हाणि वहति तत् ।

– ऋ०, ६/१५/८

यो हव्यानि हुतानि द्रव्याणि वहति ।

– ऋ०, ६/१६/२३

यो हव्यानि वहति । – ऋ०, ७/१०/३

यो हव्यान्यादातुमर्हाणि वहति प्राप्नोति ।

– ऋ०, ७/११/४

यो हव्यानि दातुमर्हाणि वहति प्राप्नोति सः । – ऋ०, ७/१५/६

यो हव्यानि हुतानि द्रव्याणि वहतित-द्वद्वर्त्तमानम् । – ऋ०, ७/१७/६

यथाऽग्निर्हव्यानि वहति तथा।–यजु०, ५/३१

यो हव्यान् दातुमादातुं च योग्यान् रसान् वहति तम् । – यजु०, १५/२३

यो हव्यं वहति देशान्तरं प्रापयति सः ।

– यजु०, २२/१६

यो हव्यानि अत्तुमर्हाणि वहति प्रापयति तम् । – यजु०, २२/१७

यो हव्यानि ग्रहीतुं योग्यानि वस्तूनि वहति प्रापयति । – यजु०, ३४/९

ग्रहीतुं योग्यं शुभगुणमयं विज्ञानं हव्यं, तद् वहति प्रापयतीति तं ।

– ऋ० भा० भू० ( पञ्चमहायज्ञविषयः )

हव्य + ✓वह – प्रापणे + ण्विः प्रत्ययः ( वहश्च – अष्टा०, ३/२/६४ ) ।

## हव्यसूदः

या हव्यानि दुग्धादीनि क्षरन्ति ताः ।

– ऋ०, १/९३/१२

यो हव्यानि सूदयति क्षरयति सः ।

– ऋ०, ४/५०/५

यथा हव्यानि सूदते तथा । – यजु०, ५/३२

हव्य + ✓षूद – क्षरणे + अच् प्रत्ययः ।

## हव्यात्

यो हव्यान्यत्ति सः । – ऋ०, ७/३४/१४

हव्य + ✓अद् – भक्षणे + विट् प्रत्ययः ( अदोऽनन्ने – अष्टा०, ३/२/६८ ) ।

## हस्कारात्

हसनं हस्तत्करोति येन तस्मात् ।

– ऋ०, १/२३/१२

( पं०ए०व० ) – ✓हस – हसने + ✓डुकृञ् – करणे + अण् प्रत्ययः ।

## हस्तः

हसतीति हस्तः नक्षत्रं करो वा ।

– उ०को०, ३/८६

✓हसे – हसने + तन् प्रत्ययः ( हसिमृग्रिण्वा-मिदमिलूपूधूर्विभ्यस्तन् - उ०को०, ३/८६ ) ।

## हस्तघ्नः

यो हस्ताभ्यां हन्ति । – ऋ०, ६/७५/१४

हस्त + ✓हन् – हिंसागत्योः + कः प्रत्ययः धातोरुपधालोपः ( गमहनजनखनघसां लोपः क्ङित्यनङि – अष्टा०, ६/४/९८ ) ततः हस्य कुत्वञ्च ( हो हन्तेर्ञ्णिन्नेषु – अष्टा०, ७/३/५४ ) ।

## हस्रः

हसतीति हस्रः मूर्खो वा । – उ०को०, २/१३

✓हसे – हसने + रक् प्रत्ययः ( स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् – उ०को०, २/१३ )।

## हानिः

हीयते जहाति वा स हानिः अपचयो वा। – उ०को०, ४/५१

✓ओहाक् – त्यागे + निः प्रत्ययः ( वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् – उ०को०, ४/५१ ) ।

## हान्त्रं

हन्यते तत् हान्त्रम् मरणं वा ।

– उ०को०, ४/१६०

✓हन् – हिंसागत्योः + ष्ट्रन् प्रत्ययः, धातोर्वृद्धिश्च ( भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च – उ०को०, ४/१६० ) ।

## हारिः

हरतीति हारिः पथिकसंसृतिर्वा ।

– उ०को०, ४/१२५

✓हृञ् – हरणे + इञ् प्रत्ययः बाहुलकात् ( वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् – उ०को०, ४/१२५ ) ।

## हारिद्रवेषु

ये हरन्ति द्रवन्ति द्रावयन्ति च तेषामेतेषु।

– ऋ०, १/१२/५०

( स०ब०व० ) – हरिद्रवेषु ( व्याख्यातः ) + अण् प्रत्ययः ( तस्येदम् – अष्टा०, ४/३/१२० ) ।

## हारियोजनं

यो हरीन् तुरङ्गानग्न्यादीन् वा युनक्ति स एव तत्सम्बुद्धौ । – ऋ०, १/६१/१६

हरयोऽश्वा युज्यन्ते यस्मिंस्तत् ।

– ऋ०, १/८२/४

हरीन् योजयति यः सारथिः स हरियोजनः हरियोजन, एवं हारियोजनस्तद्वत् ।

– यजु०, ८/११

हरि + ✓युजिर् – योगे + ल्युट् प्रत्ययः > हरियोजनं ततः अण् प्रत्ययः स्वार्थे ।

## हालुः

हल्यते छिद्यतेऽन्नमनेनेति हालुः दन्तो वा।

– उ०को०, १/१

✓हल – विलेखने + उण् प्रत्ययः बाहुलकात्, धातोर्दीर्घश्च ( कृवापाजिमिस्वदिसाध्यशूभ्य उण् – उ०को०, १/१ ) ।

## हासाः

हीयते हीनो भवतीति हासाः चन्द्रमा वा।

– उ०को०, ४/२२१

✓ओहाक् – त्यागे + असुन् प्रत्ययः, सुडागमश्च ( वहिहाधाञ्भ्यश्छन्दसि – उ०को०, ४/२२१ ) ।

## हिंसीरः

हिनस्तीति हिंसीरः व्याघ्रो दुष्टो वा ।

– उ०को०, ५/१८

✓हिसि – हिंसाथां + ईरन् प्रत्ययः धातोर्नुमागमश्च ( हिंसेरीरन्नीरचौ – उ०को०, ५/१८ ) ।

## हिङ्कराय

यो हिं करोति तस्मै । – यजु०, २२/७

( च०ए०व० ) – हिङ् ( हिङ्कारनाम ) + ✓डुकृञ् – करणे + अण् प्रत्ययः ।

## हिङ्गुः

स्वगन्धेनान्यगन्धान् हन्तीति हिङ्गुः वणिग्द्रव्यम् । – उ०को०, १/३६

✓हन् – हिंसागत्योः + कुः प्रत्ययः बाहुलकात् ( खरुशङ्कुपीयुनीलङ्गुलिगु – उ०को०, १/३६ ) धातोरुपधाया इत्वं गुगागमश्चेति ।

## हिण्डीरः

**हिण्डत इतस्ततो गच्छतीति हिण्डीरः समुद्रफेनो दाडिमो वा । – उ०को०, ४/३०**

✓हिडि – गत्यनादरयोः + ईरन् प्रत्ययः धातोर्नुमागमश्च (कॄशॄपॄकटिपटिशौटिभ्य ईरन् – उ०को०, ४/३०)।

## हिताः

**हिन्वन्ति गच्छन्ति यास्ताः । – ऋ०, १/५४/१०**

(प्र०ब०व०) – ✓हि-गतिवृद्धौ च + क्तः प्रत्ययः > हितः ततः स्त्रियां टाप् प्रत्ययः ।

## हिमं

**हन्त्युष्णं दुर्गन्धिं वा तत् हिमं, हेमन्त ऋतुस्तुषारश्चन्दनं वा । – उ०को०, १/१४७**

✓हन् – हिंसागत्योः + मक् प्रत्ययः, धातोर्हि आदेशः (हन्तेर्हि – उ०को०, १/१४७) ।

## हिरण्यं

**हर्यते काम्यते तत् हिरण्यं सुवर्णं वा । – उ०को०, ५/४४**

✓हर्य – गतिकान्त्योः + कन्यन् प्रत्ययः, धातोर्हिरादेशः (हर्यतेः कन्यन् हिर च – उ०को०, ५/४४) ।

## हिरण्यदाः

**ये वायवो हिरण्यं तेजो ददति ते । – ऋ०, २/३५/१०**

(प्र०ब०व०) – हिरण्य + ✓डुदाञ् – दाने + कः प्रत्ययः ।

## हिरण्यवर्णः

**यो हिरण्यं वृणोति तत्सम्बुद्धौ । – ऋ०, ५/३८/२**

हिरण्य + वर्णः (व्याख्यातः) एतयोः पदयोः समासः।

## हिरण्यनिर्णिक्

**या हिरण्येन निर्णेनेक्ति पुष्णाति सा । – ऋ०, १/१६७/३**

**य पृथिव्या हिरण्यमग्नेस्तेजश्च नितरां नेनेक्ति । – ऋ०, ५/६२/७**

हिरण्य + निर् + ✓णिजिर् – शौचपोषणयोः + क्विप् प्रत्ययः ।

## हिरण्यसंदृक्

**यो हिरण्यं तेजः सम्यक् दर्शयति । – ऋ०, २/३५/१०**

हिरण्य + सम् + ✓दृशिर् – प्रेक्षणे + क्विप् प्रत्ययः।

## हृदयं

**हरति विषयानिति हृदयं मनो वा । – उ०को०, ४/१००**

✓हृञ् – हरणे + कयन् प्रत्ययः धातोर्दुगागमश्च (वृह्रो षुग्दुकौ च – उ०को०, ४/१००) ।

## हृदयाविधः

**हृदयं विध्यति तस्याधर्मस्याधार्मिकस्य शत्रोर्वा । – ऋ०, १/२४/९**

**यो हृदयमाविध्यति सः । – यजु०, ८/२३**

हृदय + ✓व्यध – ताडने + क्विप् प्रत्ययः, धातोः सम्प्रसारणं (ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च – अष्टा०, ६/१/१६) ततः पूर्वस्य पदस्य च दीर्घः (नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ – अष्टा०, ६/३/११५) ।

## हृदिस्पृक्

**यो हृद्यन्तः करणे सुखं स्पर्शयति सः । – ऋ०, १/१६/७**

**यो हृद्यात्मनि स्पृशति तम् । – यजु०, १५/४४**

हृदय > हृद् आदेशः (पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु – अष्टा०, ६/१/६२) > हृदि (स०ए०व०) + ✓स्पृश – संस्पर्शने + क्विप् प्रत्ययः, अत्र सप्तम्याः अलुक् (हृद्द्युभ्यां ङेः – अष्टा०वा०, ६/३/९) ।

## हृदयौपेशेन

**यो हृदये आ समन्तादुप शेते स हृदयौपशो**

